In the Kat.dvāra the question as to how many persons can acquire it is discussed ( 3277-87).

In the Antaradvāra the question as to how much time required for reattaining it once having fallen from it is discussed (3281-89).

In the Avirahadvāra there occurs a discussion regarding the time which the mundane souls have without Sāmāyika ( 3290-91 ).

In the Bhavadvāra it is discussed as to for how many lives one can continuously retain it ( 3292 ).

In the Ākarṣadvāra there has been raised a question as to how many times one should perform it again and again in one life or in many lives in order to relish it. At this occasion an illustration given is that of a man taking a particular number of morsels for relishing the food. ( 3293-94 ).

In the Sparśanadvāra the question as to how many space-points of Loka are touched by a soul possessed of Sāmāyika (3295-96) is discussed.

In the Niruktidvāra the term 'sāmāyika' is etymologically explained. Here it is pointed out that one and the same term gives different senses when it assumes different genders and case-endings. Moreover, synonyms of the term 'sāmāyika' are enumerated and at the same time different types or divisions of the Sāmāyika are discussed ( 3297-3329). While giving an etymological meaning of the term 'Sāmāyika' Āc. Jinabhadra says that 'sama' means freedom from attachment and aversion and 'aya,' which is equivalent to 'ayana'=(gamana), means attainment. Thus the term 'Samaya' means the attainment of the state characterised by freedom from attachment and aversion. And 'Samaya' and 'Sāmāyika' are identical. The term 'samaya' means samyak (right) aya (attainment or acquisition). The soul having the attitude of Universal love (=samaya=samyak gamana= dayā) towards all creatures is itself Sāmāyika (3305-3306).

In the list of the synonyms of the term 'sāmāyika' are included even the terms 'samāsa' and 'saṅkṣepa' (3300). This is so because the Sāmāyika is the essence of the 14 Pūrvas (3309). In other words, it constitutes the piṇḍārtha of the 14 Pūrvas. The special qualifications of the eight persons entitled to perform the eight different types of Sāmāyika-suggested by eight synonyms of the term 'sāmāyika' - are described here in due order (3312-3329).

With this Niruktidvāra ends the Upodghātaniryuki ( 3329 ).[59] This point is suggested by the Ācārya in the beginning of the Sūtrasparśika-

59. Anugama is the fourth entrance (dvāra) to exposition (anuyoga). This anugama has two main divisions. viz. Niryukti-anugama and Sūtrānugama (966). This Niryukti-anugama is again divided into Nikṣepa- Upodghāta- and Sūtra-sparśikaniryukti-(967). And we are to understand that out of these three the Upodghātaniryukti-anugama ends here.

niryukti (3330). The term 'sūtrasparśikaniryukti' means the exposition of the sūtras. Hence now what is in hand is the exposition of the sūtras contained in the Āvaśyakasūtra. Āc. Jinabhadra explicitly states that maṅgala in the form of the Pañcanamaskāra should be regarded as a sūtra. Hence after having expounded the Pañcanamaskāra in the beginning, he expounds the sūtras related with the Sāmāyika (3331-3334). The exposition of the Pañcanamaskāra is detailed and extensive. Hence like the Gaṇadharavāda, this portion too has secured the status of an independent treatise (3335- ). The pañcanamaskāra has been expounded here through eleven dvāras beginning with the Utpattidvāra (3335).[60] The summary of this portion of the text has been given by Pt. Sukhlalji in his 'Pañcapratikramana'. Hence it is not necessary to repeat it.

After Namaskāraniryukti there comes the Sāmāyikaniryukti wherein each and every pada of the text of the Sāmāyika is explained through the methods of Nikṣepa, etc. Here having pointed out the identity of an agent, an object and an instrument an evidence of the Scriptural text is given in support of the tenet that soul itself is sāmāyika. It is interesting to notice varied etymologies of the term 'bhante'. Again, the different etymological explanations of the term 'sāmāyika' are also given here. But all the etymologies ultimately establish that the meaning of the term 'sāmāyika' is nothing but mental equanimity. Having explained the Sāmāyika the author states that the Bhāṣya on the Sāmāyika is fundamental one and the person who masters it gains the power of understanding and interpreting any Sūtra.

The Viśeṣavaśyakabhāṣya is really an important philosophical work which every serious student of Indian philosophy should study critically.

Dept. of East Asian Studies
University of Toronto
Toronto (Canada)
12-12-68

Dalsukh Malvania

60. The problem of the authorship of the Pañcanamaskārasūtra has been treated of in the Introduction to the Prajñāpanāsūtra, to be published very shortly by Shri Mahavira Jaina Vidyalaya, Bombay. Therein the Śvetāmbara and the Digambara views are discussed. Hence we refrain from discussing this problem here.

# विषयानुक्रमः ।

[प्रथमो भागः]

## १ पीठिका-अनुयोगद्वारावतारः । गा० १-१०११

[मङ्गलवादः १-७८]



## २ सामायिकोपोद्घातनिर्युक्तिः १०१२-३३२९

## ३ सामायिकसूत्रस्पर्शिकनिर्युक्तौ नमस्कारनिर्युक्तिः ३३३०-४०२०

[नमस्कारनिर्युक्तिः ३३३०-४०२०]



## ४ सामायिकसूत्रनिर्युक्तिः ४०२१-४३०९

श्रीजिनभद्रगणिक्षमाश्रमणविरचितं

# विशेषावश्यकभाष्यं

कोट्याचार्यवादिगणिरचितविवरणसहितम् ।

## तृतीयो भागः ।

सव्वाणुयोगमूलं भासं सामाइयस्स णाऊण ॥
होति परिकम्मियमती जोग्गो सेसाणुयगोस्स ॥४३२९॥

—विशेषावश्यकभाष्य ।

॥ ॐ नमो वीतरागाय ॥

श्रीकोट्याचार्यवादिगणिकृतसंपूर्तिरूपेण विवरणेन सहितं

श्रीजिनभद्रगणिक्षमाश्रमणविरचितं

# विशेषावश्यकभाष्यम् ।

तृतीयो भागः ॥

कस्य ? इति षष्ठीसम्बन्धमात्रे तच्चतुर्विधं सामायिकं यस्य यस्य भवति तदाख्यायते—

जस्स सामाणियो अप्पा संजमे णियमे तवे ।
तस्स सामाइयं होति इति केवलिभासितं ॥५८०॥३१६२॥

जो समो सव्वभूतेसु तसेसु थावरेसु य ।
तस्स सामाइयं होति इति[2] केवलिभासितं ॥५८१॥३१६३॥

सावज्जजोगं[3]परि[4]वज्जणट्ठा, सामाइयं केवलियं पसत्थं ।
गिहत्थधम्मा परमं ति णच्चा, कुज्जा बुधो आतहितं परत्था ॥५८२॥३१६४॥

जस्स गाहा । जो समो । सावज्जजोगमिति । सामानिकः—सन्निहितः—सन्नियुक्त आत्मा संयमे मूलगुणेपु, नियमे उत्तरगुणेपु, तपसि अनशनादिबहुप्रकारे सर्वकालव्यापारात् प्रमादवर्जनं यस्यैवंविधं तस्य जीवस्य सामायिकं सम्पूर्णम् । 'इति'शब्दः सारप्रदर्शनार्थः । एतावते(त्) केवलिभापितम् । 'भूत'शब्दो जीवपर्यायवचनः । त्रस-स्थावरेपु-जीवेष्वहिंसं(सां) प्रति यः समः, तच्च सर्वसावद्ययोगपरिरक्षणार्थम् ॥३१६२-६४॥

केवलियं पडिपुण्णं परमं जेट्ठं गिहत्थधम्मातो ।
तं हितमितो परत्था सिवं परं वा तदत्था वा ॥३१६५॥

कैवलिकम् परिपूर्णम्, गृहस्थधर्मात् परमम्—ज्येष्टम्, तद् आत्महितं परत्र परलोके । अथवा [10]शिवं परं तस्मिन् परत्र, तदर्थं वा परार्थम् ॥३१६५॥

गिहिणा वि सव्ववज्जं दुविधं तिविधेण छिण्णकालं तं ।
कातव्वमाह सव्वे को दोसो भण्णतेऽणुमती ॥३१६६॥

एतत् साधुना ज्येष्ठधर्मस्थितेन कार्यम्, तस्मात् न्यूनेनापि सर्ववर्जं द्विविधं त्रिविधेन परिछिन्नकालम् 'यावत् योगं समापयामि' 'साधुसमीपे वा यावत्तिष्ठामि' इत्यादि कर्त्तव्यम् ।

अत्राह—गृहिणः सर्वप्रत्याख्यानं कुर्वतः को दोषो यन्निषिध्यते सर्ववर्जम् ? इति । उच्यते—अनुमतिरव्यवच्छिन्ना तस्य । तस्माद् द्विविधमेव सम्भवति कृत-कारित-प्रत्याख्यानम्, नानुमतिप्रत्याख्यानम् । दोषश्चायं प्रत्यवायकरः ॥३१६६॥

---

१ ईई हे त । २ इई हे त । ३ °गाप° को म हा दी । ४ °रिरक्ख° को हे त । ५ °त्थं दी हा । ६ °गवि समा°—इति प्रतौ । ७ समयः इति प्रतौ । ८ °तम° त । ९ त्थं हे त । १० शिपं—इति प्रतौ ।

**सव्वं ति भाणिनूणं विरती खलु जस्स सव्विया णत्थि ।**
**सो सव्वविरतिवाती चुक्कति[1] सव्वं च देसं च ॥५८३॥३१६७॥**
**आहाणुमतिं[2] वे[3] ण सो[२०८-द्वि०]किं पच्चक्खाति[4] भण्णति ण सत्तो ।**
**पुव्वप्पयुत्तसावज्जकम्मसातिज्जणं मोत्तुं ॥३१६८॥**

**सव्वं ति भाणिनूणं । आहाणुमतिं व ण सो ।** अनुमतिमप्यसौ किमिति न प्रत्याचष्टे ? आह—यस्मादसौ पूर्वप्रयुक्तसावद्यकर्म मोक्तुं न शक्नोति । सत्—प्रियम्—अनुकूलम् । सति भवं सातं सुखमुच्यते । सातमिच्छत्यात्मनः सातीयति—सुखायते इत्यर्थः । एवंविधो गृही महासर्वप्रत्याख्यानं कर्तुमशक्तः, सावद्ययोगमनुमन्यमानत्वात्, स्वयं सावद्ययोगानुष्ठायिवत् ॥३१६७–६८॥

नन्वेवमागमविरोधः —

**णणु तिविधं तिविधेणं[5] पच्चक्खाणं सुतम्मि गिहिणो वि ।**
**तं थूलवधादीणं ण सव्वसावज्जजोगाणं ॥३१६९॥**

**णणु तिविधं तिविधेणं** इत्यादि । सत्यम्, आगमे श्रूयते त्रिविधं त्रिविधेन गृहिणः प्रत्याख्यानं स्थूलप्राणातिपातप्रभृतीनां स्थूलसावद्यानाम्, न पुनः सर्वसावद्ययोगानाम् तस्मादेकदेशविरतौ 'त्रिविधप्रत्याख्यानमागमेऽभिहितम्' इति नागमबाधा ॥३१६९॥

तथा च दर्शयति—

**जति किंचिदप्पयोयणमप्पप्पं वा विसेसिंयं वत्थुं ।**
**पच्चक्खेज्ज ण दोसो सयंभुरवणातिमच्छो व्व ॥३१७०॥**

**जति किंचि०** गाहा । यदि किञ्चिदप्रयोजनं वालि(लु)काभक्षणादि काकमांसादि वा, अप्राप्यं वा स्वयम्भुरमणसमुद्रमत्स्यभक्षणादि, तत्स्यु(त्सु)करमिति त्रिविधग्रहणमपि तत्र युज्यते ॥३१७०॥

**जो वा णिक्खविनुमणो पडिमं पुत्तातिसंततिणिमित्तं ।**
**पडिवज्जेज्ज तओ वा करेज्ज तिविधं पि तिविधेणं ॥३१७१॥**

**जो वा** गाहा । गतार्था ॥३१७१॥

**जो पुण पुव्वारद्धाणुज्झितसावज्जकम्मसंताणो ।**
**तदणुमतिपरिणद्धिं सो ण तरति सहसा णियत्तेतुं ॥३१७२॥**

**जो पुण** गाहा । साध्यसाधनानुगमवचनम् ॥३१७२॥

---

१ °वि देसं च सव्वं च ॥ त । २ °मई हे, त । ३ पि को, वि त । ४ °ति सिमं° को हे त । ५ °ण वि पं° जे । ६ °सोऽव° जे । ७ °सितुं जे । ८ °भूरमणा° को हे, °रमणा° त । ९ °क्खमि° को हे ।

सामाइयम्मि तु कते सवणो[1] इव सावओ भवति जम्हा।
एतेण कारणेणं बहुसो सामाइयं कुज्जा ॥५८४॥३१७३[2]॥
जो ण वि वट्टति रागे ण वि दोसे दोण्ह मज्झयारम्मि।
सो होति तु मज्झत्थो सेसा सव्वे अमज्झत्था ॥५८५॥३१७४॥

सामाइयम्मि तु। जो ण वि वट्टति ॥३१७३-७४॥

॥ द्वारं कस्येति गतम् ॥

कहिं ति चतुर्विधसामायिकस्य द्वयोस्त्रयाणां वा संभव इति ?। तत्र द्वाराणि—

खेत्त दिसि[3] काल गति[4] भविय सण्णि ऊसास[5] दिट्ठि[6] आहारे।
पज्जत्त सुत्त जम्म ठिति वेय[7] सण्णा कसायाऽऽऊ[8] [२०९-प्र०]॥५८६॥३१७५।
णाणे जोगुवयोगे सरीर संठाण संघतण माणे।
लेस्सा परिणामे[9] वेतणा[10] समुग्घातकम्मे य ॥५८७॥३१७६॥
णिव्वेढण[11] [12]उव्वट्टो आसवकरणे[13] तधा अलंकारे।
सयणासण[14] ठाणत्थे[15] चक्कम्मंते[16] य किं कहि तं॥दारगाधा२॥५८८॥३१७७॥

खेत्त दिस काल० इत्यादिद्वाराणि षट्त्रिंशदनुगन्तव्यानि ॥३१७५-७७॥

सम्म-सुताणं लंभो[17] उड्ढे[18] य[19] अधे[20] य तिरियलोगे य।
विरती मणुस्सलोए विरताविरती य तिरिएसु ॥५८९॥३१७८॥
पुव्वपडिवण्णया[21] पुण तीसु वि लोएसु णियमतो तिण्हं।
चरणस्स दोसु णियमा भयणिज्जा उड्ढलोगम्मि ॥५९०॥३१७९॥ दारं॥

सम्मसुताणं लंभो। पुव्वपडिवण्णया पुण। ऊर्ध्वलोके मेर्वादौ, देवलोकेषु च जीवाः सम्यग्दर्शनं प्रतिपद्यमानाः तत्सहभावितया सम्यक्श्रुतमपि प्रतिपद्यन्ते। श्रुतज्ञानं तेषां सदा सन्निहितम्[22], सम्यग्दर्शनसद्भावात् श्रुतं भवतीति। एवं तिर्यग्-

---

१ समणो दी हा को हे म। २ ३१७३ गाथाया अनन्तरमेषा गाथा अधिका—जीवो पमायबहुलो बहुसो वि अ बहुविहेसु अत्थेसु। एएण कारणेणं बहुसो सामाइयं कुज्जा॥ दी हा म। ३ °दिसि° को हे त, °दिसा° दी हा म। ४ °गई° हे त। ५ °ऊसा° को हे त दी हा म। ६ °ट्ठिमाहा° को हे त दी हा म। ७ °वेदे जे। ८ °याउं को हे, °याओ त, °यायू जे। ९ °रिमाणो जे, °माणं हे। १० °णा य स° हे त। ११ °ढुण हे °ढ्ण त °व्विढुण दी °विढ्ण म। १२ °मुव्वट्ट को हे त दी हा म। १३ °रणं हे। १४ °णवाण° जे। १५ °णट्ठे को °ठाणट्ठे हे। १६ चंकंमं° हे, चंकम्मं° को दी हा म। चक्कम्मेते त। १७ लाभो को हे। १८ उड्ढं मि अ को, उड्ढं हे त दी हा म। १९ व त, च दी हा म। २० अहो म। २१ °न्नतो म। २२ °तं दर्शनाभावात् —इति प्रतौ।

लोके संज्ञिनः पञ्चेन्द्रिया बहुप्रकाराः प्रतिपद्यन्ते। अधोलोके महाविदेहाधोलौकिकग्रामेषु नरकेषु च। विरतिः सर्वविरतिस्तु मनुष्यलोक एव। ते चाधोलोक-तिर्यग्लोकवर्तिनो मनुष्याः लभन्ते। विरत्यविरतिः श्रावकधर्मः, तां मनुष्यास्तिर्यञ्चश्च प्रतिपद्यन्ते, तिर्यग्लोके च। पूर्वप्रपन्नक(ः,कानां) पुनस्तृ(त्रि)तयमेतत् सम्यक्त्व-श्रुत-विरतिसामायिकानां(नि) त्रिष्वपि लोकेषु सम्भवन्ति। ऊर्ध्वलोके मेरुचैत्यवन्दनं कुर्वन्ति विद्याधरश्रावकाः। सर्वविरतिसामायिकस्य चरणपूर्वप्रतिपन्नकाः तिर्यग्लोकाधोलोकयोर्नियमतः सम्भवन्ति प्रतिपत्तिस्थानमिति कृत्वा। ऊर्ध्वलोके तु चारणश्रमणाः संहरणतो वा नान्यत्रेति भजनीयाः। एवं क्षेत्रानुवाद उक्तः ॥३१७८–७९॥

दिश(ग्)निरूपणाय—

**णामं ठवणा दविए खेत्त दिसा ताव खेत्त पण्णवए।**
**सत्तमिया भावदिसा परूवणा तम्मिं[1] कातव्वा ॥५९१॥३१८०॥**

**णामं** गाहा। नाम-स्थापने सर्वत्र तुल्ये। द्रव्यस्य दिग्, द्रव्येण निष्पन्ना, द्रव्याद्वा आगता, द्रव्यमेव वा दिक् ॥३१८०॥

**तेरसपदेसियं जं जहण्णतो दसदिसागितिं[2] दव्वं।**
**उक्कोसमणंतपदेसियं च सा होति दव्वदिसा ॥३१८१॥**

**एक्केक्को विदिसासुं मज्झे य दिसासुमायता दो दो।**
**बेन्ति [4]दसाणुगमण्णे दसदिसमेक्केक्कयं कासुं ॥३१८२॥**

**तण्ण दसदिसागारं जं चतुरस्सं ति तो[5] ण दव्वदिसा।**
**खेत्तदिसद्दपतेसियरुअगातो मेरु[२०९–द्वि०]मज्झम्मि ॥३१८३॥**

**तेरसपदेसियं जं। एक्केको विदिसासुं मज्झे य।** एकैकः प्रदेशो विदिक्षु, ते च चत्वारः प्रदेशाः, मध्ये च एक एव प्रदेशस्तेन सह पूर्वे जाताः पञ्च, दिक्षु चतसृषु आयताकारेण स्थितौ द्वौ द्वा प्रदेशौ, तेऽष्टौ पूर्वे च पञ्च एवं त्रयोदशप्रदेशिकं द्रव्यं दिगनुगमं ब्रुवन्त्याचार्याः। अन्ये पुनर्दशदिशमेकैकं मध्यस्थितप्रदेशस्य कृत्वा वर्णयन्ति। तेषामेकादशप्रदेशिकं द्रव्यं तुम्बिकासहितं चक्राकारं प्राप्नोति। सिद्धान्ते च चतुरस्रमुपवर्ण्यते। अतस्त्रयोदशप्रदेशिकमेव सर्वजघन्यं दशदिगाकारं प्ररूपणीयमिति। उत्कृष्टमनेनाऽऽकारेणानन्तप्रदेशिकम्। अस्य चालेखः—

---

१ °सा द्वोभट्ठारसविहा प० हा म। २ तस्स को हे त दी। ३ °गिइं को हे। ४ दिसा° त। ५ तन्न को हे त।



त्रिकबाहुकसमचतुरस्रं नवप्रदेशिकं लिखित्वा चतसृष्वपि दिक्षु एकैकं सोपानवत् संवर्ध्य त्रयोदशप्रदेशिकं चतुरस्रं भवति । अथवा समकं च बाहुकचतुरस्रं पञ्चविंशतिप्रदेशं लिखित्वा चतसृष्वपि विदिक्षु प्रदेशत्रयं प्रदेशत्रयमपचीयते—एवं कोणचतुरस्रापनयनाच्छेषं त्रयोदशप्रदेशिकमवतिष्ठते । एकं(वं) द्रव्यदिक् । क्षेत्रदिक् पुनर्मेरुमध्याष्टप्रदेशिकरुचकाद् बहिर्यादिद्व्युत्तरश्रेण्या शकटोद्धि(द्धि)[1]संस्थानाश्चतस्रो दिशः, चतसृणामभ्यन्तरालकोणावस्थिता एकप्रदेशिकाः छिन्नमुक्तावलिसंस्थानाश्चत्वार एव विदिशः, ऊर्ध्वं चतुष्प्रदेशिकचतुरस्रदण्डसंस्थाना विमला, अधः एवंप्रकारा तमोदिक् ॥३१८३॥

तासां नामानि प्रसिद्धानि—

**इन्दग्गेयी जम्मा य णेरि[2]ती वारुणी य वायव्वा ।**
**सो[3]म्मा ईसाणीया विमला य तमा य बोद्धव्वा ॥३१८४॥**
**इंदा विजयद्दाराणुसारतो सेसिया पदक्खिणतो ।**
**अट्ठ वि तिरियदिसाओ उड्ढं विमला तमा [4]चायो ॥[5]३१८५॥**

**इन्दग्गेयी** गाहा । तापक्षेत्रदिग् अनियता, प्रज्ञापकदिग् अप्यनियतैव॥३१८४-८५॥

**जेसिं जत्तो सूरो उदेति तेसिं तई दि[6]सा पुव्वा ।**
**तावक्खेत्तदिसाओ पदक्खि[7]णं सेसियाओ सिं ३१८६[8] ॥ दारं ॥**
**पण्णवओ जदभिमुहो सा पुव्वा सेसिया प[9]देक्खिणतो ॥ दारं ॥**
**अट्ठारस भावदिसा जीवस्स गमागमो [10]जेसिं ॥३१८७॥**

**जेसिं जत्तो** गाथा । स्फुटार्था ।

सप्तमी भावदिक् अष्टादशप्रकारा संक्षेपतः । दिश्यते अयममुकः संसारी यया सा भावदिक् ॥३१८६-८७॥

---

१ अत्र 'शकटोद्धि' शब्दो ज्ञेयः । आचाराङ्गनिर्युक्तौ (गा० ५९) "सगडुद्धीसंठिया" इति पाठे स्पष्टं 'सगडुद्धि'-'शकटोद्धि' शब्द एव प्रयुक्तः तथा कोट्याचार्यवृत्तौ (पृ० ७६२) 'सगडुद्धि' शब्द एव प्रयुक्तः । श्रीमलयगिरिसूरिरपि स्वावश्यकवृत्तौ (पृ० ४३८) 'शकटोद्धि' शब्दमेव प्रयुङ्क्ते । एवं स्थानाङ्गसूत्रे तृतीयस्थानस्य द्वितीयोद्देशके१६३सूत्रवृत्तौ (पृ० १३३ प्र०) 'सगडुद्धि' शब्द एव निर्दिष्टः । सूर्यप्रज्ञप्तिसूत्रे दशमप्राभृतान्तर्गते अष्टमप्राभृतप्राभृते "रोहिणीणक्खत्ते किं संठिते पण्णत्ते ? सगडुद्धिसंठिते पण्णत्ते" इत्येवं निर्दिश्य तस्य वृत्तौ 'सगडुद्धी' शब्द एव प्रयुक्तः । शकटस्य उद्धिः—शकटोद्धिः' अत्र 'उद्धि'शब्दः संस्कृतभाषायां न प्रचलितः तथापि देश्यभाषायां प्रचलित एव । गुजरातीभाषायाम् 'ऊंध' नाम्ना प्रसिद्धः शकटावयवः प्राकृतभाषायाम् 'उद्धि' शब्देन सूच्यते । ज्योतिःशास्त्रेऽपि रोहिणीनक्षत्रं शकटाकारं प्रसिद्धम् । २ नरइ को । ३ सोमा को । ४ वा° को । ५ इमे गाथे प्रक्षिप्ते इति श्रीमलधारिहेमचन्द्रेण स्वविशेषावश्यकवृत्तौ सूचितम्-तच्चैवम्—"इदं च गाथाद्वयं भाष्येष्वपि बहु लिखितं दृश्यते, प्रक्षेपोऽसौ संभाव्यते । पूर्वटीकायाम् मूलावश्यकटीकायां च अव्याख्यातत्वात्"-पृ० १०७४ गा० २७०० वृत्तौ । ३१८४-८५ इमे गाथे हे त प्रत्योर्न स्तः । ६ हवइ को हे त । ७ पयाहिणं को हे त । ८ इदं ३१८६-३१८९ गाथाचतुष्टयं हे प्रतौ निर्युक्तिरूपेण दृश्यते । तच्च "इति निर्युक्तिगाथाचतुष्टयार्थः" इत्येवम् आसां चतसृणां गाथानां वृत्तौ मल० हेम० लिखितवान् पृ० १०७४-७५ गा०२७०३-२७०४ । ९ पयाहिणओ को हे त । १० जासु को, जेसु हे त ।

पुढवि जलाणलवाता मूलक्खंधग्गपोरवीया य ।
विनिचतुपंचिन्दिय तिरिय णारगा देवसंघाता ॥३१८८॥
सम्मुच्छिमकम्माकम्मभूमगनरा तहंतरद्दीवा ।
भावदिसा दिस्सति जं संसारी णियतमेताहि ॥३१८९॥

पुढवि० गाहा । गतार्था ॥३१८८-८९॥

खेत्तदिसासुं पगतं सेसदिसाओ पसंगतोऽभिहिता ।
संभवतो वा वच्चं सामइयं जत्थ जं होज्जं ॥३१९०॥
पुव्वादीयासु महादिसासु पडिवज्जमाणओ होति ।
पुव्वपडिवण्णओ पुण अण्णतरीए दिसाए भवे ॥५९२॥३१९१॥
छिण्णावलिरुअगागिं तिदिसासु [२१०-प्र०]सामाइयं ण जं तासु ।
सुद्धासु णावगाहति जीवो ताओ पुण फुसेज्जं ॥३१९२॥ दारं॥

खेत्तदिसासुं । पुव्वादीया० । छिण्णावलि० । उत्तानार्थाः । दिग्द्वारं गतम् ॥३१९०-९२॥

कालद्वारमिदानीम् । स च षड्विधः कालः—उत्सर्पिण्याम्, अवसर्पिण्यां च । सुषमसुषमा, सुषमा, सुषमदुःषमा, दुःषमसुषमा, दुःषमा, दुःषमदुःषमेति अवसर्पिण्याम्, अयमेव उत्क्रमेण उत्सर्पिण्याम् । तत्र—

सम्मत्तस्स सुतस्स य पडिवत्ती छव्विहे वि कालम्मि ।
विरतिं विरताविरतिं पडिवज्जति दोसु तिसु वा वि ॥५९३॥३१९३॥

सम्मत्तस्स इत्यादि । सम्यक्त्व-श्रुतसामायिके प्रतिपद्यते जीवः षड्विधेऽपि काले । [विरति]सामायिकम् विरत्यविरतिसामायिकं च प्रतिपद्यते द्वयोः कालयोस्त्रिषु वा कालेषु ॥३१९३॥

तत्प्रतिविभागार्थम्—

ततियातिसु तिसु ओसप्पिणीयें उस्सप्पिणीय[12] दोसुं तु ।
णो[13] [14]ओसप्पुस्सप्पिणिकाले तिसु सम्म-सुत्ताइं ॥३१९४॥
पलिभागम्मि चउत्थे चतुव्विधं चरणवज्जितमकाले ।
चरणं पि होज्ज गमणे सव्वं सव्वत्थ साहरणे ॥३१९५॥

ततियातिसु । अवसर्पिण्यां सुषमदुष्षमायां मरुदेवी सर्वविरतिं प्रतिपन्ना । ततो दुष्षमसुषमायां तीर्थकरप्रवृत्तिर्या(त्तिया)वद् दुष्षमेति त्रिषु कालेषु सर्वचरणप्रतिपत्तिः ।

१ °जलजलणवा° को हे त । २ मूला खं° हे । ३ हुज्जा हे । ४ °व्वाइआ° म । ५ उ को हे त म दी हा । ६ °गागीदि° को हे, °गागीति° त । ७ °सिज्जा हे । ८ °व्विव-म्मि जे, °व्विहंमि दी हा, °व्विहम्मि म । ९ °रईं म । १० °रई म । ११ °णीए को हे त । १२ °णीए हे । °णीइ त । १३ तो को त । १४ उस्स° को हे त ।

उत्सर्पिण्यां द्वयोरेव दुष्षमसुषमायां तीर्थप्रवृत्तिर्या(त्ति या)वत् सुषमदुष्षमाभाग इति द्वयोः कालयोर्नान्यत्र, नोत्सर्पिण्यवसर्पिणी देवकुरूत्तरकुरुषु, सुषमसुषमाप्रतिभागः । हरिवर्षरम्यकयोः सुषमाप्रतिभागः । हैमवतहैरण्यवतयोः सुषमदुष्षमाप्रतिभागः । एतेष्वकालेषु काललिङ्गाभावात् सम्यक्त्व-श्रुतसामायिकयोः प्रतिपत्तिः । महाविदेहे काललिङ्गसद्भावः कालश्चतुर्थः दुःषमासुषमाप्रतिभागः । तत्र चतुर्णामपि सामायिकानां प्रतिपत्तिः । यत्र पुनः कालप्रतिभागोऽपि नास्ति बाह्यद्वीपसमुद्रेषु असावकालः । अस्मिन् सर्वचरणवर्जं त्रयाणां सामायिकानां प्रतिपत्तिः, स्वयम्भुरमणमत्स्याः स्वयमेव देशविरतिं प्रतिपद्यन्त इति । एतस्मिन् काले संघ(ह)रणं प्राप्य स्वयं वा लब्धिसम्पन्नविद्यासामर्थ्यगमने सर्वचरणप्रतिपत्तिरपि । ॥३१९४–९५॥

॥ एवं कालानुगमः ॥

अथ गतिं प्रत्यनुगमः—

**चतुसु वि गतीसु णियमा सम्मत्त-सुतस्स होति पडिवत्ती ।**
**मणुएसु होति विरती विरताविरती य तिरिएसु ॥५९४॥३१९६[1]॥ दारं ॥**

**चतुसु वि गतीसु** । गतिचतुष्टयेऽपि द्वयोः सम्यक्त्वश्रुतयोः प्रतिपत्तिः । तिर्यग्गतौ त्रयाणाम्, देशविरतिसम्भवात् । मनुजगतौ चतुर्णामपि सामायिकानां प्रतिपत्तिः॥३१९६॥

**भवसिद्धिओ तु जीवो पडिवज्जति सो चतुण्ह[2]मण्णतरं । दारं ।**
**पडिसेधो पुण अस्संण्णि[3]मीसए सण्णिपडिवज्जे[4] ॥५९५॥३१९७॥**

**भवसिद्धिओ** गाहा । भव्या भविष्यन्ती सिद्धिरस्येति भव्यसिद्धिः, जीवनाद् जीवः सायुष्कः प्रतिपद्यते चतुर्णामपि सामायिकानामन्यतमेमे(मदे)कं[5] सम्यग्दर्शनं व्यवहारनयात्, निश्चयनयान्नैकं सम्भवति, द्वयोरवश्यं युगपत्प्रतिपत्तिः, इतरयोर्द्वयोरन्यतरम्(त्) । अतः एवं चान्यतमशब्दे प्रयोज्येऽन्यतरग्रहणं सूत्रे । अभव्ये प्रतिषेध एव ॥३१९७॥

**'पुण'सद्दा[6]ऽस्सण्णी सम्म-सुते होज्ज पुव्वपडिवण्णो ।**
**मीसो भवत्थकाले सम्मत्त-चरित्त[7]पडिवण्णो ॥३१९८॥ दारं ॥**

'पुनः'शब्दान्नोभव्यः नोअभव्यः मिश्रः सिद्धः । सोऽपि न प्रतिपद्यमानकः न पूर्वप्रतिपन्नः । अभव्यत्वं स्वभावादेव नास्ति सिद्धस्य, भव्यत्वं पुनरनुभूय तत्पर्यायविगमात् सिद्धपर्यायं प्राप्तः सन् नोभव्य उच्यते । एवंप्रकारः सर्वो मिश्रशब्दाभिधेयः । न केवलमभव्ये प्रतिषेधः किन्त्वन्यत्रापि असंज्ञिनि मिश्रे च सिद्धे प्रतिषेध एव ।

---

१ को प्रतौ निर्युक्तिरूपेण नास्ति । २ य को हे । ३ अस° जे हे वी हा । ४ °ज्जो त । को प्रतौ नास्ति निर्युक्तिरूपेण । ५ °तम एकं–इति प्रतौ । ६ °द्दादस° जे हे । ७ चारि° हे ।

संज्ञीति समनस्कः प्रतिपद्यते चतुष्टयमपि । 'पुनः'शब्दादसंज्ञी सम्यक्त्वश्रुते पूर्वप्रतिपन्नः सास्वादन उत्पत्तिकाले भवेत् । नोसंज्ञी नोअसंज्ञी मिश्रो भवस्थकेवली सम्यक्त्वचारित्रे पूर्वप्रतिपन्नः ॥३१९८॥

**उस्सासग णीसासग मीसे[2] पडिसे[3]ह[२१०–द्वि०]दुविध पडिवण्णो ।**
**दिट्ठीयं दो णया खलु ववहारो णिच्छओ चेव ॥५९६॥३१९९॥**
**मीसो णो उस्सासगणीसासो तेहि जो अपज्जत्तो ।**
**होज्ज पवण्णो दोण्णि तु सेलेसिगतो[4] चरित्तं च ॥३२००॥ दारं ॥**

**उस्सासग णीसासग मीसे** गाहा । उच्छ्वासकः निःश्वासक आनप्राणपर्याप्तिपरिनिष्पन्नः । स एव तया पर्याप्त्या अपर्याप्तौ मिश्रस्तत्र प्रतिपद्यमानकस्य प्रतिपेधः द्वयोः सम्यक्त्वश्रुतयोः, पूर्वप्रतिपन्नको भवेत्–'दुविध'इति द्विविधप्रतिपत्तिः । पर्याप्ते चतुष्टयमप्रतिषिद्धम् । उच्छ्वासनिःश्वासनिरोधे शैलेशी(शी)गतश्चारित्रमपि पूर्वप्रतिपन्न एव ॥३१९९–३२००॥

दृष्टौ नयद्वयं व्यवहारनिश्चयौ तत्र —

**पढमस्सासामायिगी पडिवज्जति वितियगस्स सामयिगी ।**
**ववहारणिच्छयमतं णेयं मतिणाणलाभे[11] व्व ॥३२०१॥**

**पढमस्सासामायिगी** । व्यवहारनयस्य–असामायिकी सामायिकं प्रतिपद्यते । निश्चयनयस्य सामायिकी सामायिकं प्रतिपद्यते । एतच्च मतिज्ञानलाभे प्ररूपितम्—

सम्मत्तणाणरहितस्स णाणमुप्पज्जति त्ति ववहारो ।
'णेच्छइयणयो भासति उप्पज्जइ तेहिं सहितस्स'' [गा० ४१२] ॥३२०१॥

**आहारगो तु जीवो पडिवज्जति सो चतुण्हमण्णतरं ।**
**एमेव तु[13] पज्जत्तो सम्मत्तसुते सिया इतरो ॥५९७॥३२०२॥**
**पुव्वपवण्णोऽणाहारओ दुगं सो भवन्तरालम्मि ।**
**चरणं सेलेसातिसु इतरो त्ति दुगं अपज्जत्तो ॥३२०३॥ दारं ॥**

**आहारगो तु जीवो । पुव्वपवॅण्णोऽणाहारओ ।** आहारकः चतुष्टयं प्रतिपद्यते । पर्याप्तोऽपि चतुष्टयमेवेति । [अ]तिदेशात् अनाहारको भवान्तराले पूर्वप्रतिपन्नः सम्यक्त्व-श्रुते एतद्‌द्विकम् । केवलिसमुद्‌घातशैलेश्य(श्य)वस्थायां वा नाहारकः

१ ऊसा° को हे त । २ मीसग दी हा । मीसय म । ३ °सेहु को, °सेधो जे त, °सेहो हे । ४ °इ दी हा म । ५ °ऊसा° को । ६ °वण्णा त । ७ सेलि° को । ८ °गता जे । ९ मिश्रमूल° इति प्रतौ । १० °मयि° त को हे । ११ °भे को हे त । १२ मण्णइ–प्रतौ । १३ य को हे त दी हा म । १४ °ण्णाहा°–प्रतौ

चरणमेवैकं प्रतिपन्नः। 'समत्तसुते सिया इतरो' त्ति पर्याप्तादितरः अपर्याप्तः। सोऽपि द्विकमेव पूर्वप्रतिपन्नो भवति ॥३२०२-३॥

सुप्तानुगमे–

**णिद्दाये[1] भावतो वि य जागरमाणो चतुण्हमण्णतरं।**

**अण्डय[2] तह पोतै[3]-जरोववाँदि[4] दो तिण्णि चतुरो वा ॥५९८॥३२०४॥**

निद्रासुप्तो भावसुप्तश्च। जाग्रदपि निद्राजागरः भावजागरश्च। तत्र निद्रासुप्तो भावसुप्तश्च मिथ्यादृष्टिर्न किञ्चित् प्रतिपद्यते। निद्रासुप्तो भावजागरः सम्यग्दृष्टिः पूर्वप्रतिपन्नश्चत्वार्यपि, प्रतिपद्यमानको नास्ति, निद्राप्रमादसंक्लेशाद्व्या(द्या)वृत्त(त)त्वात्। निद्राजागरो भावसुप्तो मिथ्यादृष्टिर्न प्रतिपद्यते, न पूर्वप्रतिपन्नः, निद्राजागरो भावजागरश्च पूर्वप्रतिपन्नश्चत्वार्यपि, प्रतिपद्यमानकश्चरित्रम्, चरित्राचरित्रं च ॥३२०४॥

**सम्मद्दिट्ठी किर भावजागरो दोण्णि पुव्वपडिवण्णो।**

**होज्ज पडिवज्जमाणो चरणं सो देसविरतिं च ॥३२०५॥**

**मिच्छो तु भावसुत्तो ण पवज्जति सोऽधवा णयमतातो।**

**सम्मो वा मिच्छो वा णिच्छयववहार [२११-प्र०]तोऽभिहितो ॥३२०६॥**

**॥ दारं ॥**

**चतुरो जरायुजम्मे होज्ज पवण्णो पवज्जमाणो वा।**

**सेसे तिण्णि पवण्णो दोण्णि तयो वा पवज्जेज्ज ॥३२०७॥ दारं ॥**

**सम्मद्दिट्ठी** गाहा गतार्था ॥३२०५-७॥

**उक्कोसाय[6] ठितीये पडिवज्जंते[7] य णत्थि पडिवण्णे[8]।**

**अजहण्णमणोकोसे[9] पडिवेज्जे[10] आवि[11] पडिवण्णे ॥५९९॥३२०८॥**

**उक्कोसठितीकम्मो ण पवज्जंतो ण यावि पडिवण्णो।**

**आयुक्कोसे[12] दोण्गि तु पवज्जमाणो पवण्गो वा ॥३२०९॥**

**ण जहण्णाओ[13] [14]ठितीए पडिवज्जति णेव[15] पुव्वपडिवण्णो।**

**सेसे पुव्वपवण्णो देसविरतिवज्जिते होज्जा[16] ॥३२१०॥ दारं ॥**

---

१ °ए को दी हा, °इ हे त म। २ अंडयं हे। ३ °य पोय जराउय दी हा म। ४ °वादि तिग तिग चउरो भवे कमसो दी हा म। अस्या गाथाया उत्तरार्धस्य मूलपाठे तदर्थे च विशेषतो विचारणीयं वर्तते इति म० हे० वृ० पृ० १०८२ गा० २७१९। ५ निद्राए गता जा°-इति प्रतौ। ६ °सय° को हे। °सिय° त। ७ व जे। ८ °ण्णो को हे त दी हा। ९ °मणुक्को° को हे त दी हा म। १० °वज्जंते को दी हा म। ११ य को दी हा म। १२ °सं को। १३ °उ को हे। १४ ट्ठि° हे। १५ य हे त। १६ होज्ज हे।

उक्कोसठिनीकम्मो । [उक्कोसाय ठितीये], आयुर्वर्जानां कर्मणामुत्कृष्टस्थितौ वर्त्तमानः परमसंक्लेशत्वान्न किञ्चित् प्रतिपद्यते, न वा पूर्वं प्रतिपन्न(न्नः) तत्सहित एव परमसङ्क्लेशमनुप्रविशति । आयुष उत्कृष्टस्थितौ देवस्त्रयस्त्रिंशत्सागरोपमायुषः(युः) पूर्वप्रपन्नो द्वयम , अधःसप्तमायां(म्यां) नारकः स्तोकायुःशेषः सम्यक्त्व श्रुते प्रतिपद्येत, पूर्वप्रतिपन्नो वा । अजघन्यानुत्कृष्टस्थितिः सर्वाणि प्रतिपद्यते, पूर्वप्रपन्नो वा भवेत् । जघन्यायुष्कस्थितिर्न प्रतिपद्यते, न पूर्वं प्रतिपन्नः । **'सेसे पुव्वपवण्णो देसविरति-वज्जिते होज्जा'** आयुर्वर्जशेषकर्मराशौ जघन्यस्थितिः त्रीणि सामायिकानि देशविरतिवर्जितानि पूर्वप्रपन्नो भवेत् , यत् कारणं श्रावकः उपशमश्रेणीं क्षपकश्रेणीं वा नारोहति विशुद्धतरगुणस्थाना[ऽना]क्रान्ते[ः] ॥३२०८–१०॥

**चतुरो वि तिविधवेदे चतुसु वि सण्णासु होति पडिवत्ती ।**
**"हेट्ठा जधा कसाएसु भणियंमिहइं पि य तहेव" ॥६००॥३२११॥दारं॥**

**चतुरो वि** गाहा । चतुरोऽपि त्रिषु [वेदेषु], चतसृषु संज्ञासु चतुर्णामपि प्रतिपत्तिः ।
**'हेट्ठा जधा कसाएसु भणियमिहइं पि य तहेव'**–

"पढमिल्लुगाण उदये णियमा संजोयणाकसायाणं । सम्मइंसणलंभं०"[गा० १२२३] "बिइयकसायाणुदए" [गा० १२२८] एवं "तइयकसायाणु०"[गा० १२३१] एवं संजलण०"[गा० १२३५] अनुक्रमेण सर्वाणि ॥३२११॥

**संखेज्जाऊ चतुरो भयणा सुतं सम्मऽसंखवासम्मि ।**
**ओघेण विभागेण य णाणी पडिवज्जते चतुरो ॥६०१॥३२१२॥**
**दोसु जुगवं चिय दुगं भयणा देसविरतीय चरणे य ।**
**ओधिम्मि ण देसवतं पडिवज्ज[२११–द्वि०]ति होज्ज पडिवण्णो**
**॥३२१३ ॥ दारं ॥**

**संखेज्जाऊ चतुरो** । श्रुत-सम्यक्त्वयोरसङ्ख्येयायुषो भजना । सङ्ख्येयायुषां सर्वसम्भवः । 'ओघ' इति ज्ञानसामान्यम् । ज्ञानी चत्वार्यपि प्रतिपद्यते । विभागेन आभिनिबोधिक-श्रुतज्ञानी युगपदेव 'द्विकम्' सम्यक्त्व-श्रुते, देशविरति-चरणयोर्भजना । अवधिज्ञानी देशविरतिं न प्रतिपद्यते, पूर्वप्रपन्नो भवेद् गुणप्रत्ययलब्धेः ॥३२१२–१३॥

---

१ जिट्ठा त । २ वणियं हे त दी हा म । ३ तह य इयं पि त दी हा म । भणितं तव चेव इधइं पि जे । ४ सम्मसुयऽसं° को दी हा म । सम्मसुएऽसं° हे । ५ °वासाणं हे दी म, °वासीणं त हा । ६ °ज्जई दी हा म । ७ °रईए हे । ८ होइ त हे ।

**देसव्वतवज्जं माणसे पवण्णो समं पि व चरित्तं ।**
**भवकेवले पवण्णो पुव्वं सम्मत्तचारित्तं ॥३२१४॥ दारं ॥**

**देसव्वतवज्जं** । मनःपर्यायज्ञानी देशविरतिवर्जं त्रितयं पूर्वप्रपन्नः । युगपद् वा तेनैव सह चारित्रं तीर्थङ्करस्येव । भवस्थकेवलिः(ली) पूर्वप्रपन्नः सम्यक्त्व-चारित्रे ॥३२१४।

**चतुरो [2]वि तिविधजोगे उवओगदुगम्मि चतुरो[3] पडिवज्जे ।**
**ओरालिए चतुक्कं सम्मसुत विउव्विते भयणा ॥६०२॥३२१५॥**

**चतुरो वि तिविधजोगे** । ओघेन एकस्मिन् द्वयोः त्रिषु वा योगेषु चतुष्टयमपि प्रतिपद्यते । उपयोगद्वयेऽप्येवमेव ।

अथ विभागशः—औदारिककाययोगी चतुष्कम् । वैक्रियययोगी सम्यक्त्व-श्रुते भजनया प्रतिपद्यते, पूर्वप्रपन्नो वा चतुर्णामपि । आहार[क]-तैजस-कार्मणयोगी देशविरति-वर्जत्रयाणां पूर्वप्रपन्नः, विशुद्धसंयतस्य तल्लाभात् । साकारोपयोगे चतुष्टयस्यापि प्रतिपत्तिः । एवमनाकारोपयोगेऽपीति ॥३२१५॥

अत्र चोद्यम्—

**सव्वाओ लद्धीओ जति सागारोवयोगभावम्मि ।**
**इध कधमुवओगदुगे लब्भति सामाइयचतुक्कं ? ॥३२१६॥**

**सव्वाओ लद्धीओ** । 'उपयोगद्वयेऽपि चतुष्टयप्रतिपत्तिरुच्यते' इत्यागमवचनान्तरेण बाध्यते । अनाकारोपयोगे सामायिकचतुष्टयलब्ध्या न भवितव्यम् लब्धित्वात्, शेषलब्धिवत् ॥३२१६॥

अत्रोच्यते—

**सो इर णियमो [5]पडिवड्ढमाणपरिणामयं पति इधं तु ।**
**जोऽवट्ठितपरिणामो लभेज्ज स लभेज्ज [8]बितिए वि ॥३२१७॥**

**सो इर णियमो** । स किल नियमोऽधिकारवशात् परिवर्द्धमानपरिणामकं जीवं प्रति, नावस्थितपरिणामम् । कुत एतत् ? इति चेदुच्यते—'किल'शब्दः आगमान्तरसम्प्रदायाविच्छेदसंसूचनार्थः । परिवर्द्धमानपरिणामाधिकारे चैतत् सूत्रम्—'**सव्वाओ लद्धीओ स[ागारोवयोग]भावम्मि**'[३२१६] इयं च सामायिकचतुष्टयलब्धिरुपशमश्रेण्यां मोहनीयोपशमात् सम्यक्त्वचारित्रलब्धेः । उपशमश्चावस्थितपरिणामता जीवस्य[9] तस्माद्

१ °भज्ज त । २ हे प्रतौ नास्ति । ३ °तुर त । ४ °साध्य अना–इति प्रतौ । ५ किर को हे । ६ °अमा को । ७ परिवड्ढमा° त । ८ बीए को हे त । ९ जीवस्य तस्य तस्मा°—इति प्रतौ ।

सव्वेसु वि संठाणेसु । ण जहण्णोगाहणयो । उत्तानार्था ॥३२२३–२४॥

**सम्मत्तसुतं सव्वासु लभंति सुद्धासु तीसु य चरित्तं ।**
**पुव्वपडिवण्णओ पुण अण्णतरीए तु लेस्साए ॥६०४॥३२२५॥**

**सम्मत्तसुतं सव्वासु ।** लेश्यायामनुगमे सम्यक्त्व-श्रुतयोर्लाभः सर्वासु लेश्यासु, चारित्रस्य देशविरतेश्च शुद्धासु तिसृषु पीता(त)-पद्मा(द्म)-शुक्लासु, पूर्वप्रपन्नकोऽपि सर्वास्वेवान्यतरग्रहणात् ॥३२२५॥

**णणु मतिसुतातिलाभोऽभिहितो सुद्धासु तीसु लेस्सासु ।**
**सुद्धासु असुद्धासु य कधमिध सम्मत्तसुतलाभो ? ॥३२२६॥**

**णणु मतिसुताति० ।** ननु मतिश्रुतज्ञानलाभाधिकारेऽभिहितम्–शुद्धासु तिसृषु च प्रतिपद्यमानकः, इह कथं सर्वासु लभइ(ते) इत्युच्यते ? ॥३२२६॥

**सुर-णेरइएसु दुगं लब्भति ते दव्वलेस्सया सव्वे ।**
**णाणेसु भावलेस्साधिकता इह दव्वलेस्सा तु ॥३२२७॥ दारं ॥**

**सुर-णेरइएसु ।** नन्वेतदपि भवताऽऽगमवादिना स्मर्त्तव्यं गत्यनुवादे देवगतौ च नरकगतौ च द्वितयं लभते सम्यक्त्व-श्रुते । ते च सर्वेषु नारका द्रव्यलेश्यया वर्णिताः–नारकाः कृष्णनीलक(का)पोतलेश्याः । देवनिकायः "तृतीयः पीतलेश्यः" [तत्त्वार्थ० ४. २] तत उत्तरम् विशुद्धतरलेश्या मिथ्यादृष्टयश्चेति, तत्र कथमिति सन्देह एव । तस्मात् सर्वसन्देहेषु "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादि(द)लक्षणम्" इति । ज्ञानाधिकारे भावलेश्याः प्रकृताः, इह सामायिकाधिकारे द्रव्यलेश्येति सर्वासु द्रव्यलेश्यासु ॥३२२७॥

**[२१२–द्वि०] वड्ढंते परिणामे पडिवज्जति सो चतुण्ह[1]मण्णतरं[2] ।**
**एमेवऽवट्ठियंमि[3] वि हायंति[4] ण किंचि पडिवज्जे ॥६०५॥३२२८[5]॥**
**दुविधाए[6] वेतणाए पडिवज्जति सो चतुण्हमण्णतरं । दारं ।**
**असमोहतो वि एमेव पुव्वपडिवण्णए भयणा ॥६०६॥३२२९॥ दारं ॥**

**वड्ढंते परिणामे । दुविधाए ।** उत्तानार्था ॥३२२८–२९॥

**दव्वेण य भावेण य णिव्वेढं[7]तो[8] लभेज्ज अण्णतरं । दारं ।**
**णरएसु अणुव्वट्टे दुगं[9], तिगं[10] चउरं[11] सिउव्वट्टे[12] ॥६०७॥३२३०॥**

---

१ लहेइ को । २ ओ को हे । ३ °वड्ढिं° हे म । °वट्ठिते मि जे । ४ य जे । ५ °ते जे हे । ५ म० हे० वृ० पृ० १०९१, इय ३२२८ गाथा भाष्यरूपा । ६ °विहाइ त म । ७ °ढंतो को, °ढुन्तो त, °ढ्न्तो हे, विड्ढिंतो दी । ८ तो चउण्ह मण्ण० को हे हा दी म त । ९ दुगं दी हा । १० चउक्कं दी हा । ११ चउक्कं सिया तु दी जे हा, चउरो को हे म, चउगे सि त । १२ उवट्टे जे ।

कम्मं उव्वे[1]ढन्तो पवे[2]ज्जति विसेसतो तदावरणं ।
द[3]व्वे कम्म पदेसे भावे कोधाति हावेन्तो ॥३२३१॥ दारं ॥

दव्वेण य भावेण य । द्रव्यनिर्वेष्टनं कर्मप्रदेशविसंघातः । भावनिर्वेष्टनं क्रोधादिहापनम् । तत्र सर्वमपि कर्म निर्वेष्टमानश्च(ष्टयंश्च)तुष्टयं लभते । विशेषतस्तु तदावरणम्–ज्ञानावरणं श्रुतसामायिकस्य, मोहनीयं शेषाणां त्रयाणाम् । सूत्रगाथायाः पश्चार्धम् णरएसु अणुव्वट्टे दुग तिग चउरं सिउव्वट्टे । नारकेष्वनुद्वृत्तस्तत्रस्थ एव द्विकं लभते । तस्मादुद्वृत्तस्तिर्यक्षु मनुष्येषु ना(चा)गतः स्यात् त्रिकम् स्याच्चतुष्कमपि लभते ॥३२३०–३१॥

नरकोपलक्षणमात्रेण भाष्यगाथासु विशेषविवरणम्—

तिरिएसु अणुव्वट्टे तिगं चउक्कं सिया [4]तु उव्वट्टे ।
मणुएसु अणुव्वट्टे चतुरो [5]ति[6] तियं सिउव्वट्टे ॥३२३२[8]॥
देवेसु अणुव्वट्टे दुगं [9]ति[10] चतुरं सिया [11]तु उव्वट्टे ।
उव्वट्टमाणओ पुण सव्वो वि ण किंचि पडिवज्जे ॥३२३३[13]॥दारं॥

तिरिएसु अणुव्वट्टे । देवेसु अणुव्वट्टे । उत्तानार्था ॥३२३२–३३॥

णीसवमाणो जीवो पडिवज्जति सो चतुण्हमण्णतरं ।
पुव्वपडिवण्णओ पुण सिय आसवओ व [14]मीसो वा ॥६०८॥३२३४॥दारं॥

णीसवमाणो इत्यादि । निश्रावयन् कर्म निर्जरयन् चतुर्णामन्यतमं(मत्) प्रतिपद्यते । आश्रा(स्रा)वकः कर्मोपाददते अतः[15] न प्रतिपद्यते । पूर्वप्रपन्नकस्तु स्यात् मिश्रः किञ्चिन्निश्रावयति किञ्चिन्न निश्रावयतीति असावप(पि) स्यात् पूर्वप्रपन्न एव, प्रतिपद्यमानको नास्ति संक्लिश्यमानत्वात् ॥३२३४॥

इदानीमलङ्कारानुगमः—

ओमुं[16]क्कमेणोमुक्को [17] [18]ओमुंचंते य केसे[२१३-प्र०]लंकारे[19] ।
पडिवज्जेज्जण्णतरं सयणादीणं[20] पि एमेव ॥६०९॥३२३५॥ कहिं ति गतम् ॥

---

१ निव्वेढन्तो को, निव्वेट्टं° हे, निच्चेट्ट° त । २ पडिव° को त । ३ दव्वं हे त । ४ य म । ५ व को, ति दी हा म । ६ वि दुगं तु दी हा म । ७ °यं सिया तु जे । °यं ति त । ८ दीपिकायाम् निर्युक्तिरूपा । ९ दुग को हे । १० तिग च° को त । दी हा म प्रतिषु 'सिय' नास्ति । ११ चउरो सि° को, चउक्कं सि° दी हा म । १२ य म । १३ दीपिकायाम् निर्युक्तिरूपा तथा इदं ३२३२–३३ गाथाद्वयं म० हे० वृ० पृ० १०९२–९४ निर्युक्तरूपं निर्दिष्टम् कोट्या० वृ० पृ०७७० निर्युक्तिरूपेण मुद्रितं च । १४ नीसवओ को हे त दी हा म । १५ °तेः मः न प्र°-इति प्रतौ । १६ उम्मु° को हे दी । १७ °मणुम्मुक्के को हे दी । १८ उम्मुं° को दी हा, उम्मुचं° हे त म । १९ °लअलं° दी म । २० °दीसु त ।

अलङ्कारो भूषणानि । यद्वा अन्यत् शोभार्थं केश-वस्त्र-ताम्बूल वर्णकाऽञ्जनादि विमुञ्चन् मुक्तालङ्कारः, सालङ्कारो वा अन्यतमं(मत्) प्रतिपद्यते। तत्रोदाहरणम्[1] ॥३२३५॥

**सव्वगतं सम्मत्तं [2]सुते चरित्ते ण पज्जवा सव्वे ।**
**देसविरतिं पडुच्चा दोण्ह वि पडिसेवणं कुज्जा ॥६१०॥३२३६॥**

**एकं पि [3]ण सद्दहतो जं दव्वं पज्जवं [4]वे मिच्छत्तं ।**
**[5]विणिउत्तं सम्मत्तं तो सव्वद्दव्वभावेसु ॥३२३७॥**

जिनाज्ञा[6] च। तस्मादशेषज्ञेयगेचनात् सर्वद्रव्यपर्यायविषयसर्वगतं सम्यक्त्वम्, श्रुत-चारित्रे वर्णितन्यायेन सर्वद्रव्यविषये [7]न तु सर्वपर्यायव्यापिनी ॥३२३६-३७॥

यस्मात्—

**णाणभिलप्पेसु सुतं जम्हा ण य दव्वमणभिलप्पं ति ।**
**सव्वद्दव्वेसु [8]सुयं तम्हा ण तु सव्वभावेसु ॥३२३८॥**
**वितिय-चरिमव्वताइं पति चारित्तमिह सव्वद्व्वेसु ।**
**ण तु सव्वपज्जवेसु[9] सव्वाणुवओगभावातो ॥३२३९॥**

**णाणभिलप्पेसु सुतं । वितिय-चरिमव्वताइं ।** स्पष्टार्थौ ॥३२३८-३९॥

श्रुतवत् चारित्रमपि सर्वद्रव्यविषयं सर्वपर्यायानुपयोगादिति उक्तमागमोक्तोपपत्त्यैव न घटते। यस्मात्—

**णणु सव्वणभपदेसाणंतगुणं पढमसंजमट्ठाणं ।**
**छव्विधपरि[10]वड्ढीए छट्ठाणासंखया सेढी ॥३२४०॥**

**णणु सव्वणभ०** । नन्वेतत् सर्वसम्मतम्—अनन्तानि संयमस्थानानि। तत्र प्रथमं पर्यायसंख्यया निर्दिष्टं सर्वाकाशप्रदेशसंख्यायां[11] अनन्तगुणम्, ततो द्वितीयादीनि स्थानानि अनन्तगच्छगतानि षड्विधपरिवृद्ध्या षट्स्थानपतितानीति प्रायशः सर्वपर्यायात्मकत्वात् सर्वप्रकृष्टसंयमस्थानं दुर्लक्षम् किं पुनः सर्वाणि समुदितानि ? ॥३२४०॥

तस्मात्—

**अण्णे के पज्जाया जेऽणुवयुत्ता चरित्तविसयम्मि ।**
**जे तत्तोऽणंतगुणा जेसिं तमणंतभागम्मि ॥३२४१॥**

---

१ सुय हे। २ सेहणं को हे त दी हा म। ३ अस° को। ४ च को। ५ सव्वं हे त। ६ अत्र किञ्चित् त्रुटितमिति भाति। ७ तत्र इति प्रतौ। ८ तयं को हे। ९ °मसव्वा इति-प्रतौ। १० °रिवु° को त। ११ °यामन° इति प्रतौ।

**अण्णे के पज्जाया** इत्यादि। केऽन्ये पर्याया अनुपयुक्ता ये तस्मात् संयमस्थानकण्डकादनन्तगुणास्तच्च तेभ्योऽनन्तभागे वृत्तमिति ? 'किम्'शब्द आक्षेपे, नैव ते सन्तीत्यभिप्रायः ॥३२४१॥

इदमाशङ्कितपूर्वपक्षं चोदकवाक्यमेव–**"अण्णे केवलगम्म त्ति ते मती"**। अथवा आचार्यदेशीयवचनमन्तराले चोदकपक्षोत्तरप्रदानाय–अन्येऽपि सन्ति पर्यायाः, ते च केवलज्ञानविषयाः भवतोऽस्मदादीनां चाविषय(याः) इत्यर्थः। तत्र चोदक आचार्यदेशीयमुपालभते—

**अण्णे केवलगम्म त्ति ते मती ते वि के तदब्भहिया ।**
**एवं पि होज्ज तुल्ला णाणंतगुणत्तणं जुत्तं ॥३२४२॥**

**अण्णे** गाहा। दुर्बुद्धिरेषा, सर्वाकाशप्रदेशेभ्योऽनन्तगुणाः सर्व एव पर्याया एव। ततस्ते स्तोकाः, तेभ्योऽधिकाः नैव ते सन्ति।

आचार्यदेशी आह–ननु ज्ञेयपर्याया एवं गृहीता भवन्तु, ज्ञानं केवलं तत्प्रकाशकं तेभ्योऽन्यदस्तीति केवलज्ञानपर्यायास्तेभ्योऽप्यधिका एव इति व्याख्यानात्।

चोदक आह–एवमपि व्याख्याने ज्ञान-ज्ञेययोस्तुल्यपर्यायत्वात्तुल्या भवेयुस्ते, नानन्तगुणता युज्यते ॥३२४२॥

अथवा आचार्यवचनम्–द्वाभ्यामपि भवद्भ्यां न ज्ञातः सूत्राभिप्रायः। यस्मात्–

**सेढी सणाणदंसणपज्जाया तेण[२१३–द्वि०]तप्पमाणा सा ।**
**इध पुण चरित्तमेत्तोवयोगिणो तेण ते थोवा ॥३२४३॥**

**सेढी सणाणदंसणपज्जाया**। याऽसौ संयमस्थानश्रेणिर्निरूपिता सा सर्वा-(र्वे)ज्ञेयपर्यायज्ञानपर्यायसहितैः परिपूर्णास्त(र्णा त)त्प्रमाणा सर्वाकाशप्रभेदानन्तगुणा। इह पुनश्चारित्राधिकारे चारित्रमात्रोपयोगिन एव ग्रहण(णीय)धारणीयद्रव्यपर्यायाः विवक्षितास्तस्माचे स्तोकाः सर्वपर्यायाणामनन्तभागे वर्तन्त इति न कश्चिद्विरोधः ॥३२४३॥

एवमपि पुनरुक्तमेतत्—

**णणु सामाइयविसयो 'किं'दारम्मि वि परूवितो पुव्वं ।**
**किंध ण पुणरुत्तदोसो होज्ज ? इधं को विसेसो वा ? ॥३२४४॥**

**णणु सामाइय०** इत्यादिर्गतार्था ॥३२४४॥

---

१ °लिं को त हे। २ वि को हे त। ३ °तिया जे त। ४ ततस्ते का के- इति प्रतौ। ५ °य णा हे। °ढीइ णा° त। ६ पुव्विं हे त। ७ कह त हे। ८ °दोसा त।

उच्यते—

कि तं ति जातिभावेण तत्थ इध णेयभावतोऽभिहि[1]तो ।
इह विसयविसइभेतो तत्थाभेदोवयारो त्ति ॥३२४५॥ 'केसु' त्ति गतम् ।

किं तं ति जाति० गाहा । किं तत् ? इति, तत्र सामायिकजातिमात्रमुक्तम् विषयविषयिणोरभेदेन । इह पुनरस्य सामायिकस्य 'किं' द्वारे द्रव्यत्वगुणत्वनिरूपितस्य ज्ञेयभावेन विषय उच्यते, विषयविषयिभेदनिर्देशादिति न पुनरुक्तदोषः । 'केषु'इति विषयः सप्तम्यन्ते[न] निर्दिष्टः ॥३२४५॥

कथम् ? इति लाभप्रकाराख्यानम्—

माणुस्सखेत्तजाती कुलरूवारोग्गमायुगं बुद्धी ।
[2]समणोग्गहसद्धासंजमो य लोगम्मि दुलभाइं ॥६११॥३२४६[3]॥
चोल्लग पासग धण्णे [4]जूए रतणे य [5]सिमिण चक्के य ।
चम्म जुगे परमाणू दस दिट्ठंता मणुअलंभे ॥६१२॥३२४७॥
इंदियलद्धी णिव्वत्तणा य पज्जत्ति[6] णिरु[7]वहत खेमं ।
[8]धायारोग्गं सद्धा गाहग उवओग अट्ठो य ॥३२४८[9]॥
लद्धुं पि माणुसत्तं खेत्तं जोग्गमतिदुल्लभं भुज्जो ।
लद्धुं ते दो वि पुणो सुदुल्लभा सोभणा जाती ॥३२४९॥
एवं पुव्वं पुव्वं लद्धुं पि तदुत्तरं पुणो दुलभं ।
जं माणुस्सादीणं सुदुल्लभं तेण [२१४–प्र०]सामइयं ॥३२५०॥
माणुस्सादिसु दुल्लभमेक्केक्कं जध तधेन्दियादीणि ।
पत्तेयं पत्तेगं दस दिट्ठंतोवणेयाइं ॥३२५१॥
जध समिला पब्भट्ठा सागरसलिले अणोरपारम्मि ।
पविसेज्ज जुगं[10]च्छिद्दं कि[11]धं वि भमंती भमंतम्मि ॥३२५२[12]॥

---

१ °हियं को हे त । २ सवणो° दी हा, सवणु° म । ३ ३२४६ गाथातः ३२७३ गाथापर्यन्ताः अष्टाविंशतिर्गाथाः हे प्रतौ न मुद्रिताः परन्तु २७६० गाथाया वृत्तौ पृ० १०९७ तासां निर्देशः कृतः । तथा एता एव अष्टाविंशतिर्गाथाः निर्युक्तिरूपा इति त प्रतौ निर्देशः । ४ जुत्ते जे, जुए दी । ५ सुमि° को दी हा म । ६ °त्ती दी । इदं ३२४८ गाथा "अन्य-कर्तृकी" इति को० वृ० पृ० ७७९ । ७ निरुवय खे° दी । ८ वाता° जे । धायं ध्रातम्—सुभिक्षम् । ९ दी हा म प्रतिषु इयं गाथा ३२४७ गाथातः पूर्वम् । १० जुगच्छिड्डं दी हा °गच्छिड्डं म । ११ कह दी हा म । १२ को दो हा म प्रतीषु इयं निर्युक्तिगाथा । तथा दी हा म प्रतीषु इयं गाथा ३२५३ गाथाया अनन्तरम् ।

पुव्वंते होज्ज जुगं अवरंते तस्स होज्ज समिला तु ।
जुगछिद्दम्मि पवेसो इय संसइओ मणुयलंभो ॥६१३॥३२५३॥
सा चंडवातवीयीपणोल्लिता अवि लभेज्ज जुगछिड्डं ।
ण य माणुमातो भट्ठो जीवो पडि माणुसं लभति ॥३२५४[3]॥

माणुस्स० गाथा । मानुषत्वं लब्ध्वा पुनस्तदेव दुःखेन लप्स्यते जीवः, बहन्तरायान्तरितत्वात्, ब्रह्मदत्तचक्रवर्तिमित्रब्राह्मणचोल्लकभोजनवत्, चाणाक्यपास(श)कपातवत्, भरतक्षेत्रसर्वधान्यमध्यप्रक्षिप्तसर्षपप्रस्थमेलकवत्, स्तम्भशताश्रिशताष्टशतधारा(वारान्) निरन्तरद्यूतजयवत्, महाश्रेष्ठिपुत्रनानावणिग्देशविक्रीतरत्नसमाहारवत्, महाराज्यलाभस्व[प्न]दर्शनकाङ्क्षिस्वप्नकार्पटिकताद्दशस्वप्नवत्, मन्त्रिदौहित्रराजसुतसुरेन्द्रदत्ताष्टचक्रारकपरिवर्तनान्तरितराधावेधवत्, एकच्छिद्रमहाध(च)र्मावनद्धमहासरःसंरु(ह्र)नकच्छपग्रीवानुप्रवेशोपलब्धपुनस्तच्छिद्रलाभवत्, महासमुद्रमध्यविघटितपूर्वापरान्तविक्षिप्तयुगसमिलास्वयंछिद्रानुप्रवेशवत्, अनन्तपरमाणुसंघातघटितदेवसंचूर्णितविभक्ततत्परमाणुसमाहारजन्यस्तम्भवत् ॥३२४६-५४॥

इयं दुल्लभलंभं माणुसत्तणं पावितूण जो जीवो ।
ण कुणति पारत्तहितं सो सोयति संकमणकाले ॥६१४॥३२५५॥
जह वारिमज्झछूढो व्व गयवरो मच्छओ व्व गलगहितो ।
वग्गुरपडितो व मओ संवट्टति तो जध व पक्खी ॥६१५॥३२५६॥
सो सोयति मच्चुजरासमेत्थतो तुरितणिद्दपक्खित्तो ।
तातारमविन्दंतो कम्मभरसंमोत्थतो जीवो ॥६१६॥३२५७॥
कातूणमणेगाइं जम्मणमरणपरियट्टणसताइं ।
दुक्खेण माणुसत्तं जति ल[२१४-द्वि०]भति जेतिच्छया जीवो ॥६१७॥३२५८
तं तध दुल्लभलंभं विज्जुलताचंचलं मणूसत्तं ।
लद्धूण जो पमातति सो कापुरिसो ण सप्पुरिसो ॥६१८॥३२५९॥

१ °इमि दी हा । २ °छिद्द° को, जुगछिद्द° दी हा । ३ को दी हा म प्रतीषु इयं निर्युक्तिगाथा । ४ इदं सर्वं कोटयाचार्यवृत्तौ अक्षरशः पृ० ७७९ । ५ °स्वय(प)त्का° प्रतौ । ६ इह हे । ७ सो को । ८ °उ व्व को दी हा म । ९ व्व को °उ व्व दी हा, य म । १० जहा प° को म । ११ °मोत्थ° को, °मुच्छुो म, °मोच्छुओ दी हा । १२ °णिद्द° जे । १३ °रपणोल्लिओ दी हा म । १४ °म्मम° दी हा म । १५ जहिच्छि° को दी, जहि° हा, जहिच्छियं म । १६ ° लं च मणु° को म, °लं माणु° दी हा । १७ °यत्तं म ।

इय दुल्लभलंभं गाथा: । दुर्लभलाभं लब्धोऽपि मानुष्यम्, अननुष्ठित(ते) सामायिके जीवः बहुं कालं शोचिष्यते, प्रमादादननुष्ठितस्वहितत्वात्, [1]वारीप्रक्षिप्तगजवत्, गलगृहीतमत्स्यवत्, वल्गु(वागु)रापतितमृगवत् । एवंप्रकारश्च जीवः कापुरुषः, प्रमादकारित्वात् राज्यगृ[द्ध]ब्रह्मदत्तवत् ॥३२५५–५९॥

प्रमादकारणानि च—

आलस्समोहऽवण्णा थंभा कोधा पमाद किमि[2]णत्ता ।
भयसोगा अण्णाणा वक्खेव कुतूहला रमणा ॥६१९॥३२६०॥
एतेहि कारणेहिं लद्धूण सुदुल्लहं पि माणुस्सं ।
ण लहति सुतिं हितकरिं संसारुत्तारिं[3]णीं जीवो ॥६२०॥३२६१॥

आलस्स० गाहा । लब्ध्वापि मानुष्यम्, हितार्थिना आलस्यमोहावज्ञात(प्र)स्तम्भक्रोधप्रमादकृपणत्वभयशोकाऽज्ञानव्याक्षेपकुतूहल[र]मणानि त्याज्यानि, हितप्रत्यनीकत्वात्, जीवितार्थिना यथासुखलब्धसविषभोजनवत् ॥३२६०–६१॥

जाणावरणपहरणे जुद्धे कुसलत्तणं [4]च णीतीय ।
दक्खत्तं ववसाओ सरीरमारोग्गता चेव ॥६२१॥३२६२॥
जोधो ण जाणरहितो जाणगतो वि य णिरावरणदेहो ।
आवरणगतो वि परं[5] पहरणरहितो पराजयते[6] ॥३२६३॥
पहरणसहितो वि ण जो सिक्खाकोसल्लकोवितो होति ।
कुसलो वि [7]अणीइल्लो चंकमणोवक्कमादीसु ॥३२६४॥
णीतिं[8]णो वि [9]अदक्खो करणे अव्ववसितो [10]सुदक्खो वि ।
ववसितचित्तो वि ण जो णीरोगो सो व किं कुणतु ? ॥३२६५॥
जीवो जोधो जाणं वताणि आवरणमुत्तमं[11] [२१५-प्र०] खंती ।
झाणं पहरणमिट्ठं गीतत्थत्तं च कोसल्लं ॥३२६६॥
दव्वादिजधोवायाणुरूवपडिवत्तिवत्तिता णीती ।
दक्खत्तं किरियाणं जं करणमहीणकालम्मि ॥३२६७॥
करणं सहणं च तवोवसग्गदुग्गावतीय ववसायो ।
एतेहिं सुणीरोगो कम्मरिवुं जयति सव्वेहिं ॥३२६८॥

---

१ "वारी तु गजबन्धनी" अमरको० क्षत्रव० द्वितीयकां० श्लो० ४३ । २ किवि° को म, किव° दी हा । ३ °णिं को दी, °रिणिं म । ४ स म । ५ जाणजुओ नीइल्लो कुसलो दक्खो य रोगरहिओ य । आवरणजुओ जोहो पह° को । ६ °तो जे । ७ अणित्ति(णीति)-ण्णोवक्कम° जे । ८ णीइल्लो को । ९ य° जे । १० °ण द° जे । ११ °मा को ।

णाणावरण० गाथा: । परित्यक्तहितविघ्नश्च जीवः स्वविहितानुष्ठायी स्वार्था पहारिरिपुं जेष्यति अचिरात्, यानावरणप्रहरणयुद्धकौशलनीतिदाक्ष्यव्यवसायशरीरारोग्यसम्पन्नत्वात्, इतद्द्रुगमम्पन्नयोधवत् ॥३२६२-६८॥

दिट्ठे मुएऽणुभूते कम्माण खए कते उवसमे य ।
मणवयणकायजोगे य पसत्थे लभती बोधी ॥६२२॥३२६९॥

अणुकंपऽकामणिज्जर बालतवे दाणविणयविब्भंगे ।
संजोगविप्पयोगे वसणूसवइड्ढिसक्कारे ॥६२३॥३२७०॥

वेज्जे मेण्ठे[3] तध इंदणाग-कतपुण्ण-पुप्फसालसुते ।
सिव-दुमधुरवणिभातुग-आभीर दसण्णिलापुत्ते ॥६२४॥३२७१॥

सो वाणरेज्जूधवती कंतारे सुविहिताणुकंपाए ।
भासुरवरबोन्दिधरो देवो वेमाणियो जातो ॥६२५॥३२७२॥

दिट्ठे मुएऽणु० गाहा । अणुकंप० गाहा । वेज्जे गाहा । सो वाणर० गाहा । अनुकम्पाप्रवणचित्तो जीवः सामायिकमवश्यं लभते, अनुकम्पायुक्तत्वात्, साधुदर्शनोपजातवैतरिणीवैद्यपूर्वभवस्मरणजनितविज्ञानसाधुपादशल्योद्धरणप्रकटीकृतानुकम्पाफललब्धसामायिकदेवत्वापन(न्न)वानरयूथपतिवत् । तथा इयमेव प्रतिज्ञा सर्वेष्वपि, केवलं हेतु-दृष्टान्तान्यत्वम्—अकामनिर्जरायुक्तत्वात् स्नुषापादनूपुरापहारवैलक्ष्यापद्वतनिद्रान्तःपुरपालश्रेष्ठिकथितमहादेवीव्यभिचारापराधनिर्विषयाज्ञा(ज्ञ)तपथिचौराभ्याख्यानशूलप्रोतनमस्काराकामनिर्जरावाप्तदेवत्वमेण्ठवत् । तथा बालतपोयुक्तत्वात् समुत्सन्नगोत्रश्रेष्ठिपुत्रसार्थवाहनि[यमि]नैकभिक्षाहारड(द)म्भसिद्धि(द्ध)प्रयत्नबालतपोऽनेकपिण्डकसूचनालब्धोपशमेन्द्रभा(ना)गवत् । तथा सुपात्रप्रयुक्तयथाशक्तिश्रद्धादानत्वात् वत्सपालीसुतसाधुप्रयुक्तत्रिविश्रामपायसदानलब्धदेवत्वधनसार्थवाहसुतकृतपुण्यकवत् । तथा आराधन(धित)विनयत्वात् मातापितृप्रयुक्तविनयपारम्पर्योपस्थिततीर्थकरसेवकत्वलब्धसामायिकपुष्पमाल(साल)वत् । तथा अवाप्तविभङ्गज्ञानत्वात् तापसशिवराजर्षिवत् । तथा द्रष्टव्यसंयोगवियोगत्वात् प्राक्पुण्योपात्तदेवतासम्प्रयोजितसौवर्णकलशादिखण्डपात्रि(त्री)भोजिपुण्यक्षयवियोजित-

१ सुतमणु° जे म को । २ संयोग° हा दी । ३ °ण्ठे इंदयनागयक° म । ४ °रजूह° को दी हा म । ५ भासु° को दी हा म । ६ इदं सर्वं कोट्याचार्यवृत्तौ शब्दशः पृ० ७८२-७८३ । ७ अनुकम्पा°-इति प्रतौ । ८ हेतुर्दृष्टदृष्टा°-प्रतौ । ९ पुप्फसालसुतवत्-को ।

पात्रि(त्री)खण्डमात्रशेषमथुराद(द्व)यवासिवणिग्द्वयवत् । तथा अनुभूतव्यसनत्वात् भ्रातृद्वयशकटचक्रव्यापादिमल्लुंडिलब्धमानुषत्वस्त्रीगर्भजातप्रियद्वेष्यपुत्रद्वयवत् । तथा अनुभूतोत्सवत्वात् पूर्वश्रुतलोकवर्णकसमानीतनगरोत्सवाभीरवत् । तथा दृष्टमहर्द्धिकत्वात् गजाग्रपदकसमवसरणोपगतदेवेन्द्रविभूतिदर्शनावमतात्मर्द्धिदशार्णभद्रराजवत् । तथा सत्कारकाङ्क्षणेऽप्यलब्धसत्कारत्वात् रूपिणीलङ्खिनिकालग्नदर्शना(र्शिता)नेकविज्ञान-शक्तिराजावमत्त(त)वैराग्येलापुत्रवत् ॥३२६९–७२॥

**अब्भुट्ठाणे विणए परक्कमे साधुसेवणा[२१५–द्वि०]ए य ।**
**सम्मद्दंसणलंभो विरताविरतीय विरतीयं ॥ ॥६२६॥३२७३॥ कधं ति गतं ॥**

अब्भुट्ठाणे गतार्था ॥३२७३॥ कथं लभ्यते ? इति द्वारं समाप्तम् ॥

अथ लब्धं कियच्चिरं तिष्ठति ? इत्यनुगम्यते—

**सम्मत्तस्स सुतस्स य छावट्ठिं[10] सागरोवमाइं ठिती ।**
**सेसाण पुव्वकोडी देसूणा होति णीतव्वा ॥६२७॥३२७४॥**
**विजयादिसु दो वारे[12] गतस्स तिण्णऽच्चुते[13] य छावट्ठिं[14] ।**
**णरजम्मपुव्वकोडीपुधत्तमुक्कोसतो अधियं ॥३२७५॥**

**सम्मत्तस्स** गाहा । सम्यक्त्व-श्रुते लब्धे लब्धिसामान्यं प्रतीत्य द्वे अपि तिष्ठतः षट्षष्टिं सागरोपमानि साधिकानि । तानि विजयादिषु द्विरुत्पत्तेरुच्यते । कल्पे वा त्रि(त्रिः) संभूतस्य यान्यन्तराले देवजन्मनो मनुष्यजन्मानि तदुत्कर्षेण संयमप्राप्तियोग्यमनुष्येषु पूर्वकोटिपृथक्त्वं भवेत् तदेवाधिकमित्युच्यते ॥३२७४–७५॥

अथ जघन्यादिस्थितिरुच्यते—

**अंतोमुहुत्तमेत्तं जहण्णयं चरणमेगसमयं तु ।**
**उवयोगंतमुहुत्तं णाणाजीवाण सव्वद्धं ॥३२७६॥ दारं ॥**

**अंतोमुहुत्तमेत्तं** गाहा । सम्यक्त्व-श्रुतयोर्जघन्यतो लब्धिं प्रतीत्य अन्तर्मुहूर्तमात्रम् । 'मात्रा'शब्दः स्तोकबहुत्वानेकस्थानान्तरज्ञापनार्थः । देशचरण-सर्वचरणयोः जघन्यतः एकं समयं स्थितिः, श्रेण्यारम्भसमयानन्तरमेवायुष्कक्षयात्, उपयोगं प्रतीत्य सर्वेषां जघन्यतोऽन्तर्मुहूर्त्तम् । एतदेकजीवं प्रति । नाना जीवान् प्रति सर्वकालसद्भावात् सर्वाद्धा ॥३२७६॥कियच्चिरम् ? इति गतम् ॥

---

१ "चक्कुलेण्डा"–(चक्रौलण्डिका–द्विजिह्वः सर्पः)हरि०वृ०पृ०३५७द्वि०। चक्कुवुंडा–मलय० वृ० पृ० ४६७द्वि०।२ °नतोवऽनवमता°–प्रतौ ।३ °ब्धसंस्कार°–प्रतौ ।४ °णीं लं°- इति प्रतौ । णीखिंखिणिका को । ५ लङ्खिनिका–महावंशाग्रखेलिका नटी । ६ पुत्रत्वात्--प्रतौ । ७ °णाओ जे । ८ रईइ दी हा, °रईए म । ९ °रईए दी हा म । १० °ट्ठी को हे दी हा म त । ११ उक्कोसा को हे दी हा म त । १२ दो वारे विजयाइसु हे । १३ °ण्णुच्च° जे । १४ °ट्ठी को हे त । १५ °पुहुत्त° को हे, °डीमुहुत्त° त ।

अथ कति ? इति संख्याप्रश्नः । एकस्मिन् वर्तमानसमये युगपत् कतिसंख्याः सम्यक्त्व-श्रुत-देशविरति-सर्वसंयमानां प्रतिपत्तारः ? कतिसंख्या वा पूर्वप्रतिपन्नाः, प्रतिपतिता वा ? तत इदम्—

सम्मत्त-देसविरता पलितस्स असंखभागमेत्ता तु[१] ।
सेढी असंखभागो सुते सहस्सग्गसो विरती ॥६२८॥३२७७॥
सम्मत्तदेसविरता पडिवण्णा संपती असंखेज्जा ।
संखेज्जा य चरित्ते तीसु वि पडिता अणंतगुणा ॥६२९॥३२७८॥
सुतपडिवण्णा संपति पतरस्स असंखभागमेत्ता[३] तु[४] ।
सेसा संसारत्था सुतपडिपडिता हु ते सव्वे ॥६३०॥३२७९[६]॥

सम्मत्त० गाहात्रयम् ॥३२७७-७९॥

अस्य भाष्यगाथा—

संवट्टितचतुरंसीकतस्स लोगस्स सत्तरज्जूओ ।
सेढी तदसंखे[२१६-प्र०]ज्जतिभाओ समए सुतं लभति ॥३२८०॥

संवट्टितचतुरंसी० इत्यादि । 'सेढी असंखभागो सुते'[३२७७]त्ति गाथावयवस्तस्य सेढीशब्दस्य सामान्येनोक्तस्यार्थप्रकरणवशात् सामर्थ्यात् लोकसेढित्वम् । तस्यापि लोकस्य न यथावस्थितस्यैव श्रेणिः परिगृह्यते, विचित्रत्वात् तासाम् । तस्माद्यथा तास्तर्वा अपि समाः श्रेणयो भवन्ति तथैव कल्पनाबुद्ध्या क्रियते । लोकः सुप्रतिष्ठकसंस्थानः वैशाखस्थानस्थितपुरुषाकारो वा, तस्याधोलोकः अधोमुखस्थितमल्लकाकारः, तिर्यग्लोको ऊ(झ)ल्लरीसंस्थानः, ऊर्ध्वलोकः परस्परसंमुखमल्लकसंपुटाकारः । तस्येदानीं बुद्ध्या गणिताचारेण क्षेत्रसंवर्त्तनया चतुरस्रीकरणम्, व्यावहारिकलोकमध्यादुपरिष्टादूर्ध्वं मृदङ्गाकारशरावसंपुटाकारस्योर्ध्वलोकस्य सप्तरज्जुकस्य मध्ये ब्रह्मलोकोपलक्षिते पञ्च रज्जवो विस्तार इति, मध्ये लोकनाडीरज्जुपार्श्वयोर्द्वे रज्जू, तत्र रज्जुतो बहिर्द्विरज्जूनकोटिकं सार्द्धरज्जुत्रयबाहुकम् एतत् कर्णविच्छिन्नत्र्यस्राकारक्षेत्रं दक्षिणतो वामतश्च । तत्र यद् वामं त्र्यस्त्रिक्षेत्रखण्डं तद् बुद्ध्या विच्छिद्याधोमुखं कृत्वा दक्षिणत्र्यस्त्रिक्षेत्रेण सह कञ्चुलकापक्षिवत् सन्धीयते । ततस्तदेकं खण्डमायतचतुरस्रं त्रिककोडि(टि)सार्द्धं त्रिकबाहुकं संवृत्तम् । एवमेकमुपरितनशरावमुपसंहृतम् । तथैव सम्पुटस्याधःशरावं वामद-

१ °मेत्ता को हे दी हा म । °मित्ता म त । २ ओ को हे त म । ३ °मेता हा, °मित्ता म । ४ ओ को हे म । ५ °परिवट्टि° । ६ को प्रत्याम् इयं ३२७९ गाथा भाष्यरूपा, दी प्रतौ च एषा नोपलभ्यते । ७ °वड्डि° त । ८ °रस्सी° हे त । ९ °त्वलो° इति प्रतौ ।

क्षिणत्र्यस्रिक्षेत्रसंघटनया उपसंहृत्य द्वितीयमायतचतुरस्रं तत्प्रमाणमेव संवृत्तम् । ते द्वे अपि बुद्धया संघटिते एकमायतचतुरस्रक्षेत्रं तिरि(त्रिर)ज्जुकोटिसप्तरज्जुबाहुकं संवृत्तम् । एतच्चावस्थितं तथैवाधस्त्यं शरावमपि या(वा)मत्र्यस्रिखण्डविपर्यासेन दक्षिणत्र्यस्रिखण्डे संयोज्यम् । तत एतदपि चतूरज्जुकोटिसप्तबाहुकमायतचतुरस्रं भवति । एते अपि द्वे आयतचतुरस्रे क्षेत्रसंकलनया समबाहुके संघटिते चतुष्ककोटचा(व्य)नुकोटिसंघटिता जाता सप्तिका कोटिः । बाहुरपि सप्तैव रज्जव इति सप्तरज्जुबाहुकं समचतुरस्रं प्रतरम् । एष च घनो लोकः सप्तभिरेव गुणितं सप्तबाहुकं चतुरस्रघनं काकणिरत्नं द्वादशास्रि भवति । घनो द्वादशास्रिश्चतुरस्र इति एकान्नपञ्चाशद्रज्जवो घनगणितम् । एवं संवर्त्तितचतुरस्रीकृतस्य लोकस्य सप्त रज्जव एकाकाशप्रदेशपङ्क्तिका मुक्तावलीव श्रेणिरुच्यते । तस्याः श्रेण्या असंख्येयभागे यावन्त आकाशप्रदेशास्तत्संख्या जीवा वर्त्तमानसमये श्रुतसामायिकं भंजे ? (भजन्ते)—प्रतिपद्यन्त इत्यर्थः । सम्यक्त्वसामायिक-देशविरतिसामायिकं च प्रतिपद्यमानाः क्षेत्रपल्तिोपमासंख्येयभागमात्रे उत्कर्षेणोक्ता एव गाथापूर्वार्द्धेन । अथ विरतिं प्रतिपद्यमाना उत्कर्षेण कियन्तः ? इत्याह—'**सहस्सग्गसो**' [३२७७] अजितस्वामितीर्थंकरकाले विरतिप्रतिपत्तियोग्या बहुतरा इति सहस्राग्रशः सहस्रगणनया सहस्रपृथक्त्वम् । यावदवस्थानान्तरं दशकगुणं न प्राप्नोति तत् पृथक्त्वमुच्यते ।

अथ वर्त्तमानसमयात् पूर्वं प्रतिपन्नाः कियन्तः ? इति तन्निर्द्धारणम्—सम्मत्त(म्यक्त्व)-देशविरतयोः उभयोः प्रतिपद्यमानकेभ्यः सकाशादसंख्येयगुणाः सर्वप्रतिपन्नाः, प्रतिपद्यमानेभ्यः संख्येयगुणाः, संख्येयत्वान्मनुष्याणाम् । त्रितयस्याप्यस्य प्रतिपतिता अनन्तगुणाः । उपपत्तिर्भाष्यगाथयाऽऽख्यास्यते । श्रुतस्य तु पूर्वप्रतिपन्नाः प्रतरस्यासंख्येयभागमात्रा इति ॥३२८०॥

प्रतरव्याख्यानार्थं गाथा—

**सा सेढी सेढिगुणा पतरं तदसंखभागसेढीणं ।**
**संखातीताण पदेसरासिमाणा सुतपवण्णा ॥३२८१॥**

**सा सेढी सेढिगुणा** । उक्तलक्षणा श्रेणिः सप्तरज्जुका एकप्रदेशिका पङ्क्तिः । सा तयैव श्रेण्या गुणिता समस्तप्रतरं भवति । तस्यासंख्येयभागः असंख्येयाः प्रश्रेणयः तत्प्रदेशराशिमानाः श्रुतस्य पूर्वनिष्पन्नाः ॥३२८१॥

**सति संखातीतत्ते थोवा देसविरता [2]दुवेण्हं पि ।**
**तदसंखगुणा सम्मदिट्ठी[3] तत्तो य सुतसहिता ॥३२८२॥**

---

१ °सिपमा° को । २ दुवि° हे । ३ °दि° जे त ।

**सति संखातीतत्ते** । सम्यक्त्व-देशविरतिपूर्वप्रपन्नकानां सत्यप्यसंख्येयत्वे देशविरतिपूर्वप्रपन्नकाः स्तोकतराः । ततोऽसंख्येयगुणाः सम्यग्दृष्टयः पूर्वप्रतिपन्नाः, तेभ्योऽप्यसंख्येयगुणाः सम्यग्दृष्टयः पूर्वप्रतिपन्नाः (°यः प्रतिपद्यमानकाः) । तेभ्योऽप्यसंख्येयगुणाः श्रुतसहिताः श्रुतपूर्वप्रतिपन्नका इत्यर्थः ॥३२८२॥

कथं पुनस्ते असंख्येयगुणा इति ? तत्रोपपत्तिः—

**मीसे पवज्जमाणा सुतस्स सेसपडिवण्णएहिंतो ।**
**संखातीतगुण च्चिय तदसंखगुणा सुतपवण्णा ॥३२८३॥**

**मीसे** गाहा । ये श्रुतज्ञानस्य पूर्वप्रतिपन्नकास्ते मिश्रयितव्याः श्रुतस्यैव प्रतिपद्यमानकैस्तेऽपि श्रुतसहिता इति कृत्वा । अतः शेषप्रतिपन्नकेभ्यः सकाशात् श्रुतप्रतिपन्नका असंख्येयगुणा इति शक्यं प्रतिपत्तुम् ॥३२८३॥

इदं च सामान्यं लक्षणं प्रत्येकम्—

**सट्ठाणे सट्ठाणे पुव्वपवण्णा पवज्जमाणेहिं ।**
**होंति असंखेज्जगुणा संखेज्जगुणा चरित्तस्स ॥३२८४॥**

**सट्ठाणे०** गाहा । स्फुटार्था ॥३२८४॥

**चरणपडिता अणंता तदसंखगुणा य देसविरतीतो ।**
**सम्मादसंखगुणिता ततो सुतातो अणंतगुणा ॥३२८५॥**

अथ प्रतिपद्यमानकः(क)पूर्वप्रतिपन्नेभ्यः सकाशात् प्रतिपतिताः कियन्त इति ? तत्परिज्ञानाय—चरणचजिप्रा(णग्राहिणः)—चरणसहिताः स्तोका एव जीवाः, तत्प्रतिपतिताः सर्वे एव शेषाः—इत्यनन्तगुणाः, देशविरतितः प्रतिपतिताः—ये देशविरतिं प्रतिपद्य पतिताः ते असंख्येयगुणाः, चरणप्रतिपन्नेभ्यो मनुष्येभ्यः सकाशादधिकाः, यत् तिर्यञ्चो देशविरतियोग्याः ते चासंख्येया इत्यसंख्येयगुणत्वं पूर्वेभ्यः । ततोऽप्यसंख्येयगुणाः सम्यग्दर्शनमात्रका देव-नारकाः, ततस्तत्प्रतिपतिता देशविरतिप्रतिपतितेभ्योऽसंख्येयगुणाः । सम्यग्दर्शनयोग्येभ्योऽपि मिथ्यादृष्टयोऽनन्तगुणाः भव्याश्चाभव्याश्च । तत्र सम्यग्दर्शनप्रतिपतिता भव्या एव केवलाः, श्रुतप्रतिपतिता अभव्या अपि, सामान्यमात्रश्रुतसङ्ग्रहात् ॥३२८५॥

तदर्थं गाथा—

**सामण्णं सुतगहणं ति तेण सव्वत्थ बहुतरा तम्मि ।**
**इधरा पति सम्मसुतं सम्मत्तसमा सुणेतव्वा ॥३२८६॥**

---

१ मीसे जे । २ °का वंध त्रिय तिर्यं° इति प्रतौ ।

**सामण्णं सुतगहणं ति**। न विशेष्यते सम्यक्छ्रुतं मिथ्याश्रुतमिति वा। किं तर्हि? सामान्यमक्षरश्रुतमात्रम्। अनन्तास्तत्प्रतिपतिता बहुतरत्वादनन्तगुणाः, इतरथा सम्यक्छ्रुतविशेषपरिग्रहाः सम्यक्त्वप्रतिपतिताः श्रुतप्रतिपतिताश्च तुल्या एव, सम्यग्दर्शनप्रतिपत्त्यैव सम्यक्छ्रुतं भवतीति ॥३२८६॥

अथ पूर्वप्रतिपन्नकेभ्यः सकाशात् प्रतिपतिताः कियन्तः? इत्यल्पबहुत्वचिन्तायां गाथा—

**पडियपडिवण्णयाणं सट्ठाणे समधियं जघण्णातो।**
**सव्वत्थुक्कोसपदं पवज्जति जहण्णओ [1]वेगो॥ दारं ॥३२८७॥**

**पडियपडिवण्णयाणं**। एवं वा ग्रन्थः—अथ पूर्वप्रपन्नप्रतिपतितानां जघन्योत्कृष्टाः कियन्तः? इत्यल्पादि स्वस्थाने स्वस्थाने प्रतिपन्नानाम् अयं (इदम्) जघन्यपदम् तस्मात् तत्प्रतिपतिता स्वस्थानात् उत्कृष्टपदे विशेषाधिकाः द्रष्टव्याः। अथ प्रतिपद्यमानकानामुत्कृष्टपदं पलितासंख्येयभागमात्रादि निर्दिष्टं जघन्यपदं तदुच्यते—**पवज्जति जहण्णओ वेगो**। सर्वत्र प्रतिपद्यते जघन्यत एकः, शेषं द्व्यादि अजघन्योत्कृष्टपदमिति ॥३२८७॥ कति? इति द्वारं गतम्॥

अथैषामेव चतुर्णामन्तरद्वारम्—कियत् कालमन्तरम्? इति।

**कालमणंतं [2]तु सुते अद्धापरिअट्टओ [3]य देसूणो।**
**आसातणब[२१६-द्वि०]हुलाणं उक्कोसं अन्तरं होति ॥६३१॥३२८८॥**
**मिच्छसुतस्स वणस्सतिकालो[4] सेसस्स सेससामण्णो।**
**हीणं भिण्णमुहुत्तं सव्वेसिमिहेगजीवस्स ॥३२८९॥ दारं ॥**

**कालमणंतं तु सुते। मिच्छसुतस्स** इत्यादि। मिथ्याश्रुतं प्रतीत्य श्रुतं प्रतिपद्य तस्मात् प्रतिपतित उत्कर्षेण पुनः कियता कालेन मिथ्याश्रुतं प्रतिपत्स्यत इति? साधारणवनस्पतिकालम् अन्तरं कृत्वा पुनरपि मिथ्याश्रुतमक्षरात्मकं प्रपत्स्यत इति मिथ्यात्वश्रुतस्य वनस्पतिकालोऽन्तरम्। शेषस्य सम्यक्छ्रुतस्य शेषैः सम्यक्त्व-देशविरति-सर्वचरणैस्तुल्योऽन्तरकालः, सम्यग्दर्शनान्तरकाल एव पुद्गलपरिवर्त्तस्यार्द्धं देशोनमिति सर्वेषाम्, पुनरेकजीवं प्राप्य भिन्नमुहूर्त्तमन्तरम्— अन्तर्मुहूर्तो भिन्न इति जघन्यतः ॥३२८८–८९॥ अन्तरद्वारं गतम्॥

अथ अविरहितद्वारम्—कियन्तं कालमविरहेण एको वा द्वौ वा त्रयो वेत्यादि प्रतिपद्यन्ते—

---

१ चेगो हे। २ च को हे दी हा म त। ३ उ हा म। ४ °ला से° जे।

**मुतसम्मेअगारीणं आवलियअसंखभागमेत्ता तु ।**
**अट्ठ समया चरित्ते सव्वेसिं[3] जहण्णओ[4] समओ[5] ॥६३२॥३२९०॥**

**मुतसम्मअगारीणं** इत्यादि । अगारी श्रावको देशविरतः । तेषां श्रुतसम्यक्त्वागारिणां निरन्तरप्रनिपत्तिकालः आवलिकासंख्येयभागमात्राः समयाः, सर्वचारित्रस्य निरन्तरं प्रतिपत्तिः अष्टौ समयान्, सर्वेषां जघन्यतः अविरहकालः एकसमयः॥३२९०॥

अनेनैव प्रतिपक्षोऽपि विरहितकाल आक्षिप्त इत्यनुद्दिष्टोऽपि द्वारगाथायां निर्दिश्यते—

**मुतसम्मसत्तयं खलु विरताविरतीयँ होति बारसगं ।**
**विरतीयँ पण्णरसगं विरहितकालो अहोरत्ता[9] ॥६३३॥३२९१॥**

**मुतसम्मसत्तयं खलु** इत्यादि । सर्वस्मिन्नेव लोके पूर्वप्रपन्नकान् मुक्त्वा सांप्रतिकप्रपद्यमानकैः सप्ताहोरात्राणि विरहितानि, ततः परमवश्यं क्वचित् कश्चित् प्रपद्यते, लोकस्थित्यनुभावात, श्रुत-सम्यक्त्वयोरेवम् । देशविरतेस्तु विरहितकालो द्वादशाहोरात्राणि, सर्वविरतेः पञ्चदशाहोरात्राणि ॥३२९१॥ 'अविरह'इति गतम् ॥

अथ 'भव' इति द्वारम् । एकजीवः कति भवग्रहणानि निरन्तरं सामायिकचतुष्टयं प्रतिपद्यते ? इति तदर्थं गाथा—

**सम्मत्तदेसविरता[10] पलितस्स असंखभागमेत्ता[11] तु[12] ।**
**अट्ठ भवाणि चरित्ते अणंतकालं च सुतसमए ॥६३४॥३२९२॥ दारं ॥**

**सम्मत्तदेसविरता** इत्यादि । सम्यग्दर्शनमेके(कस्मिन्) भवे प्रतिपद्य तस्मिन्नेव च त्यक्त(क्त्वा) पुनरनन्तरभवेऽपि प्रतिपद्यते, एवमुत्कर्षतः कियन्ति भवग्रहणानि निरन्तरं लभते ? आह—क्षेत्रपल्योपमासंख्येयभागाकाशप्रदेशसंख्यातुल्यानि भवग्रहणानि लभते उत्कर्षतः, ततः परमवश्यं सिध्यतीति । श्रुतसामायिकं निरन्तरमनन्तान्यपि भवग्रहणानि लभते । मिथ्याश्रुतं प्राप्य नान्यदिति जघन्येन एकं भवम् ॥३२९२॥

अथ आकर्षाः । आकर्षणमाकर्षः कवड(कवल)ग्रहास्वादनवत् । ते चाकर्षाः एकभवग्रहणे नानाभवेषु च । तत्रैकभवग्रहणे—

---

१ °म्मागा° को, सम्मसुयागा° हे त, सम्मसुअमगा° म, सम्मसुयअगा° दी हा । २ °मित्तओ म त, °मेत्ताओ को हे । ३ °सिं हे म, °सु दी हा । ४ °ण्णदो को हे त दी हा म । ५ °या को हे त दी हा म । ६ °इ म । ७ °ए हे को त दी हा, °इ म । ८ पण° को । ९ °त्तो जे । १० °रइं दी हा । ११ °मित्ता म, °मित्ती त । १२ ओ को हे त दी हा म ।

**तिण्हं सहस्सपुधत्तं सयप्पुधत्तं च होति विरतीए ।**
**एगभवे आगरिसा एवतिया होन्ति णातव्वा ॥६३५॥३२९३॥**

**तिण्ह सहस्सपुधत्तं ।** त्रयाणाम्– सम्यक्त्वस्य श्रुतस्य देशविरतेश्च जघन्येनैक आकर्षेः(र्षः), उत्कर्षेण सहस्रपृथक्त्वम्, सर्वविरतेः जघन्येनैक आकर्षः, उत्कर्षेण शतपृथक्त्वम् ॥३२९३॥

अथ नानाभवेषु—

**दोण्हं पुधत्तमसंखा सहस्सपुधत्तं च होति विरतीए ।**
**णाणभवे आगरिसा सुते अणंता तु णातव्वा ॥६३६॥३२९४॥**

**दोण्ह पुधत्तमसंखा ।** द्वयोः सम्यक्त्व-श्रुतयोर्नानाभव आकर्षाः–जघन्येन पृथक्त्वं द्वावाकर्षौ, एकस्मिन् भवे एकः, द्वितीयेऽप्येक एव, उत्कर्षेण तु एतदेव द्विपृथक्त्वमसंख्येयभवग्रहणगुणितमसंख्येया आकर्षा भवन्ति । विरतेर्नानाभवग्रहणाकर्षाः जघन्येन द्वावेव, उत्कर्षेण तावेव शतपृथक्त्वगुणितौ सहस्रपृथक्त्वं भवति, श्रुतस्य नानाभवग्रहणेष्वनन्ता भवन्ति, आनन्त्याद् भवग्रहणानामिति ॥३२९४॥

अथ स्पर्शनद्वारमुच्यते—

**सम्मत्तचरणसहिता सव्वं लोगं फुसे णिरवसेसं ।**
**सत्त य चोद्दस भागे पंच य सुतदेसविरतीए ॥६३७॥३२९५॥**

**सम्मत्तचरणसहिता ।** सम्यक्त्व-चरणसामायिकद्वये वर्तमानो जीवः असङ्ख्येयभागं वा स्पृशति समुद्घातरहितः, स एव समुद्घातवान् केवली दण्डकपाटादिषु सङ्ख्येयभागं वाऽसंख्येयान् वा बहून्नङ्गान् (हून् भागान्), असंख्येयान् वा बहुतरान्, अन्तरपूरणे वा समस्तं लोकं स्पृशेत् । अतोऽत्र सर्वोत्कृष्टस्पर्शने सूत्रनिपातः । श्रुतसामायिकवान् उत्कर्षेण सप्त चतुर्दशभागान् लोकस्य स्पृशेत् । अना(न)गारः श्रुतज्ञानी अनुत्तरो(रौ)पपातिकेषूपपद्यमानः, उत्कृष्टश्रुतज्ञानी अधो नोपपद्यते, देशविरतिसामायिकी ऊर्ध्वमेवोपपद्यमान उत्कर्षेणाच्युते कल्पे नोपरिष्टात् ततः पञ्च चतुर्दशभागान् स्पृशेत्, चतुर्दशभागो लोकस्य रज्जुरुच्यते ॥३२९५॥ एवं तावत् क्षेत्रस्पर्शनम् ॥

अथैषामेव चतुर्णां सामायिकानां किं केन जीवेन स्पृष्टपूर्वम् संप्राप्तपूर्वमित्यर्थः । अत उच्यते—

---

१ °हं हे । २ °हुत्तं को त दी हा म । ३ समयपु° त, सयपु° जे को दी हे । ४ °हुत्तं को दी हा म । ५ तिण्ह दी हा म । ६ पुहुत्त° को त दी हा म, °त्तसहस्समसं° दी हा म । ७ °हस्स° जे । ८ °पुहु° को हे दी हा म । ९ एवइया होंति णा° दी हा म । १० चउदस भागे म । ११ °भागे दी हा ।

सव्वज्जीवेहि सुतं[२१७-प्र०]सम्मचरित्ताइं सव्वसिद्धेहिं ।
भागेहि असंखेज्जेहि फासिता देसविरतीए[1] ॥६३८॥३२९६॥

सव्वज्जीवेहि सुतं । श्रुतज्ञानं मिथ्यादृष्टिरपि लभते इति सर्वजीवैरनन्तेन कालेन श्रुतसामायिकं लब्धपूर्वमिति सुखमेवोच्यते । सम्यक्त्वसामायिकं चारित्रसामायिकं च सर्वसिद्धैः स्पृष्टपूर्वं [असंख्ये]यानां भागानामसंख्येयानि स्थानानि । तत्र बहुभिरसंख्येयैर्भागैः स्पृष्टा देशविरतिः,तां स्पृष्टा(ष्ट्वा) सर्वविरतिं [प्रति]पद्य सिद्धास्ते । अन्ये पुनर्देशविरतिमप्रतिपद्यैव प्रथमं सर्वविरतिमेव प्रतिपद्य सिद्धाः, तेऽप्यसंख्येया एव भागाः ॥३२९६॥ स्पर्शनद्वारं गतम् ॥

अथ निरुक्तिरिति द्वारम् । सामायिकस्य चतुर्विधस्यापि निर्वचनं निरुक्तिः—क्रियाकारकभेद-पर्यायकथन-वाक्यान्तरैस्त्रिभिः शब्दार्थव्याख्यानं विशेषलक्षणमित्यर्थः । एतदनेकपर्यायाख्यानं प्रदेशान्तरेषु सूत्रबन्धानुलोम्य(मा)र्थमसम्मोहार्थं च । तत्र यथाक्रमेण सम्यक्त्वसामायिकादीनां चतस्र एव गाथाः—

सम्मद्दिट्ठि अमोहो सोधी सब्भावदंसणं बोधी ।
अविवज्जओ[2] सुदिट्ठि[3] त्ति एवमाती णिरुत्ताइं ॥६३९॥३२९७॥

अक्खर सण्णी सम्मं [4]सातीयं खलु सपज्जवसितं च ।
गमियं अंगपविट्ठं सत्त वि एते सपडिवक्खा ॥६४०॥३२९८॥

विरताविरती संवुडमसंवुडे[5] बालपंडिए[6] चेव ।
देसेक्कदेसविरती अणुधम्मोऽगारधम्मो त्ति[7] ॥६४१॥३२९९॥

सामाइयं समतियं सम्मावातो समास संखेवो ।
अणवज्जं च परिण्णा पच्चक्खाणे[10] य ते अट्ठ[11] ॥६४२॥३३००॥

सम्मदिट्ठि अमोहो । अक्खर सण्णी । विरताविरती । सामाइयं समतियं । ॥३२९७–३३००॥

आसां भाष्यगाथा अनुक्रमेण—

---

१ °त को हे, °ओ दी हा म । २ °ज्ज सु° त । ३ °ट्ठी ए° हे । ४ साइयं हे म, सादियं दी हा । ५ °वुड° को हे त दी हा म । ६ °तं को जे । ७ अगा° जे दी हा । ८ य हे त दी हा म । ९ साम° त । १० °णं को हे । ११ अट्ठा हे ।

तच्चा सम्मादिं ट्ठि त्ति दंसणं तेण सम्मदिट्ठि त्ति ।
मोहो वितधग्गाहो तदण्णधा दंसणममोहो ॥३३०१॥

तच्चा सम्मा० इत्यादि । तद्भावस्तत्त्वम्, तत्त्वमेवार्थो यस्याः सा तत्त्वार्था । दृष्टिर्दर्शनम्—अभ्युपगमः, सम्यक्छब्दस्तत्त्वार्थ इति सम्यक् तत्त्वेनार्थानां प्रतिपत्तिः, अर्थशब्दस्योत्तरपदलोपं कृत्वा तत्त्वा सम्यग्दृष्टिरुच्यते इति स्त्रीलिङ्गनिर्देशः । 'मुह वैचित्ये' मोहनं मोहः—वितथग्राहः—अन्यथाप्ररूपणा, न मोह इत्यमोहः—अवितथग्राह इत्यर्थः ॥३३०१॥

मिच्छत्तमलावगमो सोधी सब्भावता जिणाभिहितं ।
दंसणमिह तग्गाहो बोधी तच्चत्थसंबोधो ॥३३०२॥

मिच्छत्तमलावगमो इत्यादि । 'शुध शौचे' शोधनं शुद्धिर्वस्त्रादेर्मलापगमः, जीवस्यापि मिथ्यात्वमलापगमाच्छुद्धिः सम्यग्दर्शनम् । सत्—जिनाभिहितं प्रवचनम्, तस्य भावः [सद्भावः] सद्भावोऽस्यास्ति श्रद्धेयत्वेनेति "आ(अ)र्शादिभ्योऽच्" [५ । २ । १२७ । पाणि०] ['अच्'] प्रत्ययः । सद्भावः—दर्शनम्—अभ्युपगमः—श्रद्धानं वा, अथवा सद्भावः परमार्थः जिनप्रवचनम्, तस्य ग्राहो दर्शनम्—जिनवचनमेवैकं परमार्थः, नान्यानि वचनानीति—सद्भावदर्शनं सम्यग्दर्शनम् । बोधनं बुद्धिः—इति औणादिक 'इन्'—तत्त्वार्थसम्बोध इत्यर्थः ॥३३०२॥

अविवरीतं अविवज्जओ सुदिट्ठि त्ति सोभणा दिट्ठी ।
सम्मत्तणिरुत्ताइं वच्चाणी हेवमातीणि ॥३३०३॥

अविवरीतं अविवज्जओ । विपर्ययेण पर्यायाणामन्यथाप्ररूपणं विपर्ययः-विपरीतमित्यर्थः, तत्प्रतिषेधादविपर्ययः सम्यग्दर्शनम् । 'सु'शब्दः प्रशंसायां निपातः । शोभना दृष्टिः सुदृष्टिः । सम्यग्दर्शनमेव बहुभिः शब्दैरुक्तं निश्चयेनोक्तमित्यर्थः । सर्वदेशान्तरेषु शास्त्रान्तरेषु च प्रसिद्धा इत्यपरिगणनं पश्यन्नाह—सम्यग्दर्शनस्यैवमादीनि निरुक्तानि बहूनि वाच्यानीति ॥३३०३॥

एमेव[२१७–द्वि०]सेससामाइयाण सव्वपरियायवयणाणं ।
वच्चाइं णिरुत्ताइं णिरुत्तसद्दत्थमग्गेणं ॥३३०४॥

एमेव सेससामा० । लाघवार्थमतिदेशाख्यानम् । अनेनैव नैरुक्तशब्दार्थेन मार्गेण यथायोगमभ्यूह्यानि ॥३३०४॥

तथाऽपि सामायिकपर्यायनिर्वचनमाचार्यः प्रदर्शयति प्रस्तुतप्राधान्यख्यापनार्थम्—

१ सम्मं को, सम्म° हे त । २ °दिं हे त । ३ तं त । ४ तधण्ण° जे । ५ हि त । ६ अवि° हे, °व्विरी° को । ७ तच्चा° त । ८ °णिह एव जे । ९ एमेव सेसयाइं-इति प्रतौ ।

रागद्दोसविरहितो समो त्ति अयणं अयो त्ति गमणं ति ।
समतागमो समायो स एव सामाइयं होति ॥३३०५॥
सम्ममयो समयो [1]त्ति य सम्मं गमणं तु[2] सव्वभूतेसु ।
सो जस्स तं समइयं जम्मि व भेतोवयारेणं ॥३३०६॥

रागद्दोसविरहितो इत्यादि । रागो माया-लोभस्वरूपः, द्वेषः क्रोध-मानस्वात्मा, उभयं विषम्य(म)गमनम्—उभयमार्गान्तरालवर्त्ती समो मध्यस्थ उच्यते, 'इण् गतौ' इत्यस्य अयनमयः—गमनमित्यर्थः—सम्यग् अयः समायः—समताप्रतिपत्तिः, स एव समायः—स्वार्थे "विनयादिभ्यष्ठक्" [५ । ४ । ३४ । पाणि०]—सामायिकम् । अथवा 'सम्' इत्युपसर्गः 'सम्यक्'शब्दस्यार्थे । सङ्गतः अयः समयः—सम्यग् भूतेषु स(ग)मनं दयापूर्वकम्—समयोऽस्यास्तीति—"अत इनिठनौ" [५ । २ । ११५ । पाणि०] इति ठन् प्रत्ययः, "ठस्येकः" [७ । ३ । ५० । पाणि०] इति इकादेशः—समयिकम् । 'जंमि व' इति सप्तम्यर्थं दर्शयति—समायोऽस्मिन् विद्यत इति तथैव ठन् । भेदोपचारेण जीव-गुणयोरिति ॥३३०५–६॥

रागादिरहो सम्मं वयणं वादोऽभिधाणमुत्ति त्ति ।
रागातिरहितवातो सम्मावातो ति सामइयं ॥३३०७॥
अप्पक्खरं समासो अथवा [4]सोऽसणमधासणं सव्वा ।
सम्मं [6]समस्स [7]वासो होति समासो त्ति सामइयं ॥३३०८॥

रागादिरहो सम्मं । अप्पक्खरं समासो । अल्पाक्षरता चत्वार्यक्षराणि सामायिकमिति । तस्य पर्यायशब्दः समासः अव्युत्पत्तिपक्षे । अथ व्युत्पाद्यते—'असु क्षेपणे' असनं आसः—क्षेप इत्यर्थः । 'सं'शब्दः प्रशंसार्थे । शोभनमसनं समसनं समासः, 'सद्धा' इ[ति] 'वा'शब्दः पूर्वविकल्पसंसूचनार्थः, उत्तरविकल्पप्रदर्शनार्थो वा । अथवा 'सं'शब्दः सम्यगर्थः सम्यगासः । अथवा रागद्वेषरहितः सम इत्युक्तः, तस्य समस्य मध्य[स्थ]स्य आसः क्षेपः—संयमक्रियाणां समासः । अथवा 'आस उपवेशने' आसनम् आसः, तथैव 'सं'शब्दस्य व्युत्पत्तिः । स एवंविधः समासः सामायिकमित्युच्यते ॥३३०७–८॥

संखिवणं संखेवो सो जं थोवक्खरं महत्थं च ।
सामइयं संखेवो चोदसपुव्वत्थपिण्डो त्ति ॥३३०९॥ दारं ॥

---

१ अठ को, आठ हे । २ °उ हे । ३ य स° हे त । ४ सा त । ५ सद्धा जे को । ६ सम्म° जे । ७ वसो जे । ८ °नससज्ञसमसनं—इति प्रतौ

**संखिवणं संखेवो**। 'क्षिप प्रेरणे' संक्षेपः स्तोकाक्षरं सामायिकमिति। अथ च महार्थम्, चतुर्दशपूर्वपिण्डार्थत्वात् ॥३३०९॥

**पावमवज्जं सामाइयं [1]अपावं ति तो तदणवज्जं।**
**पावमणं ति व जम्हा वज्जिज्जति तेण तदसेसं ॥३३१०॥**

**पावमवज्जं** इत्यादि। "अवद्यपण्य०[३।१।१०१।पाणि०] इति निपातनात् अवद्यं गर्ह्यमुच्यते–पापमित्यर्थः। नास्मिन् अवद्यमस्तीत्यनवद्यम् अपापमित्यर्थः। अथवा 'आ(अ)न प्राणने' अन(नि)तीति अनम्–"पचादिभ्योऽच्" [३।१।१३४।काशि०]–पापमित्यर्थः। 'वृजी वर्जने' अनं वर्ज्यते येन, अनं वर्जयतीति वा अनवर्ज्यम्–सामायिकमुच्यते। अशेषपापवर्जना–सर्वसावद्यविरतिः ॥३३१०॥

**पावपरिच्चायत्थं परितो णाणं मता परिण्ण त्ति। दारं।**
**[2]पेडि वत्थुमिह[२१८–म०]ऽक्खाणं पच्चक्खाणं णिवित्ति त्ति ॥३३११॥**

**पावपरिच्चायत्थं**। 'परि'इत्युपसर्गः समस्तार्थे। परितः समन्तात्, ज्ञानम् पापपरित्यागार्थम[3]न्यज्ञानमेवेति परिज्ञा सामायिकम्। परिहरणीयं वस्तु प्रति आख्यानं प्रत्याख्यानम्–पापनिवृत्तिरित्यर्थः। एवमेवेति सामायिकपर्याया अष्टौ व्याख्याताः ॥३३११॥

एतेषामष्टानामप्यर्थानामनुष्ठातारो यथासंख्येनाष्टावेव दृष्टान्तभूता महात्मान आख्यायन्ते—

**दमदंते मेतज्जे कालगपुच्छा चिलात अत्ते य।**
**धम्मरुइ इला तेतलि[4] सामंइए[5] अट्ठुदाहरणा ॥६४३॥३३१२[6]॥**

तत्र यथोद्देशं निर्देश इति पूर्वं समशब्दं मध्यस्थतायां निरूप्य सामायिकशब्दोऽभिहितः। तदर्थानुष्ठानं रागद्वेषवर्जनान्मध्यस्थतां गतेन दमदन्ताऽनगारेण कृतमिति॥३३१२॥

तस्य निष्क्रमणादिविरचिता(त)मुवर्णनमुपदेशार्थमद्यकालमनुष्याणाम्–

**णिक्खंतो हत्थिसीसा दमदंतो कामभोगमवहाय।**
**णवि रज्जति रत्तेसु दुट्ठेसु ण दोसमावज्जे ॥३३१३[7]॥**

---

१ °यं पा° त। २ पइ° को हे त हे। ३ अन्येषां हेयोपादेयादीनां ज्ञानम्। ४° ल हे। ५ समा° हे जे। ६ दी हा म आसु प्रतिषु इयं ३३१२ गाथा भाष्यगाथा। ३३१२ गाथाया अनन्तरम् अथ निर्देशः त प्रतौ–'निक्खंतो हत्थिसीसाओ' इत्यादिकाः 'पच्चक्खे दट्ठूणं' इत्यादिपर्यन्ताः सप्तदश निर्युक्तिगाथाः। समाप्ता उपोद्घातनिर्युक्तिः। "विस्तरार्थस्तु 'निक्खंतो हत्थिसीसाओ'इत्यादिकाभ्यः 'पच्चक्खं दट्ठूणं'इत्यादिगाथापर्यन्ताभ्यः सप्तदशगाथाभ्यो मूलावश्यकलिखितविवरणसहिताभ्यो मन्तव्यः" इति हे मुद्रितपुस्तके पृ०१११०। ३३१२ संख्यान्विता एषा संपूर्णा गाथा उद्धृता टीकायाः प्रतौ। तत्र च 'चिलयपुत्ते य' इति पाठान्तरम्। इयं गाथा भाष्यरूपा को दी हा म।

वन्दिज्जमाणा ण समुण्णमंति, हीलिज्जमाणा ण समुज्जलन्ति ।
दंतेण चित्तेण चरंति लोए[1], मुणी समुग्घातितरागदोसा ॥३३१४॥

जध मम ण पियं दुक्खं जाणिय एमेव सव्वजीवाणं ।
ण हणति ण हणावेइ य सममं[3] अणति तेण सो समणो ॥३३१५[4]॥

णत्थि य सि[5] कोति वेस्सो[6] पियो वँ सव्वेसु चेव जीवेसु ।
एतेण होति समणो एसो अण्णो वि पज्जाओ ॥३३१६॥[8]

तो समणो जति सुमणो भावेण य जति ण होति पावमणो ।
सयणे य जणे य समो समो य माणावमाणेसु ॥३३१७॥

णिक्खंतो हत्थिसीसा दमदंतो इत्यादिगाथाः पञ्च स्फुटार्थाः ॥ अथैतदर्थोपसंहारि प्रमाणम्—अद्यकालेऽप्याराधकाः सम्यक् साधवः, स्तोतृ-निन्दका(के) समभावानुष्ठायित्वात्, परित्यक्तकामभोगहस्तिनागपुरबहिष्प्रतिमास्थितयुधिष्ठिरादि-वन्दितदुर्योधनादिनिन्दितताडिताऽविकृतचित्तसमप्रियद्वेष्यपक्षहस्तिशीर्षाधिपतिदमदन्तराजर्षिवत् ॥३३१३–१७॥

जो कोंचगावराधे पाणिदया कोंचगं तु णाइक्खे ।
जीवितमणवेहंतं मेतज्ज[२१८–द्वि०]रिसिं णमंसामि ॥३३१८॥

णिप्फे[10]डिताणि दोण्णि वि सीसावेढेण जस्स अच्छीणि ।
ण य संजमातो चलितो मेतज्जो मंदरगिरि व्व ॥३३१९॥

जो कोंचगावराधे । णिप्फेडिताणि । गाथाद्वयं स्फुटार्थम् । प्रमाणं तु—सैव प्रतिज्ञा, हेतु-दृष्टान्तौ निरुक्तवशादन्यौ । अद्यकालेऽप्याराधकास्साधवः, स्वजीवितादपि सर्वभूतजीविताधिकदर्शित्वात् प्राणिदयात्मकत्वादित्यर्थः । सुवर्णकाराङ्गणगोचरावस्थितानाख्यातक्रौञ्चकसौवर्णयवभक्षणे(णा)पराधशिरोबन्धनिष्कासितनयनद्वयस्व-जीवितानपेक्षाराधितसामायिकमेतार्यमुनिवत् ॥३३१८–१९॥

---

१ °मुक्कस्संति को, °मुक्कसंति दी हा म । २ धीरा को दी हा म । ३ सममणतो वें° को । ४ इयं गाथा दी हा म प्रतिषु नास्ति । ५ से जे म । ६ वेसो को दी हा म । ७ अ म । ८ इयं गाथा दी हा म प्रतिषु ३३१५ गाथातः पूर्वम् । ९ °णु° म । १० °प्फा° जे । ११ ·माइ को ।

दत्तेण पुच्छितो जो जण्णफलं कालेगो तुरुमिणी[1] ।
समेताय[2] आहितेणं सम्मं वुतितं भयंतेणं ॥३३२०॥

दत्तेण पुच्छितो जो। सैव प्रतिज्ञा । अतिमहति प्राणि(ण)भयेऽपि यथार्थ-सम्यग्वादित्वात्, अतिक्रूरकर्मार्जितराज्यनरकगामिधिग्जातिदत्तपरि[पृष्ट]यज्ञफलसम्यग्वादितन्मातुलकालकमुनिवत्। अतिनिष्ठुरप्रश्नोपलक्षणात् 'काल[क]पृच्छा'इति सूत्रनिर्देशः [गा०३३१२], पर्याय-पर्यायिणोरभेददर्शना[त्] कालका(क)निरूपिता यज्ञफलपृच्छा 'कालकपृच्छा'इति भण्यते। कालक एवासौ तेन पर्यायेण निदिश्यते। तेन कालकेन सम्यग्वादानुष्ठायिना सम्यगुदितं भगवता भदन्तेन विगतभयेन दान्तेन ॥३३२०॥

जो तिहि पतेहिं धम्मं समभिगतो संजमं समारूढो ।
उवसम-विवेग-संवरचिलातपुत्तं णमंसामि ॥३३२१॥
अहिसरिता पाएहिं सोणितगंधेण जस्स कीडीओ ।
खायंति उत्तिमंगं तं दुक्करकारयं वंदे ॥३३२२॥
धीरो चिलातपुत्तो मूइंगलियाहि चालिणि व्व कतो ।
[11]जो तध वि खज्जमाणो पडिवण्णो[12] उत्तमं अट्ठं ॥३३२३॥
[13]अड्ढातिएहिं[14] रातिदिएहि [15]लद्धं चिलातपुत्तेणं ।
देविंदामरभवणं अच्छरगणसंकुलं रम्मं ॥३३२४॥

**जो तिहि पतेहिं धम्मं समभिगतो। अहिसरिता पाएहिं। धीरो चिलातपुत्तो। अड्ढातिएहिं।** उत्तानार्थाः। त्रीणि पदानि उपशम-विवेक-संवराः। उपशमः क्रोधादिनिग्रहः। विवेकः स्वजन-धनादेः परित्यागः। संवरः इन्द्रिय-नोइन्द्रियगुप्तिः। एतत् पदत्रयं धर्मसमासः। एतदात्मकत्वात् परिणामाऽनन्यत्वात् चिलातपुत्र एव उपशम-विवेक-संवरः, स चासौ चिलातपुत्रश्चेति समानाधिकरणसमासः। तं नमस्ये [इति] सूत्रकारश्चारित्रविनयप्रख्यापनार्थमाह। एवमद्यतमेऽप्याराधकाः साधवः, उपशम-विवेक-संवरपदत्रयाक्षिप्तसकलसामायिकार्थानुष्ठायित्वात्, चिलातपुत्रवत् ॥३३२१-२४॥

१ °लओ उ तुरमि° को, तुरमणी म । तुरुमिणी नगर्या नाम । श्रीमलय० 'तुरमिणी' इति सूचयति-वृ० पृ० ४७९ प्र० । २ °मयाए दी हा, °मयाइ म, °मयासमाहि° को । ३ °तभुयदान्तेन इति प्रतौ । ४ सम्मं दी हा म । ५ समभिरू° को । ६ °लाइपु° म । ७ उत्तमं° दी हा म । ८ °लाइ° म । ९ मूइंगि° को, मूतिंग° दी हा० वृ०पृ०३७२ प्र० । १० °लि° दी हा म । ११ सो दी हा म । १२ °ण्णं जे । १३ अद्धा° म । १४ °ज्जेहिं को दी.हा म । १५ पत्तं को दी हा म । १६ °लाइ° दी हा म । १७ धर्मसंक्षेपः ।

सतसाहस्सं गंथा सहस्स पंच य दिवड्ढमेगं च ।
ठविता एगसिलोगे संखेवो एस णातव्वो ॥३३२५॥
जिण्णे भोयणमत्तेयो कविलो पाणिणं दया ।
वाहस्स[२१९-प्र०]तीरविस्सासो पंचाला थीसु मद्दवं ॥३३२६॥

**सतसाहस्सं** इत्यादि । **जिण्णे भोयणमत्तेयो** इत्यादि । **आत्रेयेणायुर्वेद**-संहिता शतसहस्रेण निबद्धा । तथा आन्वीक्षिकी विद्या **कपिलेन** । दण्डनीतिविद्या **बृहस्पतिना** । कामविद्या **पञ्चालेन** । अतिविस्तरः श्रोतुं ग्रहीतुं वा अशक्य इति सहस्रेण सहस्रेण सर्वैः स्वसंहिताः संक्षिप्ताः । सोऽपि विस्तर इति संक्षेपरुचिबुद्ध्यपेक्षया पञ्चभिः शतैः संक्षिप्ताः । तदप्यनिच्छतः एकैकेन श्लोकेन । ततोऽपि यदि संक्षिप्ततरं भूयादिति चिन्तासमनन्तरमेव चतुर्भिः ऋषिभिः एकैकश्लोकपादः स्वशास्त्रसंक्षेपायोक्तः । चतुर्णामप्येकः श्लोकः संवृत्तः सहैव कर्तृवचनेन, अन्यथा श्लोकपादोऽप्यन्यः । तद्यथा—'जीर्णे भोजनम्'इति—आयुर्वेदसंहितासंक्षेपः—**आत्रेयः** । 'एवमाह'इति सर्वेषां वाक्यशेषः । धर्मसंहितासंक्षेपः—'प्राणिनां दया' **कपिल** एवमाह । अर्थशास्त्रसंक्षेपः—'अविश्वासः सर्वत्र'इति **बृहस्पतिराह** । कामशास्त्रसंक्षेपः—'स्त्रीषु मार्दवं कार्यम्'इति **पञ्चाल** आह । एवमैदंयुगीनसाधवश्चतुर्दशपूर्वसंगृहीतसामायिकार्थाराधकाः, संक्षेपानुष्ठायित्वात्, अभिप्रेतार्थाराधकस्वशास्त्रसंक्षेपार्थानुष्ठाय्यात्रय-कपिल-बृहस्पति-पञ्चालवत् ॥३३२५-२६॥

सोतूण अणाउट्टिं अणभीतो वज्जिऊण अणगं तु ।
अणवज्जतं उवगतो धम्मरुई णाम अणगारो ॥३३२७॥

**सोतूण अणाउट्टिं** । आकुट्टनमाकुट्टिः—छेदनम्-हिंसेत्यर्थः । 'अण रण च(व)ण गतौ' गच्छति तासु तासु जीवयोनिष्विति अणं पापकर्म, वर्जनीयो वर्ज्यः, अणस्य पापस्य वर्ज्यः सर्वसावद्यविरतिः साधुः, पापेनासौ वर्ज्यते इति । धर्मरुचिस्तापसः श्रुत्वा एकदिवसानाकुट्टिं परिमितकायविषयाम् अणस्य भीतः सर्वजीवविषयां सर्वकालिकीं च अनाकुट्टिं साधुभ्यः श्रुत्वा अणं वर्जयित्वा अणवर्जतामुपगतः, यथाऽसौ अपि अणेन पापेन वर्ज्यते तथा स्थितः अनगारः संवृत्त(त) इति । एवमाराधकाः साधवः अणवर्जानुष्ठायित्वाद्धर्मरुचिवत् ॥३३२७॥

१ °हस्सा को हे दी हा म । २ °द्द° म । ३ °लो को । ४ °णा त । ५ बह° को । ६ पञ्चालो को । ७ °णाउट्टिं जे । ८ °ज्जियाण को ले ।

**परिजाणितूण जीवे अज्जीवे जाणणापरिण्णाए ।**
**सावज्जजोगकरणं परिजाणति से[1] इलापुत्ते[2] ॥३३२८॥**

**परिजाणितूण जीवे** इत्यादि । आराधकाः साधवः, जीवाजीवपरिज्ञानानन्तरं सावद्यपरित्यागित्वात्, इलापुत्रवत् ॥३३२८॥

**पच्चक्खे[3] वि य दट्ठुं[4] जीवाजीवे य पुण्णपावं च ।**
**पच्चक्खाता जोगा सावज्जा तेतलिसुतेणं ॥३३२९॥**

**॥ सामायिक[स्य उपोद्घात]निर्युक्तिः समाप्ता ॥**

**पच्चक्खे वि य दट्ठुं** इत्यादि । सम्प्रत्यप्याराधकाः साधवः, प्रत्यक्षीकृतजीवाजीवपुण्यपापत्वे सति सावद्ययोगि(ग)प्रत्याख्यायित्वात्, तेतलिसुतवत् । एवं निर्यु(रु)क्तिद्वारमनुगतम् ॥ तथा चोपोद्घातनिर्युक्तिः समाप्ता भवति ॥३३२९॥

१ सो दी हा म । २ °त्तो दी हा म । ३ °क्खे इव द० दी म । °क्खे द० हा । ४ दट्ठूणं दी हा ।

अथ सामायिकस्य सूत्रस्पर्शिकनिर्युक्तौ नमस्कारविचारः।

अथ सूत्रस्पर्शिकनिर्युक्तचवसर इति गाथा सम्बन्धाभिधायिनी—

इति[1] एसं[2] उवग्घातोऽभिहितो सामाइयस्स तस्सेयं[3]।

अधुणा सुत्तप्फासियणिज्जुत्ती सुत्तवक्खाणं ॥३३३०॥

इति एस उवग्घातो। 'इति' शब्द उपोद्घातपरिसमाप्तिद्योतकार्थे। कस्येति चेत्? सामायिकस्य–इदानीमधुना सामायिकस्य सूत्रस्पर्शिकनिर्युक्तिः। किमुक्तं भवति –सूत्रव्याख्यानमित्यर्थः ॥३३३०॥

सूत्रस्य व्याख्यानमिति षष्ठ्या विग्रहे [सूत्रं] सूत्रा[नु]गमे ऽभिहितम्। तदर्था गाथा—

सुत्तं सुत्ताणुगमे[4] तं च णमोक्कारपुव्वयं जेणं।

सो सव्वसुतक्खंधब्भन्तरंभूतो[5] त्ति णिद्दिट्ठो ॥३३३१॥

सुत्तं सुत्ताणुगमे। तच्च 'पञ्चनमस्कारपूर्वकम्' इत्युक्तं प्राक्, सर्वश्रुतस्कन्धाभ्यन्तरत्वात् पञ्चनमस्कारस्यादावुच्चारणं व्याख्यानं चेति तदवसरः। प्रमाणं च– सूत्रव्याख्याने पञ्चनमस्कार आदौ व्याख्येयः, सर्वसूत्रादित्वात्, सर्वसम्मतसूत्रादिवत् ॥३३३१॥

अत्र कश्चिदाह–सूत्रादित्वं नमस्कारस्यासिद्धम्। तत्प्रसाधनाय प्रमाणम्– सूत्रस्यादिर्नमस्कारः, सूत्रादौ व्याख्यायमानत्वात्, उभयप्रसिद्धसूत्रादिपदवत्। तत्रासौ पुनरप्याह–मङ्गलं नन्द्यादि सूत्रादिर्न भवति, पृथक् श्रुतस्कन्धत्वात्, तत्र च सूत्रादौ व्याख्यायमानत्वं विपक्षेऽपि दृष्टमित्यनैकान्तिकः। तस्मात् सूत्रादिर्न भवति नमस्कारः। एवं तर्हि मङ्गलत्वादेवादौ व्याख्यास्यते। मङ्गलं च त्रिप्रकारम्–आदौ मध्येऽवसाने चेति। तत्रादिमङ्गलार्था नन्दी व्याख्याता। मध्यमङ्गलार्थस्तीर्थकरसामान्याभिधानविशेषतीर्थाधिपतिमहावीरतच्छिष्यगणधरवाचकवंशप्रवचनगुणोत्कीर्तननमस्कारसूचनो गाथा[प्र]पञ्च उक्तः। परिशेषादवसानमङ्गलार्थोऽयं पञ्चनमस्कार इति केषाञ्चिद् बुद्धिस्तदर्थमियं गाथा—

तं चावसाणमंगलमण्णे मण्णंति तं च सत्थस्स।

सव्वस्स भणितमंन्ते[6] इतमातीए कधं जुत्तं? ॥३३३२॥

तं चावसाणमंगलमण्णे इत्यादि। तदयुक्तमिति ख्याप्यते आचार्येण, तेषां दुर्बुद्धिरेषा–अवसानं मङ्गलमित्यभ्युपगम्य स्वयं शास्त्रादौ प्रस्तूयमानत्वात्। स चैवं स्ववचनविरोधः, पूर्वापरार्थव्याघातात्मकत्वात्, माता मे वन्ध्येति वाक्यवत् ॥३३३२॥

---

१ इह को हे। २ °सो त। ३ °व को हे। °वं त। ४ °मो हे त। ५ °रब्भूउ हे। ६ °मेते जे।

अथैवमाशङ्के(शङ्कते) परः—

**होज्जातिमंगलं सो तं कतमातीये किं पुणो तेण ।**
**अधवा कतं पि कीरइ[1] कत्थावत्थाणमेवं ति ? ॥३३३३॥**

**होज्जातिमंगलं सो** इत्यादि । एवं तर्ह्यादिमङ्गलमेवासौ पञ्चनमस्कारः, शास्त्रादौ व्याख्यायमानत्वान्नन्दिवत् । एवमप्यनर्थकव्याख्यानोऽसौ प्राप्नोति, कृतत्वात् । पुनर्नन्दीव्याख्यानवत् । पर आह—एतदप्यनैकान्तिकम्—कृतमपि विषनिर्घातार्थं मन्त्रपदोच्चारणं पुनः क्रियते, न चानर्थकम्, तद्वन्निर्जरार्थमादिमङ्गलव्याख्यानं पुनः क्रियमाणमपि सार्थकमेवेति नानर्थकव्याख्यानम्, पञ्चनमस्कारविशिष्टनिर्जरार्थत्वात्, त्रिः सामायिकोच्चारणवत् । ततो गाथापश्चार्द्धमाहाचार्यः उत्प्रेक्ष्य परपक्ष्य(क्षम्), अथवा भवदभिप्रायेण कृतमपि क्रियते चेत् पुनः करणेऽपि च गुणवदेव, सर्वदैव नन्दीव्याख्यानम् पञ्चनमस्कारव्याख्यानं वा अविरतमेव क्रियताम्, निर्जरार्थत्वात्, सर्वसावद्यविरतिक्रियावत् । तथा चानवस्थातः शेषसूत्रव्याख्यानाभावात् प्रवचनसम्प्रदायस्याभाव एव प्राप्नोतीति सूत्रैकदेश एव पञ्चनमस्कार इति युक्तं प्रतिपत्तुम्, तदाद्युच्चारणत्वात्, सूत्रादिपदवत् ॥३३३३ ॥

एतदर्थप्रदर्शनी गाथा—

**तम्हा सो सुत्तं चिय तदातिभावादतो तयं चेयं ।**
**पुव्वं वक्खा[२१९-द्वि०]णेतुं पच्छा वोच्छामि सामइयं[6] ॥३३३४॥**

---

१ °ए को हे त । २ कज्जं जे । ३ कज्जाव० जे । ४ °दायभा० त । ५ °व को हे त । ६ °यं ॥ निह्नववादपर्यन्तगाथा २६२८ उभय २८२३ । त । अत्र ३३३४ गाथातः समनन्तरम् ३३३५ गाथातः पूर्वं निम्नलिखितं गाथासप्तकं हा पृ० ३७४ म पृ० ४८२ मुद्रितपुस्तके अधिकम् उपलभ्यते—

अप्पग्गंथमहत्थं बत्तीसादोसविरहियं जं च ।
लक्खणजुत्तं सुत्तं अट्ठहि य गुणेहिं उववेयं ॥८८०॥
अलिय१मुवघायजणयं २ निरत्थ३मवत्थयं ४ छलं ५ दुहिलं ६ ।
निस्सार७महिय८मूणं९ पुणरुत्त १० वाहय११मजुत्तं १२ ॥८८१॥
कमभिन्न१३वयणभिन्नं १४ विभत्तिभिन्नं १५ लिंगभिन्नं १६ च ।
अणभिहिय१७मपय१८मेव य सभावहीणं १९ ववहियं च २० ॥८८२॥
काल २१ जति २२ च्छविदोसो २३ समयविरुद्धं २४ च वयणमेत्तं २५ च ।
अत्थावत्ती दोसो २६ य होइ असमासदोसो २७ य ॥८८३॥
उवमा २८ रूवगदोसो २९ निद्देस ३० पयत्थ ३१ संधिदोसो ३२ य ।
एए उ सुत्तदोसा बत्तीसं होंति नायव्वा ॥८८४॥
निद्दोसं सारवंतं च हेउजुत्तमलंकियं ।
उवणीयं सोवयारं च, मियं महुरमेव य ॥८८५॥
अप्पक्खरमसंदिद्धं सारवं विस्सतोमुहं ।
अत्थोभमणवज्जं च सुत्तं सव्वन्नुभासियं ॥८८६॥

तम्हा सो सुत्तं चिय । यस्मात् सूत्रमेव सूत्रावयवो नमस्कारः, तदादित्वात् । अनस्तमेव प्राग् व्याख्याय पश्चाद् व्याख्यास्यामः सामायिकम् ॥३३३४॥

इति नमस्कारनिर्युक्तिसूत्रापनी गाथा—

उप्पत्ती णिक्खेवो पदं पतत्थो परूवणा वत्थुं ।
अक्खेव पसिद्धि कमो पयोयण फलं णमोक्कारो ॥६४४॥३३३५॥
दारगाधा॥

उप्पत्ती णिक्खेवो इत्यादि । उत्पादनमुत्पत्तिरिति क्रियासामान्यम् । सत्पदार्थे(र्थों) नमस्कार इति सत् किञ्चिदुत्पादनत्रिविधेन प्रयोग-मि(वि)श्रसा-मिश्रात्मकेन सम्बध्यते । किञ्चिदनुत्पादमेव स्वतः परतो वा । एतन्नयापेक्षया चिन्त्यम् । निक्षेपणं निक्षेपः न्यास इत्यर्थः । सामान्यविशेषात्मकत्वाद् वस्तुनः सर्वव्यापिनी बुद्धिर्निक्षेपेण विशेषेऽवस्थाप्यते । स च वाग्गोचरे पद(दे) प्रतिबद्ध इति पदविचारः । तदर्थः सामान्यविशेषात्मक इति नयगतेर्बहुधाऽवस्थित इति पदार्थविचारः । तस्यार्थस्य निर्देशः सदाद्यनुयोगद्वारविषयत्वात् । द्विविधा प्ररूपणा—प्रकर्षनिरूपणा । वसन्त्यस्मिन् गुणा इति वस्तु नमस्कारार्हम्—नमस्कारस्याश्रयः । आक्षेपणमाक्षेपः बुद्धिपरिकर्मणार्थम्—'नैवेदमित्थं युज्यते' इति । तस्यैव स्वरूपावस्थानं प्रसिद्धिः । किमर्थमेषानुपूर्वीति प्रयोजनार्थः क्रमः । एतस्य पुनर्नमस्कारस्य किं प्रयोजनम् । क्रियानन्तरं फलं प्रयोजनम्, कालान्तरनिष्पन्नं प्रयोजनमेव फलमुच्यते इति प्रयोजन-फलयोर्विशेषः । एवमेतान्येकादशद्वाराणि नमस्कारवक्तव्यानीत्युद्देशः ॥३३३५॥

उत्पत्तिद्वारनिरूपणाय निर्युक्तिसूत्रगाथाद्वयम्—

उप्पण्णाणुप्पण्णो एत्थ णया [1]णेगमस्सऽणुप्पण्णो ।
सेसाणं उप्पण्णे[2] जति कत्तो तिविधसामित्ता ॥६४५॥३३३६॥

समुट्ठाण-वायणा-लद्धितो य पढमे णयत्तिए तिविधं ।
उज्जुसुत पढमवज्जं सेसणया ल[illegible] ॥६४६॥३३३७॥

उप्पण्णाणुप्पण्णो । समुट्ठाण-वायणा-लद्धितो य ॥३३३६–३७॥

अनयोर्भाष्यगाथा—

१ °या यातिणे° जे, याऽऽइणे° दी हा म । २ णिग० दी हा । ३ °ण्णो को हे दी हा म ।

सत्तामेत्तग्गाही जेणादि[illegible]णेगमो ततो तस्स ।
उप्पज्जति णाभूतं भूतं णे य णासते वत्थुं ॥३३३८॥

**सत्तामेत्तग्गाही** इत्यादि । उत्पन्नो नमस्कार उत्पत्तिमान् । अथवा अनुत्पन्नः, सदा सिद्धत्वादाकाशवत् । उत्पन्नश्च यः अनुत्पन्नश्च स इति समानाधिकरणसमासः । "क्तेन नञ्विशिष्टेनानञ्" [२।१।६०।पाणि०] कृताकृतादिवत् । स्याद्वादिन एवैवंप्रकारः समासो युज्यते, नैकान्तवादिनाम् 'परस्परविरुद्धधर्मसम्बन्धित्वमेककाले एकस्य वस्तुनो नास्ति' इति ब्रुवताम् । तत् पुनर्विरुद्ध[धर्म]सम्बन्धित्वम् एके(एकस्मिन्) काले नयमतैर्भाव्यते, व्यपेक्षावशात् ।

तत्र नया नैगमादयः सप्त । नैगमो द्विप्रकारः—समग्रग्राही आद्यः, देशसंग्राही विशेषपरिक्षेपी द्वितीयः । तत्रादिनैगमस्य—सामान्यमात्रावलम्बिता, सत्तामात्रग्राहित्वात्—सर्वं वस्तु सदेव । सत्त्वाच्च सदा सन्निहितत्वान्नाभूतः(तम्), भूति(त)त्वाच्च नोत्पद्यते, आकाशवत्, भूतत्वादेव न भविष्यति तद्वदेव ॥३३३८॥

तो तस्स णमोक्कारो वत्थुत्तणतो णभं व सो णिच्चो ।
संतं [2] पि तं ण सव्वो मुणति सरूवं व वरणातो ॥३३३९॥

**तो तस्स णमोक्कारो** । आदिनैगमस्य नमस्कारो नित्यः वस्तुत्वात् नभोवत्(नभस्वत्) । अथात्राशङ्केत कश्चित्—न नित्योऽसौ नसं(म)स्कारः, सदा सर्वेणानुपलभ्यमानत्वात्, घटादिवत् । यदा च नोपलभ्यते तदा नास्ति, अनुपलभ्यमानत्वात्, खरविषाणवत् । एतत्(तस्य) अनैकान्तिक[त्व]ख्यापनाय गाथापश्चार्द्धम्—"**संतं पि तं ण सव्वो मुणति सरूवं व वरणातो**। इह सतोऽपि वस्तुनः अति[4]दूरातिसामीप्येन्द्रियदौर्बल्यमनोऽनवस्थानोभिभवसौक्ष्म्याभिभव(क्ष्म्यव्यवधान)समानाभिहारादिभिः कारणैरनुपलब्धिरित्यनैकान्तिकः । स्वरूपं ह्यात्मनोऽस्ति । तद् ज्ञानावरणादतिसौक्ष्म्यात् केनचिन्नोपलभ्यते तद्वन्नमस्कारोऽपि विद्यमानः स्वावरणोदयात् केनचिन्नोपलभ्यते, न पुनरभाव इति कृत्वा एतदादिनैगमनयमतमाख्यातम् ॥३३३९॥

अथ शेषमतानि—

सेसमतं णत्थि तओऽणुप्पातविणासतो खपुप्फं व ।
जतिहत्थि तदुप्पात-व्वय-धुवधम्मं जहा कुंभो ॥३३४०॥

---

१ स त । २ पि ण तं स ँ त । ३ ँत्वान्नभवेत् इति प्रतौ । ४ "अतिदूरात् सामीप्यात् इन्द्रियघातात् मनोऽनवस्थानात् । सौक्ष्म्यात् व्यवधानात् अभिभवात् समानाभिहाराच्च" ॥७॥ सांख्यकारिका । ५ ँनानियत्सौँ इति प्रतौ । ६ ँस्ति ते ज्ञाँ इति प्रतौ ।

**सेसमतं णत्थि तओ।** शेषनयाः विशेषग्राहिणः आहुः—नास्ति तर्हि एवंविधो नमस्कारः, अनुत्पन्न(न्ना)विनाश्यत्वेनाभ्युपगतत्वात्, खपुष्पवत्। यच्चास्ति किञ्चित् तद् अनुत्पाद(दा)विनाशमपि न भवति। किं तर्हि ? सर्वमुत्पाद-व्यय-ध्रुवधर्मम्, यथा घटः ॥३३४०॥

यच्चोक्तमावरणादिभिरग्रहणमिति स संदिग्धासिद्ध इति गाथया प्रदर्श्यते—

**आवरणादग्गहणं णाभावातो त्ति तस्स को हेतू।**
**भत्तीय णमोक्कारो कधमत्थि य सा ण यग्गहणं ॥३३४१॥**

**आवरणादग्गहणं णाभावातो त्ति।** आवरणात् तस्याग्रहणं नमस्कारस्य, नाभावादिति कोऽत्र विशेषहेतुः ? नैवास्ति विशेषहेतुरित्यभिप्रायः। तस्मात् सन्दिग्धासिद्ध एव। भक्त्या हि नमस्कारः क्रियते सा च भक्तिः कस्यचिदस्ति अर्हदादिषु, न च पञ्चनमस्कारोपलब्धिः प्राज्ञस्याप्यनुपदेशात्। उपदेशसद्भावेऽपि स्वयं जर(ड)त्वात्। तस्मान्नास्ति, अनुपलभ्यमानत्वात्, खपुष्पवत् ॥३३४१॥

**अह परसंतो त्ति तओ संतो किं णाम कस्स णासंतं।**
**अधणादिव्ववदेसो णेवं ण य परधणाफलता ॥३३४२॥**

**अह परसंतो त्तितओ।** अथ तस्योपदेष्टुः परस्यासावस्ति, शैक्षस्य तु ज्ञानावरणोदयात् विद्यमानोऽपि उपलब्धिविषयं नायाति, ततः कारणान्तरादनुपलब्धिर्नाभावादिति। एतदप्ययुक्तमित्यादि। किं नाम वस्तु कस्य नासत्, अतिप्रसङ्गात्। यदि परकीयमपि सदुच्यते अधनव्यपदेशो लोके न स्यात्, परधनेनापि सर्वो धनवानेव प्राप्नोति, परस्वस्यापि स्वत्वाभ्युपगमात्, स्वधनवत्। परधनं च निष्फलं न स्यात् स्वते(त्वे)नाभ्युपगम्यमानत्वात् स्वधनवत् ॥३३४२॥

**सव्वधणं सामण्णं पाव[२२०–प्र०]ति भत्तीफलं चं सेसं च।**
**किरियाफलमेवं चाकतागमो कतविणासो य ॥३३४३॥**

**सव्वधणं सामण्णं।** सर्वस्यापि प्रति स्वधनं यत् तत् सर्वं सामान्यं प्राप्तम्, सर्वस्य स्वत्वात्। एकस्य भक्तिफलं सर्वेषां सामान्यं प्राप्तम्, शेषक्रिया-फलं च प्रत्येकविषयं सर्वसामान्यम् फलत्वाच्च स्वस्येव।

---

१ °वात को हे। २ तत्थ को हे त। ३ स जे। ४ तग्ग° को पृ०७९५। ५ सा वक्तः क° इति प्रतौ। ६ नो सं० को। ७ °त् परवत्। पर° इति प्रतौ। ८ व हे।

कदाचिद् ब्रूयात्—इत्थमेव भवतु, न कश्चिद्दोषः। तं दोषं महाप्रत्यवायं दर्शयति—अकृतकर्मागमः, कृतकर्मनाशश्च। तथा च संसाराभावः, सर्वसंव्यवहाराभावश्चेति ॥३३४३॥

**अध भत्तिमन्तसंताणतो स णिच्चो त्ति कधमणुप्पण्णो ? ।**
**णणु संताणणिच्चतो स होति बीयंकुरादि व्व ॥३३४४॥**

**अध भत्तिमन्तसंताणतो स णिच्चो त्ति।** अथैवं मन्येत परः—भक्तिमन्तो बहवः सन्ति, तत्सन्तानस्यानुच्छेदात्। तत्सन्ताननित्यत्वात् तदाश्रितो नमस्कारोऽपि नित्यो भविष्यति, लोकव्यवहारवत्। एवमपि कथमनुत्पन्नः? स्वाभ्युपगमेनैव नमस्कारस्योत्पत्तिरभ्युपगता, सन्तानिनां भक्तिमतामुत्पद्यमानत्वात्, घटोत्पत्ति(त्तौ) रक्तताद्युत्पादवत्, बीजाङ्कुराद्युत्पत्तिवद्वा ॥३३४४॥

**होज्जाहि णमोक्कारो णाणं सद्दो वं कायकिरिया वा ।**
**अधवा तस्संजोगो ण सव्वधा सो अणुप्पाती ॥३३४५॥**

**होज्जाहि णमोक्कारो।** अथवा नमस्कारः—किं वस्तु भवेत्—ज्ञानम्, उत शब्दः, उत कायक्रिया, अथवा तेषां संयोगः?—सर्वथोत्पत्तिमानेव, नानुत्पादी, ज्ञानादीनामुत्पत्तिस्वभावत्वात् ॥३३४५॥

**णणु जीवातोऽणण्णं णाणं णिच्चो य सो ततो तं पि ।**
**णिच्चुग्घाडो य सुते जमक्खराणंतभागो त्ति ॥३३४६॥**

**णणु जीवातोऽणण्णं।** ज्ञानादीनामुत्पत्तिस्वभावत्वमसिद्धम्, जीवादनन्यत्वात्, जीवस्वरूपवत्। इतश्च नित्यं ज्ञानम्, ज्ञानानन्तभागस्य नित्योद्घाटत्वात्, जीवस्वरूपत्वात् ॥३३४६॥

**अधवा अँरूवगुणतो णाणं णिच्चं णहावगाहो व्व ।**
**लयण-प्पयारपरिणामतो वं सव्वं जधा अणवो ॥३३४७॥**

**अधवा अरूवगुणतो।** नित्यं ज्ञानम्, अरूपगुणत्वात्, नभोऽवगाहवत्। अथवा ज्ञान-शब्द-कायक्रियाः सर्वमेव नित्यम् लय-प्रकाशपरिणामवत्त्वात्, परमाणुसमूहवत् ॥३३४७॥

---

१ अह भत्तिमंतसम्मसंताणभावओ स इति प्रतौ। २ °ताणत्तण° त, °ताणित्तण° को हे। ३ य त। ४ °प्पत्ती हे त। ५ जीवाओऽभिण्ण° इति प्रतौ। ७ तरूव° को ८ व्व को, य°, हे त।

दरिसणपरत्थताओ अतिन्दि[ि]यत्थत्तणोऽणवत्थातो ।
संबन्धणिच्चताओ सद्दावत्थाणमणुमेयं ॥३३४८॥

दरिसणपरत्थताओ इत्यादि । शब्दस्य हि दर्शनं प्रयोग उच्यते । तस्य दर्शनस्य परार्थत्वम्—न शब्द एवोत्पाद्य इत्येवमर्थं प्रयोगः । किं तर्हि ? कोऽप्यर्थः प्रतिपाद्योऽस्ति तत्प्रकाशनाय । तस्मादवश्यं शब्दोत्पत्तेः प्रागपि विद्यमानः शब्दः, परार्थदर्शनत्वात्, परार्थं प्रयुज्यमानत्वात्, छेदनार्थप्रयुक्तवास्यादिवत् । यो हि प्रयोजनार्थं प्रयुज्यते नात्मलाभार्थमेव, स तस्मात् प्रयोजनप्रयोगकालात् पूर्वतरं विद्यमानो दृष्टः, यथा छेदनप्रयोगकालात् पूर्वोत्पन्नं[1] वास्यादि । इतश्च पराभिमतोत्पत्तिकालात् पूर्वं चेच्छब्दोऽस्ति विद्यमानः सिद्धः, एवं ननु नित्य इति शक्यं प्रतिपत्तुम् । इह ये शब्दा इन्द्रियग्राह्यार्थविषयास्तत्र कृतसम्बन्धत्वमाशङ्केत—'अस्य अयमर्थः' इति सङ्केतप्रयोगविषयत्वात् । ये पुनरमी स्वर्गापवर्ग-मेरुप्रभृतयः शब्दाः अतीन्द्रियार्थाः, तेषु सम्बन्धकरणस्याशक्यत्वादकृतसम्बन्धत्वम् । ततश्च नित्यता सिद्धा । स्वर्गापवर्ग-मेरुशब्दादयः नित्याः, अतीन्द्रियार्थत्वात्, केवलज्ञानवत् । तैः शेषशब्दनित्यत्वानुमानम्—इन्द्रियग्राह्यार्थविषया अपि शब्दाः घटशब्दादयो नित्याः, शब्दत्वात्, स्वर्गादिशब्दवत् । अकृतसम्बन्धाश्च ते, शब्दत्वादेव, स्वर्गादिशब्दवत् । कृतकसम्बन्धवादिनो(ना)ऽपि च येन केनापि शब्देन सम्बन्धः क्रियते, तस्याप्यन्यः सम्बन्धकारी शब्दः इत्येष्यः, तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्था । तस्मादनवस्थात अवश्यमकृतसम्बन्धः कश्चिच्छब्दोऽभ्युपगन्तव्यः, तदभ्युपगमाच्च शेषशब्दा अप्यकृतसम्बन्धा एव, शब्दत्वात्, आद्याऽकृतसम्बन्धशब्दवत् । ततश्च नित्यता । इतश्च नित्यः शब्दः, नित्यसम्बन्धत्वात्, आकाशाऽऽदादिवत् । एवं प्रमाणैः शब्दावस्थानं शब्दनित्यत्वमनुमेयमिति । अनुमिते शब्दनित्यत्वे नित्यः पञ्चनमस्कारः, शब्दात्मकत्वात्, अनुमितनित्यशब्दवत् । एवमाऽऽद्यनैगमनयाभिप्रायेणानुत्पन्नत्वमाख्यातम् ॥३३४८॥

शेषनयाभिप्रायेण एताभिरेवोपपत्तिभिरुत्पादित्वमनित्यत्वं च नमस्कारस्य ज्ञान-शब्द-क्रियात्मकस्याख्यायते—

जेणं चिय जीवातोऽणण्णं तेणेयं[2] णाणमुप्पाति ।
उप्पज्जति जं जीवो बहुधा देवातिभावेणं ॥३३४९॥

जेणं चिय जीवातोऽणण्णं इत्यादि । यदुक्तमादिनैगमेन—'नित्यं ज्ञानं जीवानन्यत्वात् जीवस्वरूपवत्' इति, एष धर्मस्वरूपविपरीतसाधनो विरुद्धः जीवानन्य-

१ °न्नं व्याख्यादितश्च इति प्रतौ । २ °याद्युत्र इति प्रतौ । ३ अस्त्ययम° इति प्रतौ । ४ °व को । ५ °प्पाइं को हे, °प्पाइं त ।

त्वहेतुर्जीवस्वरूपेणोत्पादित्वेनाऽनित्यत्वेन च विपर्ययेण व्याप्त इति प्रत्युत विपर्ययं साधयति । उत्पद्यते यस्माज्जीवः स्वतोऽनन्येन बहुधा देवादिभावेन सुवर्णाङ्गुली-यक-कटकादिभाववत् ॥३३४९॥

यदपि चोक्तम्–नित्यं ज्ञानं नित्योद्घाटानन्तभागत्वात्, जीवस्वरूपवत्, अय-मप्यसिद्धो हेतुः अपक्षधर्मत्वात्। यस्मात्—

**अविसिट्ठक्खरभाओ सुत्तेऽभिहितो ण सम्मणाणं ति ।**
**कोऽवसरो तस्स इधं सम्मं णाणाधिगारम्मि ॥३३५०॥**

**अविसिट्ठक्खरभाओ सुत्तेऽभिहितो**। अविशिष्टं ज्ञानमात्रं सम्यग्-मिथ्या-दर्शनसाहचर्यविवक्षाऽभावात् सूत्रेऽभिहितं धर्मि । इह पुनः सम्यग्ज्ञानाधिकारात् पञ्चनमस्कारः सम्यग्दर्शनसहभावि ज्ञानं धर्मित्वेन प्रस्तुतम् । तस्य विशिष्ट-ज्ञानस्य अनन्तभागो नैव नित्योद्घाट उक्त इत्यपक्षधर्मत्वम् ॥३३५०॥

यदपि चोक्तम्—नित्यः शब्दः अरूपगुणत्वात् नभोवगाहवदिति । तत्रापि प्रतिविधीयते—

**अवगाहणातयो णणु गुणत्तो चे[१] [२२०-द्वि०]अ पत्तधम्म व्व ।**
**उप्पातातिसभावा तध जीवगुणा वि को दोसो ? ॥३३५१॥**

**अवगाहणातयो णणु** इत्यादि। एष साध्यधर्मशून्यो दृष्टान्तः, यस्मान्नभोऽ-वगाहोऽप्यनित्य एव, गुणत्वात्, पत्रधर्मनीलतादिवत्। एवं जीवगुणा अपि ज्ञान-दर्शनादयः सर्वे उत्पाद-विगम-ध्रुवस्वभावा इति ॥३३५१॥

अपि च कण्ठतोऽप्यवगाहाऽनित्यत्वप्रदर्शनी गाथा।

**अवगाढारं च विणा [२]कतोऽवगाहो त्ति तेण संजोगो ।**
**उप्पादी सोऽवस्सं गच्चुवगारादयो [३]चेवं ॥३३५२॥**

**अवगाढारं च विणा** । नभसोऽवगाहः स्वलक्षणमुपकारः। स चावगाढार-मन्तरेण–जीवं पुद्गलं वा–नाभिव्यज्यत इति । अथवाऽवगाह(ढ)जीवादिसंयोगमात्रम-वगाह इति सिद्धम्। संयोगश्चोत्पादी, संयुज्यमानवस्तुजन्यत्वात्, द्वयङ्गुलसंयोगवत्। यथा चाऽवगाह आकाशस्य, एवं गति-स्थित्युपकारादयोऽपि धर्मादीनां गतिमदादिद्रव्य-संयोगत्वात् तदुत्पादादिस्वभावा इति ॥३३५२॥

यच्चोच्यते नित्यशब्दवादिना–गगनादिसाधर्म्यान्नित्यत्वमिति, तदपि च न, यस्मात् सर्वमपि वस्तु सदृष्टान्तमेकान्तनित्यं न भवति तद् दर्शयति—

१ चेव को हे। २ कु० को हे। ३ पेवं जे, चेव त।

ण य पज्जयेनो भिण्णं दव्वमिहेगंततो जतो तेणं ।
तण्णासम्मि कथं वा णभादयो सव्वथा णिच्चा ॥३३५३॥

**ण य पज्जयतो भिण्णं** । न हि पर्यायादात्मीयात् किञ्चिद् द्रव्यमेकान्तभिन्नमुपलभ्यते यत् सम्भाव्येत तस्मिन् पर्याये[1] विनिर्जातेऽप्यविनि(न)ष्टमेकान्ताविकृतं नित्यत्वमिति । यतस्तु पर्यायादनन्यद् द्रव्यम् ततस्तत्पर्यायनाशे तेनात्मना तद् द्रव्यं नश्येत्, नान्यपर्यायात्मना, अनेकपर्यायानन्त(न्य)रूपत्वाद् एकेनात्मना नश्यति, अन्येनात्मनोत्पद्यते अन्येनात्मना ध्रुवमिति बहुत्वादात्मनामेकस्य वस्तुन इति । तस्मात् कथमिव एकान्तेन आकाशादयो नित्याः प्रतिपत्तुं शक्या इति ? ॥३३५३॥

णिच्चत्तसाधणाणि य सद्दस्सासिद्धदादिदुट्ठाइं[3] ।
संभवतो वच्चाइं पक्खोदाहरणदोसा य ॥३३५४॥

**णिच्चत्तसाधणाणि य** इत्यादि । यान्यपि शुद्धनैगमनयवादिना शब्दस्य नित्यत्वसाधनान्युपात्तानि दर्शनपरार्थत्वादीनि तान्यप्यस्मन्मते सर्वाण्यसिद्धतादोषदुष्टानि यथासम्भवं वाच्यानि । प्रतिज्ञा-दृष्टान्तदोषाश्च स्वयमभ्यूह्या[4] इति ग्रन्थगौरवभयादाचार्यः परिश्रान्ततां चात्मनः ख्यापयन् दिङ्मात्रं दर्शयति, स्याद्वादसामर्थ्यात् सुकरतां वा प्रमाणदूषणस्य आचक्षाण एवमाह—वयं तु जडप्रज्ञाः किञ्चित् किञ्चिदभ्यूह्य सुखावबोधार्थं दर्शयामः—यदुक्तम् **'लयण-प्पयासपरिणामतो व'** [गा० ३३४७] लय-प्रकाशपरिणामवत्त्वादित्यसिद्धः, अभूत्वोत्पादात् प्रकाशनाभावः, भूत्वा च सर्वथा विनाशाल्लयो [वा] नास्तीति । पर्यायार्थवादिनः परमाणवोऽप्यनित्या इति साध्यसाधनधर्मशून्यता दृष्टान्तदोषः, पर्यायैकान्तवा(वा)दिनो 'नित्यः शब्दः' इत्यप्रसिद्धविशेषणः पक्षाभासः । तथा यदुक्तम्—

**'दरिसणपरत्थताओ'**[गा०३३४८]इत्यादि । अत्रापि यद्येवं प्रयोगः—नित्यः शब्दो दर्शनपरार्थत्वादिति, तदा दर्शनस्य परार्थत्वं धर्म इति शब्दस्यापक्षधर्म इत्यसिद्धः । अथ अर्थहेतुरयं प्रयोगः, हेतुस्तु—निः(नित्यः) शब्दः परार्थदर्शनत्वादिति, तदा भवति पक्षधर्मः, दृष्टान्तः साध्यधर्मशून्यः—न हि किञ्चित् परार्थदर्शनं वास्यादि नित्यं दृष्टमिति दृष्टान्तदोषः । उत्पादकाल एव च 'शब्दः' इत्येवमाख्यायते, नोत्पादकालात् प्राक् । उत्पादकालाद्यदि तत्प्रागपि विद्यते 'शब्दः' इति श्रोत्रोपलब्धिः शब्दः । न च तदानीमुपलभ्यते श्रोत्रेणेति आश्रयासिद्धत्वं प्रत्यक्षविरोधो वा ।

---

१ 'उज्जव' हे । २ 'ये परसु विनि' इति प्रतौ । ३ 'स्सासासियाइदु' को । ४ 'मत्पूया इति, इति प्रतौ ।

अतीन्द्रियार्थत्वान्नित्यः[गा० ३३४८]इत्यपि शब्दसामान्ये धर्मिणि अतीन्द्रियार्थत्वादित्यव्यापकासिद्धः, विशेषे स्वर्गादिशब्दे धर्मिणि केवलज्ञानमपि [गा० ३३४८ वृत्तौ] पर्यायादनित्यमिति साध्यशून्यदृष्टान्तदोषः ।

अनवस्थातो नित्यः [गा०३३४८] इत्येतदप्यसत्, अनवस्था एव अवस्थानं सर्वदा, संसारसन्तानाऽनादित्वात् कुक्कुटचण्डकवत् । चक्रकेषु वेष्टतो व्यवस्था ।

न च सम्बन्धो नित्यः [गा०३३४८] सम्बन्धिनामनित्यत्वात् । यस्माच्च परस्परदूषणं सामान्यविशेषवादिनोऽनेकत्रा(स्या)पि वस्तुसंसिद्धिः। यत उक्तम्—

"भेदगतमखिलमसदिति विरौति सामान्यवादिनः पक्षः ।
सामान्यमशेषमसद् विशेषवादी विरौत्येवम्" ॥ [ ]

**सिंहसूरिक्षमाश्रमणपूज्यपादास्तु—**

"सामान्यं निर्विशेषं द्रव-कठिनतयोर्वाघदृष्टं (र्व्याघदृष्टं)यथा किम् ?
यो(ये)ऽन्या(न्ये) शून्या विशेषास्तरव इव धरामन्तरेणोदिताः के ? ।
किं निर्मूलप्रशाखं सुरभि खकुसुमं स्यात् प्रमाणं प्रमेयम् ?
स्थित्युत्पत्तिव्ययात्म प्रभवति हि सतां प्रीतये वस्तु जैनम् ॥ [ ]॥३३५४॥

अथ पर्यायवादी स्वपक्षसाधनान्युद्भावयन्नाह—

**धणिरुप्पाती इन्दियगेज्झत्तातो पयत्तजत्तातो ।
पोग्गलसंभूतीतो पच्चयभेदे य भेतातो ॥३३५५॥**

**धणिरुप्पाती इन्द्रियगज्झत्तातो** इत्यादि । उत्पादी शब्दः इंदिय(इन्द्रिय)-ग्राह्यत्वाद्, घटवत् रूपवत् । 'उत्पादी वा नित्यः' इत्यसिद्धं घटवदेव । यथा उत्पादी शब्दः—कृतक इत्यर्थः—प्रयत्नजत्वात्, पुद्गलेभ्यः सम्भूतेः, प्रत्ययभेदभेदित्वात्, घटवदेव ॥३३५५॥

**उप्पातिं णाणमिट्ठं णिमित्तसब्भावतो जधा कुंभो ।
तध सद्द-कायकिरिया तस्संजोगो वै जोऽभिमतो ॥३३५६॥**

**उप्पाति णाणमिट्ठं** । ज्ञान-शब्द-कायक्रिया-एतत्संयोगो वा यो नमस्कारोऽभिमतः, सर्वाण्येतानि उत्पादीनि, निमित्तादुपजायमानत्वात्, कुम्भवत् ॥३३५६॥

---

१ °गेज्झ° को । २ °तिय णा° त । ३ य हे त ।

उप्पत्तिमतोऽवस्सं णिमित्तमस्स नु णयत्तियं तिविधं ।
इच्छति णिमित्तमेत्तो जमण्णधा णत्थि संभूती ॥३३५७॥

उप्पत्तिमतोऽवस्सं । स्फुटार्था । उत्पत्तिमतो निमित्तमवश्यं भावीति नयत्रिकं त्रिविधं निमित्तमिच्छति–अन्यथोत्पत्तेरसम्भवः इति–समुत्थानं वाचना लब्धिरिति ॥३३५७॥

तेषां क्रमेण प्रदर्शनम्—

देहसमुत्थाणं चिय हेतू भवपच्चयाऽवधिस्सेव ।
पुव्वुप्पण्णस्स वि से इधभवभावो समुत्थाणं ॥३३५८॥

देहसमुत्थाणं चिय । सम्यगुत्थानं समुत्थानम्, सङ्गतं प्रशस्तं वा उत्थानं समुत्थानम्, अथवा स्वयमुत्थानम्–प्राकृतशैल्या यकारलोपः—तच्च स्वयमुत्थानं वीर्यं किलोच्यते । तत्र विचारः— समुत्थानं निमित्तं नमस्कारस्येति कस्य समुत्थानम् ? अन्यस्याऽश्रवणात् तदाधारभूतस्य प्रत्यासन्नत्वाद् देहस्यैव समुत्थानं युक्तम् । देहोत्पत्तिरेव तस्य नमस्कारस्योत्पत्तिकारणम्, तद्भावभावित्वात् नारक-देवावधिरिव । यद्यप्यसौ स्वावरणक्षयात् पूर्वोत्पन्नस्तथापि तद्भावाभिव्यङ्ग्यत्वात् स एव तद्भावस्तस्य निमित्तम्, तदभिव्यञ्जकत्वात्, पूर्वोत्पन्नस्याऽ[वै]स्थितवायोरिव व्यञ्ज(ज)नकः, सिद्धश्चाऽ[व]स्थितवायुर्यो व्यञ्ज(ज)नाद् व्यक्ततां समुपयाति यदि सद्यः परिणम(न्ते) समनु(नन्त)सिद्वा आस्थिता स्कन्धाः (?) ॥३३५८॥

अण्णे सयमुत्थाणं सविरियमण्णोवकारविमुहं ति ।
तद[२२१ प्र०]जुत्तं तदवत्थे चुतलद्धे लद्धितो णण्णं ॥३३५९॥

अण्णे सय० गाहा । अन्ये आचार्याः "स्वयमुत्थानं स्ववीर्यस्व(स)मुत्थानम्"[ ] आहुः । तच्चास्य नमस्कारस्योत्पत्तिनिमित्तम्, नान्यत्, अन्योपकारविमुखत्वात् अन्यकारणनिरपेक्षत्वादनन्तरकारणत्वादित्यर्थः, यवाङ्कुरस्येव यवबीजम् । तच्चायुक्तमेवं प्रतिपत्तुम्, अन्यकारणनिरपेक्षत्वहेतोरसिद्धत्वात्, न हि तदीय(द्वीर्य)मनन्तरकारणम् । किं तर्हि ? स्वावरणक्षयोपशमलब्धिः, यस्मात् स्वकारणादुपजाते नमस्कारे तदा(द)वस्थे स्वावरणोदयात् प्रच्युते, पुनः सद्य एवावरणक्षयोपशमात् प्रतिलब्धेः(ब्धे) स्वयं परोपदेशादिनिरपेक्षसिद्धेः स्ववीर्येण पुरुषकारेण विनापि तल्लाभात् न स्ववीर्यं कारणं

१ °भय° जे । २ "यथाऽवस्थित एव मरुद् व्यजनेनाभिव्यज्यते" इत्यादि (कोट्या० वृ० पृ० ८०३) विलोक्यम् । ३ अस्य वाक्यस्य अर्थस्पष्टीकरणाय मल० हेम० वृ० पृ०११२१ गताया २८२८ गाथाया वृत्तेः प्रान्तभागो विलोकनीयः । समन्ततो वर्तमाना वायोः स्कन्धा यदि सद्यः परिणमन्ते तदा ते अव्यक्ता अपि व्यक्ततां यान्ति इति आशयः प्रतिभासते । ४ °सयसंमु° त । ५ मुत° त ।

भवितुमर्हति, विनापि तेनोपजायमानत्वात्, यवबीजाङ्कुरस्य वल्लबीजादिवत् । अथ स्वावरणक्षयोपशमलब्धिरेव वीर्यमुच्यते, ततः सत्यमनन्तरकारणत्वादि सर्वमुपपन्नम् । तथा च सिद्धसाधनम्—लब्धिरेव समुत्थानशब्देनोक्तेति । लब्धितोऽन्यत्वात् लब्धिव्यतिरिक्तं समुत्थानं कारणम् । इष्यते च तृतीयं निमित्तं समुत्थानमिति । तस्मात् पूर्वमेव व्याख्यातं देहादिसमुत्थानं समुत्थानम्, न स्ववीर्यमिति ॥३३५९॥

अथ वाचना-लब्धिनिमित्तयोः स्वरूपव्याख्यानाय गाथा—

**परतो सवणमहिगमो परोवदेसो त्ति वायणाऽभिमता ।**
**लद्धीय तदावरणक्खयोवसमतो सयं लाभो ॥३३६०॥**

**परतो सवणमहिगमो** । परतः श्रवणम्—अधिगम उपदेशश्च वाचनेत्यु(त्य)पदिश्यते । लब्धिस्तु तदावरणक्षयोपशमः—स्वयं लाभ इत्यर्थः । एतानि त्रीणि निमित्तानि अशुद्धा नैगम-संग्रह-व्यवहारा इच्छन्ति, "प्रथमे नयत्रिके" [गा० ३३३७] इति वचनात् ।

ननु च प्रथमनयत्रिके शुद्धनैगमः शुद्धः सङ्ग्रहश्च कथमिव त्रिविधं निमित्तमिच्छतः ? उच्यते, आदिनैगमग्रहणेन प्रथमनयत्रिकात् त्रयो भक्तालित्वात् (तयोः [२]उत्कलितत्वात्) आदिनैगमः शुद्धसंग्रहश्चैकमतत्वात् एक एव, तस्योत्पत्तिरेव नास्ति, सर्वभावनित्यत्वात्, अतो देशग्राहिनैगमः, देशसंग्रहः, विशेषप्रधानैर्व्य(धानो व्य)वहारश्च पर्यायगन्धसंस्पृष्टत्वादुत्पत्तिमिच्छन्ति । तस्याश्चोत्पत्तेस्त्रैविध्यमशुद्धत्वादेवेच्छन्ति । अतः सूत्रगाथायामादिनैगमं मुक्त्वा शेषा अशुद्धा नैगम-सङ्ग्रह-व्यवहाराः ऋजुसूत्र-समभिरूढैवंभूताः तेषामाद्यम् त्रिविधं निमित्तमिच्छन्तीत्युक्तम् । अथ सूत्रगाथावयवः—'**उज्जुसुय पढमवज्जं**'[गा० ३३३७]ऋजुत्रसूत्य मतमिति वाक्यात्पः(क्यशेषः) । प्रथमवर्जम्—प्रथमं समुत्थानम् तद्वर्जम्—निमित्तद्वयम्—वाचना लब्धिश्च एतद्द्वयम्—ऋजुसुत्र इच्छति । एतदुपपत्तिर्भाष्यगाथया वक्ष्यते—ऋजुसूत्रवर्जाः शेषनयाः शब्दनयास्ते-लब्धिमेव निमित्तमेकमिच्छन्ति । इयमप्युपपत्तिर्वक्ष्यमाणैव भाष्यतः ॥३३६०॥

अस्यानुक्रमेण भाष्यगाथा—

**उज्जुसुतणयमतमिणं पुव्वुप्पण्णस्स किं समुत्थाणं ? ॥**
**अध संपतमुप्पज्जति ण वायणालद्धिभिण्णं तं ॥३३६१॥**

**उज्जुसुतणयमतमिणं** । यदुक्तं '**पुव्वुप्पण्णस्स वि से इध भवभावो समुत्थाणं**[गा० ३३५८] इति, तदाद्यनयत्रयमतं निराकरिष्णुराह—'**पुव्वुप्पण्णस्स किं**

१ °णमिह त । २ हरि० वृ० पृ० ३७८ प्र० पं० ७ । कोट्या० वृ० पृ० ८०४ पं० ८ "द्वयोः उत्कालितत्वात्" । ३ °पइमु° को हे । ४ ति त ।

समुत्थाणं ? यदि पूर्वोत्पन्न एव किं तदुत्पत्तिनिमित्तेन ? अनुत्पन्नं यत् तदुत्पद्यत इति युक्तिः । अथैवं ब्रूयात्—पूर्वोत्पन्नः शक्तिमात्रेण, सम्प्रति काले तु कारणादभिव्यक्तिमुपगच्छन्नुत्पद्यत इत्युच्यते । एवमप्यभिव्यक्तिस्तस्य वाचनातः परोपदेशात् लब्धितो वा स्वयमेवावरणक्षयोपशमसम्भूतेरनुपदेशादित्यर्थः । ततश्च वाचना-लब्धी एव कारणे, न तद्व्यतिरिक्तं समुत्थानं नाम ॥३३६१॥

एतमेव अर्थं गाथया आचार्य उन्नमइ(य)ति—

**परतो सयं व लाभो जति परतो वायणा सयं लद्धी ।**
**जं ण परतो सयं वा ततो किमण्णं समुत्थाणं ॥३३६२॥**

**परतो सयं व लाभो** । नमस्कारलाभो भवन् भवेद् द्विधा—परतः स्वयं वा । यदि परतस्ततो वाचनैव । अथ स्वयम् ततोऽसौ लब्धिरेव, तृतीयविकल्पासम्भवात् अन्यत् समुत्थानं नास्त्येव ॥३३६२॥

एतदेव पुनरुपपत्त्यन्तरेण भावयन्नाह—

**उप्पज्जति णातीयं तक्किरियोवरमतो कतघडो व्व ।**
**अधवा कतं पि कीरति कीरतु णिच्चं जतो णिट्ठा ॥३३६३॥**

**उप्पज्जति णातीयं** । 'पूर्वोत्पन्नमुत्पद्यते' इति ब्रुवता अतीतमुत्पद्यते इत्यभ्युपगतं भवति । तत्प्रतिषेधार्थं प्रमाणम्—नातीतमुत्पद्यते उपरततत्क्रियत्वात्, कृतघटवत् । अथैवं ब्रूयात् परः—साध्यधर्मशून्योऽयं दृष्टान्त इति—कृतघटोऽप्युत्पद्यत एव क्रियत एवेति अस्मिन्(सि(स्मत्सि)द्धान्त एव, तर्हि अनिष्टापादनप्रमाणम्—न कदाचित् कृतघटव्यपदेशो भवतः प्राप्नोति, सदा क्रियमाणत्वादर्द्धकृतघटवत् ततश्चानिष्ठा । दृश्यते च सर्वसम्मता क्रियोपरमात् निष्ठा । तत एवंवादिनोऽभ्युपगमविरोधः ॥३३६३॥

अथवाऽभ्युपगम्य ब्रूमः—

**होतु व पुव्वुप्पातो तध वि ण सो लद्धि-वायणाभिण्णो ।**
**जेण पुरा वि सयं वा परतो वा होज्ज से लाभो ॥३३६४॥**

**होतु व पुव्वुप्पातो** । भवतु नाम त्वदभिप्रायेण पूर्वोत्पादः, तथाऽप्यसौ भवन् कारणे(ण)सापेक्ष एव न निष्कारणः, यच्च कारणं तस्य तद् वाचना-लब्धिव्यति-

१ क्को को हे त ।

रिक्तं नैव भविष्यति, स्वपरायत्तरूपत्वात्, इदानीन्तनकारणवत्, तृतीयविकल्पासम्भवात् । तस्माद् ऋजुसूत्रमतात् समुत्थाननिमित्ताभावान्निमित्तद्वयमेव–वाचना लब्धिश्चेति ॥३३६४॥

अथ शेषनयमतम्—

सद्दातिमतं ण लभति जं गुरुकम्मा पवायणाए[1] वि ।
पावति य तदावरणक्खयोवसमतो जओऽवस्सं ॥३३६५॥

तो हेतू लद्धि च्चिय[2] ण वायणा जति मतीखयोवसमो ।
तक्कारणो त्ति तम्मि[3] वि[4] णणु सा णेगन्तिगी दिट्ठा ॥३३६६॥

सद्दातिमतं गाहा । तो हेतू लद्धि च्चिय गाहा । वाचना नमस्कारोत्पत्तिकारणं न भवति, व्यभिचारित्वात्, अङ्कुरस्येव भूमा(म्या)दि, गुरुकर्मा प्रवाचनायां विद्यमानायामपि नमस्कारं न लभते । तदावरणक्षयोपशमलब्धौ तु सत्यामवश्यं लभते । तस्माल्लब्धिरेव कारणमव्यभिचारि, अङ्कुरस्य बीजवत् । अथैवं परस्य बुद्धिः स्यात्–नमस्कारकारणस्य क्षयोपशमस्य कारणं वाचनेति, तस्मान्नमस्कारकारणं वाचनाऽपि, तत्कारणकारणत्वात्, पटस्य कर्पासादिवत् । एतदपि न, तत्कारणकारणत्वहेतोरव्यापकासिद्धत्वात्, काचिद् वाचना क्षयोपशमकारणं प्रलघुकर्मणः, काचिद् वाचना क्षयोपशमकारणं न भवति, गुरुकर्मणस्तस्यां सत्यामपि क्षयोपशमाभावात् । अतस्तत्कारणकार[ण]त्वमनैकान्तिकं वाचनाया इति । तस्मिन् क्षयोपशमे उत्पाद्ये सा वाचना अनैकान्तिकी दृष्टेति [न] नमस्कारस्य कारणम् ॥३३६५–६६॥

अथवाऽभ्युपगम्योच्यते–अस्तु वाचना अनैकान्तिकी दृष्टेति न नमस्कारस्य कारणम् । अथवाऽभ्युपगम्योच्यते–अस्तु वाचनानिमित्तः क्षयोपशमः, तथाऽप्यसौ वाचना नमस्कारकारणं न भवति, अन्यकारणत्वात्, पटतन्तुवत्, अन्यस्य क्षयोपशमस्य कारणमित्यन्यकारणत्वं सिद्धम्, अतः क्षयोपशमस्यैवासौ कारणं भवतु, मा अर्हन्नमस्कारस्येति तदर्थं गाथा—

जस्स वे[23] सें तंणिमित्तो तस्स वि तम्मेत्तकारणं होज्जं[5] ।
ण णमोक्कारस्स तई कम्मखयोवसम[२२१–द्वि०]लंभस्स[6] ॥३३६७॥

१ वि को हे त । २ य को । ३ तन्नि° को हे । ४ तम्मि° त । ५ °ज्जा को हे । ६ °लम्भ° को हे त ।

जस्स व स तंणिमित्तो । यस्य वा वादिनः स क्षयोपशमस्तन्निमित्तः–वाचनानिमित्त इत्यर्थः–तस्यापि वादिनः सारं सारज्ञत्वात् ? तन्मात्रकारणमेवासौ वाचना [न] नमस्कारस्य, यस्मादन्यो नमस्कारः अन्यश्च क्षयोपशमः । वाचना क्षयोपशमस्य कारणम्, कर्मक्षयोपशमे नमस्कारो लभ्यत इति कर्मक्षयोपशमलभ्योऽसौ, न वाचनालभ्य इति लब्धेरेवैका कारणं युक्तेति शब्दादिशुद्धनयमतम् ॥३३६७॥

अध कारणोवकारि त्ति कारणं तेण कारणं सव्वं ।
पाएण वज्झवत्थुं को णियमो सद्दमेत्तम्मि ॥३३६८॥

अध कारणोवकारि त्ति कारणं गाथा । नमस्कारस्य वाचना कारणम् कारणोपकारित्वात्, देहादिवत् । एवं तर्हि एतेन हेतुना सर्वं प्रायेण बाह्यवस्तु कारणं प्राप्नोति । कोऽयं नियमः शब्दमात्रे वाचनैव कारणमिति? अथ किंनामकोऽयं दोषः साधनस्य इति ? उच्यते, अनैकान्तिकः एवमुद्भावितो भवति । अकारणेऽपि बाह्यवस्तुन्याकाशादौ कारणोपकारित्वं पारम्पर्येण दृष्टमिति कृत्वा । अथवा साध्यधर्मशून्यता काका प्रदर्श्यते । देहादिषु कारणत्वमप्रसिद्धम् । यद्यकारणेऽपि देहादौ कारणत्वं भवताऽभिमन्यते, ननु सर्वस्मिन् त्रैलोक्येऽपि आकाशादावपि कारणत्वं प्राप्तम्, अकारणत्वात् देहादिवदेवेति ॥३३६८॥

अध पच्चासण्णतरं कारणमेगंतियं च तो लद्धिं ।
पडिवेज्जण चेदेवं ण वायणामेत्तणियमो ते ॥३३६९॥ दारं ॥

अध पच्चासण्णतरमित्यादि । अथैवं बुद्धिर्भवतः–प्रत्यासन्नं क्षा(क्ष)योपशमस्य उपकारित्वं वाचनायाः, दूरे आकाशाद्युपकारित्वमिति वाचनैव कारणं प्रत्यासन्नो-

---

१ अत्र कोट्या० वृ० पृ० ८०५ एवं पाठः—

"यस्य पुंसः स क्षयोपशमः तन्निमित्तो वाचनानिमित्तः तस्यापि तन्मात्रकारणम्-क्षयोपशममात्रकारणं भवेत् न पुनर्नमस्कारस्य असौ कारणम् तस्य कर्मक्षयोपशमकारणत्वात् । अनन्यकारणं वस्तुस्थित्या स्थितं तद् अन्यकारणं न भवति–तद्यथा–शाल्यङ्कुरो वल्लकारणो न भवति तथा च नमस्कारः" ।

एवमेव मलयगिरिवृत्तौ पृ० ४८६ ।

अयमेव आशयः मलधारिहे० वृत्तौ गा०२८३७ पृ०११२४ । एषां वृत्तिकाराणाम् आशयं समीचीनतया निरीक्ष्य संप्रेक्ष्य च अत्र वृत्तौ स्थितं "सारं सारज्ञत्वात्" इत्येवमक्षरजालं निरर्थकं प्रतिभाति अथवा एतद् अन्यतः कुतोऽपि लिपिकारप्रमादवशाद् अत्र समागतं संभावनीयमिति । अथवा 'सारं सारज्ञत्वात्' अस्य शुद्धपदं 'स संसाराज्ञत्वात्' इति संभवेत् ।

२ बज्झ कारणं तो न वा० को ।

पकारित्वात्, एकान्तोपकारित्वाच्च, तन्तुपटवत् । एवं तर्हि प्रत्यासन्नाभ्युपगमे एकान्तोपकारित्वे चान्विष्यमाणे ननु लब्धिरेव युक्ता कारणत्वेनाभ्युपगन्तुम् नान्यत्, प्रत्यासन्नतरत्वात्, अत्यन्तैकान्तोपकारित्वाच्च, क्षयोपशमस्वरूपवत् । न[1] चैतदेवं प्रत्यासन्नमिष्यते, किं तर्हि ? व्यवहितमेव । ततो न वाचनामात्रै(त्रे ए)वावस्थानम्, सर्वमपि बाह्यवस्तु करणं प्राप्तम्, व्यवहितोपकारित्वाद् वाचनावत् ॥३३६९॥

॥ एवं उत्पत्तिरिति द्वारं व्याख्यातम् ॥

अथ निक्षेपद्वारावसरः । स च नाम-स्थापनादिविस्तरेणान्यत्र प्रदर्शित मि(इ)ति । इह किञ्चिद्विशेषमात्रं संस्पर्श(स्पृश)ती गाथा—

**णि[2]ण्हाति दव्व भावोव[3]युत्तो जं कुज्ज सम्मदिट्ठी तुं[4] ।**
**णेवातियं पदं दव्व-भावसंकोयणपतत्थो ॥६४७॥३३७०॥**

**णिण्हाति दव्व भावोवयुत्तो ॥३३७०॥**

अस्य भाष्यगाथा—

**णामादिचतुब्भेतो णिक्खेवो मंगलं व[5] सो णेयो ।**
**णामं णमोभिधाणं ठवणा णासो[6]ऽधवाऽऽगारो ॥३३७१॥**

**णामादि०** । नामादिश्चतुर्भेदो निक्षेप इति । चतुर्भेदवचनं द्रव्य-क्षेत्रादिर्न भवतीत्युक्तं भवति । स च विस्तरेण मङ्गलवत् व्याख्येयः । तत्र नामनमस्कारो नाम 'नमस्कार' इत्यभिधानम् । स्थापनानमस्कारो नाम नमस्कारन्यासः । असद्भावस्थापना अक्षादिषु । स एव सद्भावस्थापनानमस्कारः नकारादीनामक्षराणां विन्यासैः[7] अञ्जल्याकाररचना वा ॥३३७१॥

द्रव्यनमस्कारो द्वेधा—आगमतो नोआगमतश्च—

**आगमतोऽणुवयुत्तो अज्झेता दव्वतो णमोक्कारो ।**
**णोआगमतो जाणय-भव्वसरीरातिरित्तोऽयं ॥३३७२॥**

**आगमतोऽणुवयुत्तो अज्झेता** । नमस्कारज्ञोऽध्येता अनुपयुक्तः द्रव्यनमस्कारः । नोआगमतो द्रव्यनमस्कारः नमस्कारज्ञस्य जीवविप्रयुक्तं शरीरम् अतीतभावत्वात्, द्वितीयम् एष्यनमस्कारं भव्यशरीरम् आगामिभावत्वात्, तृतीयः एतद्द्वयव्यतिरिक्तो नोआगमतो द्रव्यनमस्कारः सूत्रगाथाखण्डेन '**णिण्हाति दव्व भावोवयुत्तो**[गा० ३३७०]इत्यनेन ॥३३७२॥

अस्य खण्डस्य भाष्यम्—

---

१ न चेदेवं-प्रतौ । २ निहणाइ हे । ३ °वउत्त को हे त वी म, °वउत्तु हा । ४ य को, ओ म । ५ च हे । ६ °मोऽ° त । ७ °सः जन्याका° प्रतौ ।

मिच्छोवहया जं भावतो वि कुव्वंति णिण्हयादीया ।
सो दव्वणमोक्कारो सम्माणुवयुत्तकरणं च ॥३३७३॥

मिच्छोवहया जं भावतो वि इत्यादि । मिथ्यादर्शनोपहता निन्हवाद्या यं नमस्कारं भावतोऽभ्युपयुक्ता अपि कुर्वन्ति स द्रव्यनमस्कार एव, मिथ्यात्वोपहतत्वात् । 'सम्माणुवयुत्तकरणं च' सम्यग्दृष्टिरपि यां क्रियां नमस्कार[रूपामुपयोग]वर्जां करोति सोऽपि नोआगमद्रव्यनमस्कारः । किं पुनः कारणम् ? मिथ्यात्वोपघाताद्भावोऽपि द्रव्यमेव भवति—आह—तत्फलाभावात् । एतदनेकशो भावितम् ॥३३७३॥

सदसदविसेसणातो भवहेतुंजतिच्छयोवलंभातो ।
णाणफलाभावातो मिच्छद्दिट्ठिस्स अण्णाणं ॥३३७४॥

सदसदविसेसणा० इत्यादिर्गाथा ॥३३७४॥

जो वा दव्वत्थमसंजयस्स व भयातिणाऽधवा सो वि ।
दव्वणमोक्कारो वि य कीरति दमएण रण्णो व्व ॥३३७५॥

जो वा दव्वत्थमसंजयस्स । यो वा नमस्कारो द्रव्यार्थं धनार्जनार्थं क्रियते स द्रव्यनमस्कारः । अथवाऽन्योऽपि विकल्पः प्रदर्श्यते—असंयतस्य द्रव्यभूतस्य । भावतो नमस्याः साधवोऽर्हन्तः । असंयतस्तु भयादिकारणैर्द्रव्यभूतो नमस्यते राजादिर्द्रमकैर्भृत्यैः मरणादिप्रत्यवायं मा कार्षीदिति । द्रव्यस्य पुद्गलसंघातस्य राजशरीरस्य नमस्कारो द्रव्यनमस्कार इति षष्ठीसमासः ॥३३७५॥

अथ भावनमस्कारावसरः । सोऽपि द्वेधा-आगमतो नोआगमतश्च । तदुभयप्रदर्शनी गाथा—

आगमतो विण्णाता तच्चित्तो भावतो ण[२२२-प्र०]मोक्कारो ।
णोआगमतो सो च्चिय सेसयकरणोवउत्तो ति[10] ॥३३७६॥

आगमतो विण्णाता इत्यादि । नमस्कारपदार्थज्ञः—तच्चित्तस्तद्भावनाभावितः उपयुक्त इत्यर्थः । 'नमस्कार'आगमज्ञानादयं निर्दिष्टः । नोआगमतः स एव नमस्कारपदार्थज्ञः तस्मान्नमस्कारकरणाच्छेषकरणेषूपयुक्तिम(मा)न् नोआगमतः—आगमैकदेशा-

१ °हतो जे । २ °वचउ त । ३ °वादी° हे त । ४ "सम्यग्दृष्टेरपि अनुपयुक्तकरणं द्रव्यनमस्कारः"-कोट्या० वृ० पृ० ८०७ । अनेन वचनेन अत्र सम्यग्दृष्टिपक्षे उपयोगरहित क्रियापि हेतुत्वेन योज्यम् । ५ °हेऊ° हे त । ६ °जहिच्छि° को त । ७ °जम° जे । ८ च्चिय को हे त ९ 'द्रव्यभूतः असंयतो राजादिः' इति संबन्धः । १० त्ति त । त्ति जे ।

दित्यर्थः । अथवा 'नो'शब्दो मिश्रभावे आगममिश्रान्नोआगमतः । अत एव च सूत्रगाथाखण्डेऽभिहितम्—'भावोवउत्तो जं कुज्ज सम्मदिट्ठी तु'[गा० ३३७०] । नमस्कारज्ञाने भावे उपयुक्तः सम्यग्दृष्टिः यदेव किञ्चित् कुर्यात् तत्क्रियायुक्तः तच्चित्तः स एव भावनमस्कारः । तत्र नमस्कारज्ञानोपयुक्तः(क्तस्य) तामेव क्रियां कुर्वतस्तद्भावनयाऽसावेव भावनमस्कार आगमतः, ज्ञाननिष्पन्नत्वात्, शेषक्रियाः कुर्वन् नोआगमतः तदेकदेशत्वादिति भावना ॥३३७६॥

अथैषां नामादिनिक्षेपाणां कस्य नयस्य को निक्षेपोऽभिमतः ? इति नयमतप्रदर्शनम्—

भावं चिय सद्दणया सेसा इच्छंति सव्वणिक्खेवे[2] ।
ठवणावज्जे संगह-ववहारा केयिँदिच्छंति ॥३३७७॥

भावं चिय सद्दणया इत्यादि । शब्दनयाः शुद्धत्वात् त्रयोऽपि भावनिक्षेपमेवैकमिच्छन्ति, परमार्थफलत्वात् । शेषा अशुद्धनया नैगमादयः ऋजुसूत्रपर्यवसानाश्चत्वारः सर्वान्निक्षेपानिच्छन्ति, नाम-स्थापना-द्रव्यात्मकत्वात् भावस्य सर्वजन्यमतत्वान्न पुनरभिधानम् ।

केचिदाचार्याः व्याचक्षते—संग्रह-व्यवहारौ स्थापनावर्जान्निक्षेपानिच्छतः, स्थापनायाः नामनिक्षेपादनन्यत्वात्, असद्भावस्थापना वा सङ्केतवशात् तेन नाम्ना व्यपदिश्यते डित्थवदिति ॥३३७७॥

दव्व-ट्ठवणावज्जे उज्जुसुतो तं ण जुज्जते जम्हा ।
इच्छति सुतम्मि भणितं सो दव्वं किंतु ण पुँधत्तं ॥३३७८॥

इच्छन्तो य स दव्वं तदणागारं पिँ भावहेतु त्ति ।
णेच्छेज्ज कधं ठवणं सागारं[5] भावहेतु त्ति ॥३३७९॥

णामं पि होज्ज सण्णा तव्वच्चं वा तदत्थपरिसुण्णं ।
हेतु त्ति तदिँच्छंतो दव्वट्ठवणा कधं णेच्छे ॥३३८०॥

१ 'भावनमस्कारं करोति' इति अध्याहार्यम् । अत्र द्रष्टव्या मलधारिहेम० वृ० पृ० ११२८, गाथा २८४६ । २ °वो त । ३ केइ इ° को हे त । ४ पुहुत्तं को । ५ ति जे, तु हे । ६ °रो त । ७ तदत्थंतो त ।

**अध णामं भावम्मि वि तं णिच्छति तेण दव्व-ठवणा वि ।**
**भावस्सासण्णतरा हेतू सद्दो तु बज्झतरो ॥३३८१॥**

**दव्व-ठवणावज्जे उज्जुसुतो ।** ऋजुसूत्रो नाम-भावनिक्षेपाविच्छति व्यापित्वात्, द्रव्य-स्थापने नेच्छति, स्थापना नामान्तर्गतेव, द्रव्यं भावैकदेश एवेति, तच्च तस्य न युज्यते । यस्मादुक्तं श्रुते–ऋजुसूत्रोऽपि द्रव्यमिच्छति, वर्तमानैकक्षणवृत्तित्वात् एकमेव वस्तु, द्वितीयादेः सञ्चयाभावात् ॥३३७८॥

**इच्छन्तो य स दव्वं ।** यदसावृजुसूत्र इच्छति द्रव्यं स्वयमनाकारमपि भावहेतुत्वात् । एवं तर्हि तेन स्थापनाऽप्यभ्युपगन्तव्या भावहेतुत्वात् द्रव्यवत् । विशेषश्च स्थापनायाः साक(का)रत्वम् ।

अपि च, अथैवं बुद्धिः स्यात्–भावेऽपि भावावस्थायामपि नाम विद्यत एव न निवर्तते, तस्मात् तदिष्यते । एवं तर्हि भावे द्रव्यमपि, तदाकारोऽपि, तदविनाभाविप्रत्यासत्तेः सन्निहितौ, ततो द्रव्य-स्थापने अपि ऋजुसूत्रेणाभ्युपगम्ये, भावे सन्निहितत्वात्, नामवत् । विशेषहेतुश्च प्रत्यासन्नतरे द्रव्य-स्थापने 'नाम'-शब्दस्यार्थाद् बाह्यतरत्वात् ॥३३७९–८१॥

अथ यदुक्तम्–स्थापनावर्जान् सङ्ग्रहो[3] व्यवहारश्च इच्छत इति एकीयमतम्, तद् विचार्यते—

**संगहियो[4]ऽसंगहियो सव्वो वा णेगमो ठवणमिच्छे ।**
**इच्छति जति संगहिओ तं णेच्छतिं संगहो कीस? ॥३३८२॥**

**संगहि०** इत्यादि । इह तेषामाचार्याणां नैगमः सर्वनिक्षेपानिच्छतीत्यभ्युपगमः । स च द्विविधो देश-समग्रग्राही नैगम इति । सङ्ग्रहोऽस्यास्तीति सङ्ग्रहिकः–सङ्ग्रहपाक्षिक इत्यर्थः, तद्विपरीतो देशग्राही असङ्ग्रहिकः । सर्वोऽपि नैगमः इच्छति स्थापनाम् । तेषामाचार्याणां स्वाभ्युपगमेनैव सङ्ग्रहस्यापि स्थापना प्राप्ता, सर्वग्राहित्वात्, सर्वग्राहिनैगमवत् । अथ सर्वसङ्ग्राही नैगमो नैवेच्छति स्थापनामिति साध्य-धर्मशून्यो दृष्टान्तः । एवं तर्हि प(पा)रिशेष्यासिद्ध्या देशग्राही नैगमः स्थापनामिच्छतीति सिद्धम्, तथाऽप्यनिष्टापत्तिर्दृश्यते ॥३३८२॥

---

१ तो णेच्छइ को हे । २ य त । ३ °होप्रदिश्यतत्ये-प्रतौ । ४ °हिउ हे । ५ णेच्छे त ।

अधव मतमसंगहिओ तो[1] ववहारो वि किण्ण तद्धम्मो[2] ।
अध सव्वो तो तस्समधम्माणो दो वि ते जुत्ता ॥३३८३॥

अधव मतमसंगहिओ । एवं व्यवहारस्यापि स्थापना प्राप्ता, असंग्रा(ग्र)हिक-नैगमवत् । अथ सर्वोऽपि नैगमः स्थापनामिच्छतीत्यभ्युपगमः, एवं तत्समधर्माणौ द्वावपि संग्रह-व्यवहारौ स्थापनाभ्युपगामिनौ सर्वदेशसङ्ग्राहित्वाद् द्विप्रकारनैगमवत् ॥३३८३॥

इतश्च तत्समधर्माणौ—

जं च पवेसो णेगमणयस्स दोसु बहुसो समक्खातो ।
तो तम्मतं पि [२२२-द्वि०]भिण्णं मतमितरेसिं विभिण्णाणं ॥३३८४॥

जं च पवेसो । भिन्नयोरपि सङ्ग्रह-व्यवहारयोर्भिन्नमेव नैगमनयमतं प्रमाणम्, तयोरन्तर्गतत्वात्, सङ्ग्रह-व्यवहारमतवत् ॥३३८४॥

अपि च—

सामण्णादिविसिट्ठं बज्झं पि जमुज्जुसुत्तपज्जंता ।
इच्छन्ति वत्थुधम्मं तो तेसिं सव्वणिक्खेवा ॥३३८५॥

निक्खेवे त्ति गतं ॥

सामण्णादिविसिट्ठं । इह द्विप्रकारं वस्तु-नयमतात्-बाह्यम् अभ्यन्तरं च । उभयं च सामान्यविशेषोभयविशिष्टम् । तत्र शुद्धानां शब्दनयानामभ्यन्तरमेव विज्ञानात्मकं परमार्थवस्तु, इतरेषां नैगमादीनामृजुसूत्रपर्यन्तानां बाह्यं चाभ्यन्तरं च सामान्यादिविशिष्टं वस्त्विति । तस्मात्तेषां सर्वनिक्षेपाः प्रमाणम्, सामान्यादिविशिष्टबाह्याभ्यन्तरवस्त्वभ्युपग(गा)मित्वात् उभयस्वरूपनैगमवत् ॥३३८५॥

॥ एवं द्वितीयं निक्षेपद्वारम् ॥

अथ तृतीयं पदमिति द्वारं निरूपणीयमित्यत आह—

णिवतति पदादिपज्जंततो जतो तो णमो णिवा[3]तो त्ति ।
सो च्चिय णिययत्थपरो पदमिह णेवातियं णाम ॥३३८६॥

पदं ति गतं ॥

१ ता त । २ °म्मा को हे त । ३ °स त । ४ °वो को हे त । ५ °वाद को हे ।

**णिवतति पदादिपज्जंततो जतो** इत्यादि । 'णेवातियं पदं' [३३७०] इति सूत्रगाथाखण्डम् । तस्येदं भाष्यम्–नामिक आख्यातिक-औपसर्गिक-नैपातिक-मिश्रेतिपञ्चप्रकारपदसम्भवे निर्द्धार्योच्यते नैपातिकं यदिदं 'नमः' इति । तत्र निपतन्ति पदादिपर्यन्तेष्विति निपातः । निपातादागतम्, निपातेन वा निर्वृत्तम्, निपातं(त) एव वा–स्वार्थिक एव प्रत्ययः 'ठक्' ततो–नैपातिकं पदम् 'नमः' इति । 'स एव' इति स्वार्थिकप्रत्ययसूचनं निजार्थपरतया । 'नैपातिकम्' इति नामिकादिशेषपदव्यावृत्तिराख्याता भवति । ३३८६॥

॥ पदमिति द्वारं गतम् ॥

अथ पदार्थनिरूपणार्थमिदम्––

**पूयत्थमिदं[3] सा पुण सिरकरपादादिदव्वसंकोयो ।**
**भावस्स य संकोयो मणसो[4] सुद्धस्स विणिवेसो ॥३३८७॥**

**पूयत्थमिदं सा पुण** इत्यादि । पूजार्थमिदं 'नमः' इति पदम्, यस्मात् 'णम प्रह्वत्वे' धातुः । "उणादयो बहुलम्" [३। ३।१। पाणि०] इति 'असुन्' 'नमोऽर्हद्भ्यः' इति पूजार्थमादौ निपातः। सा पुनः पूजा कर-शिरः-पादादिद्रव्यसंकोचः–प्रह्वता निमि(र्म)दावस्थानम् । भावसंकोचस्तु मनसो विशुद्धस्य नियोगः । सूत्रे चोक्तम् **'दव्व-भावसंकोयणपतत्थो'** [३३७०] द्रव्यभावसंकोचनाप्रधानः पदार्थः द्रव्यभावसंकोचनपदार्थः । पार्थिवादिराकृतिगणः [२।१।६०। वार्ति०पाणि०] इति समासः । तत्र भङ्गचतुष्टयम्–द्रव्यसंकोच इत्येकः–यथा वालकस्य, भावसंकोच इति [द्वितीयो यथाऽनुत्तरदेवस्य, द्रव्यसङ्कोचो भावसंकोचश्च यथा] शाम्बस्य तृतीयः, न द्रव्यसंकोचो न भावसंकोच इति नमस्काराभावाच्छून्योऽयं भङ्गः ॥३३८७॥

अत्र किं प्रधानमप्रधानं चेति गाथात्रितयम्—

**एत्थं तु भावकरणं पधाणमेकंतियं ति तस्सेयं ।**
**वज्झं सुद्धिणिमित्तं भावावेतं तु तं विफलं ॥३३८८॥**
**जं जुज्जंतो वि तयं ण तप्फलं लभति पालगादि व्व ।**
**तव्विरहिता लभंति य फलमिह जमणुत्तरादीया ॥३३८९॥**

१ °पातिकं नैपातिकं पञ्च°—प्रतौ। २ °ति तानि का° प्रतौ । ३ मिणं को हे त। ४ °सा को हे : ५ पालक° को हे । ६ शम्ब° हे, सब्ब° को । ७ व त को हे। ८ जुंजं° त टीका प्रतौ। ९ नयं त।

**तध वि विसुद्धी पाएण वज्झरहितस्स जो ण सा इधरा।**
**संजायति तेणोभयमिट्ठं संबस्स वा णमतो ॥३३९०॥दारं॥**

**एत्थं तु भावकरणं पधाणमित्यादि। जं जुञ्जंतो वि। तध वि विसुद्धीत्यादि।** तत्र भावकरणमेव प्रधानम्, ऐकान्तिकत्वात्, अनन्तरासाधारणकारणवत्। बाह्यं तु द्रव्यकारणं भावशुद्धिनिमित्तं प्रयुज्यमान(नं) फलाय प्रधानकारणाङ्गभूतत्वात्, पटस्य वेमादिवत्। यत्तु अफलं तत् प्रधानकारणाङ्गभूतं न भवति, तन्तुविरहितव्यो-(वे)मादिवत्। भावापेतस्य बाह्यनिमित्तस्य निष्फलत्वात्, यस्मात्तद्योजयन्नपि बाह्यं द्रव्यसङ्कोचं तत्फलं न लभते, भावापेतत्वात्, भावशून्ये(न्य)नमस्कारकारिबालकवत्। केवलभावसंकोचप्रयोज(जि)नस्तु विनाऽपि द्रव्यसंकोचेन तत्फलभाज एव, संकोचप्रधानत्वात्, शय्यातलस्थितभावनमस्कारप्रयोग्या(ज्य)नुत्तरसुरवत्। यद्येवमुभयत्र भाव एव प्रधानमिति बाह्यद्रव्यसंकोचप्रयोगाभाव एव प्राप्तः, विनाऽपि तेन फलस्य लाभात् अनुत्तरदेवानामिव। तत्प्रतिपादनार्थमुच्यते—**तध वि विसुद्धी पाएण।** द्रव्यभावसंकोचप्रयोगिनः साधवः सम्यगाराधकाः अभीष्टफलभाजः, भावविशुद्धिनिमित्तं बाह्यद्रव्यसंकोचि(च)प्रयोजित्वात्, भावसहितद्रव्यनमस्कारप्रयोजित(जि)साधुवत्॥३३८८–९०॥

॥ पदार्थद्वारं गतम् ॥

अथ प्ररूपणाद्वारमुच्यते—

**दुविधा परूवणा छप्पता य णवधा य छप्पता इणमो।**
**किं कस्स केण व कहिं केवतियं कतिविधो[२२३–प्र०]व भवे ॥६४८॥ ॥३३९१॥**

**दुविधा परूवणा।** 'रूप रूपक्रियायाम्'। प्रकृष्टा रूपणा, प्रधाना, प्रगता वा [रूपणा]प्ररूपणा प्रकर्षवर्णना। सा द्विप्रकारा—षट्पदा, नवपदा च। षट्पदा षड्भिः प्रश्नैरधिगमः—**'किं, कस्स, केण व, कहिं, केवतियं, कतिविधो व भवे'।** 'निर्देश-स्वामित्व-साधनाधिकरण-स्थिति-विधानतः" [तत्त्वार्थ० १,७] इत्यर्थः॥३३९१॥

तत्र यथाक्रमेण प्ररूपणा—

**किं जीवो तप्परिणतो पुव्वपडिवण्णओ य जीवाणं।**
**जीवस्स व जीवाण व पडुच्च पडिवज्जमाणं तु ॥६४९॥३३९२॥**

---

१ °हिसमा ण को। २ किच्चिरं हा दी। केवचिरं त हे को। ३ °पज्ज° हे। ४ °ज्जमा° को। ५ व म।

किं जीवो तप्परिणनो इत्यादि सूत्रम् ॥३३९२॥

अस्य भाष्यम्—

**किं होज्ज णमोकारो जीवोऽजीवो गुणोऽथवा दव्वं ।**
**जीवो णो खन्धो त्ति य तथ णो गामो णमोक्कारो ॥३३९३॥**

**किं होज्ज णमोक्कारो** इत्यादि । 'किम्' इति निर्देशद्वारम्, सर्वनामनपुंसकलिङ्गनिर्देशः सर्वलिङ्गैः सह यथायोगं सम्बध्यते । किं सामायिकम्? को नमस्कारः? जीवाजीवद्वैविध्यान्तर्गतत्वात् पदार्थानां जीवोऽजीवो वा? अथवा [द्रव्य-]गुण-पर्यायत्रैविध्याज्जगतः गुणः पर्यायो द्रव्यं वा स्यात्? । तत्र प्रतिनिर्देशः—जीवो नमस्कारः, नोस्कन्धो नोग्रामश्च । अजीवो न भवति । स्कन्धो ग्रामो वा न भवति । कस्यचिद् नयस्य गुणः पर्यायो वा, कस्यचित्तु जीव एव । एतत् सामायिकव्याख्यानेऽभिहितम् । अपि च, जीव उच्यमानो नाऽविशिष्ट एव जीवः । किं तर्हि? तत्परिणतः—तं विवक्षितं भावं परिणतः—नमस्कारभावमापन्न इत्यर्थः ॥३३९३॥

कस्मात् कारणात्? उच्यते—

**जं जीवो णाणमयो णण्णो णाणं च जं णमोक्कारो ।**
**तो सो जीवो दव्वं गुणो त्ति सामाइएऽभिहितं ॥३३९४॥**

**जं जीवो णाणमयो** इत्यादि । यस्मान्नमस्कारो ज्ञानम्, जीवश्च उपयोगलक्षणत्वात् ज्ञानादनन्यो ज्ञानमयस्तस्माज्जीवो नमस्कारः ॥३३९४॥

नोस्कन्धः । कथम्? इत्युच्यते—

**सव्वत्थिमयो खंधो तदेगदेसो य जं णमोक्कारो ।**
**देसपडिसेधवयणो णोसद्दो तेण णोखंधो ॥३३९५॥**

**सव्वत्थिमयो खंधो** इत्यादि । स्कन्ध इति संघातस्याख्या । स च पञ्चानामस्तिकायानां संघातः स्कन्धः सर्वास्तिकायमयः । जीवश्च नमस्कारपरिणति(त):-तस्यास्तिकायसमुदायस्यैकदेशत्वात्—स्कन्धो न भवति अनेकस्कन्धत्वापत्तिप्रसङ्गात्, अस्कन्धोऽपि न भवति स्कन्धाऽभावप्रसङ्गात्, वस्तु चासौ, न चानभिलाप्य एव, तस्मात् केनचिदेतदर्थानुगुणेन शब्देनाभिधेय इति नोस्कन्ध उच्यते । 'नो' तद्दे-

१ जीवा° त । २ त्ति को हे त । ३ °क्करो ह । ४ लिङ्गसर्वनामनपुंसक° इति प्रतौ । ५ पृ० ६०३-गा० ३१२६तः द्रष्टव्यम् । ६ °दिक्क° हे । ७ पंचत्थि-प्रतौ । ८ नोशब्दपदस्क° प्रतौ ।

शविशेषप्रतिषेधे, अतः स्कन्धदेशविशेषार्थद्योतको 'नो'शब्दो निपातः । नोस्कन्धो स्कन्धदेश इत्यर्थः ॥३३९५॥

भूतग्गामो गामो तदेगदेसो तओ[1] त्ति णोगामो ।
देसो त्ति सो किमेगोऽणेगो णेयो णयमतातो ॥३३९६॥

[भूतग्गामो] एवमेव च नोग्रामः । ग्रामो हि चतुर्दशभूतसमुदायः । तस्यैकदेशो जीवः । तस्मान्नोग्रामो नमस्कारः अग्रामो न भवति, न चाभावः, न चान्य एवेति भूतग्रामश्चाख्यायते । सूक्ष्मैकेन्द्रियाः पर्याप्तापर्याप्तभेदात् द्वेधा, बादरैकेन्द्रिया अपि पर्याप्ता अपर्याप्ता इति द्वेधा । एवमेकेन्द्रियाः चतुर्भेदाः । द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाश्च त्रयोऽपि प्रत्येकं द्वैविध्यात् षोढा भवन्ति । एवं संज्ञिपञ्चेन्द्रियाः असंज्ञिपञ्चेन्द्रियाश्च प्रत्येकं द्वैविध्याच्चतुर्भेदाः । ततः चत्वारः, षट् चत्वारश्च भेदाः, समुदिताश्चतुर्दश भवन्ति । भूता जीवा इति पर्यायः, तेषां ग्रामः समुदायः भूतग्रामः—क्षुरिकामुण्टचाकारो लिख्यते— [चित्रम्] ॥३३९६॥

यदि चासौ देशस्ततः किम् एकः ? अनेकः ? इत्यत्र नयविचारः—

तप्परिणतो च्चिय जतो[2] सद्दादीणं तदा णमोक्कारो ।
सेसाणमणुवयुत्तो वि लद्धि[3]सहितोऽधवा जोग्गो[4] ॥३३९७॥

तप्परिणतो च्चिय जता इत्यादि । यदैव नमस्कारभावपरिणतस्तदैव तदुपयोगानन्यत्वात् शब्द-समभिरूढैवंभूतानां त्रयाणां नयानां शुद्धत्वाज्जीवो नमस्कार उच्यते, नान्यभावपरिणतः । शेषनयानां नैगमादीनां ऋजुसूत्रपर्यन्तानां तज्ज्ञानात् तज्ज्ञानलब्धिसहितोऽनुपयुक्तोऽपि प्रदीर्घजीवद्रव्यनिमित्तत्वप्रतिपत्तेः, अथवा तज्ज्ञानलब्धेर्योग्यस्तत्तद्द्रव्यत्वात्तदेकत्वगतेः भाविनि भूतत(व)दुपचारात्॥३३९७॥

अथैकत्वानेकत्वचिन्तायाम्—

संगहणयो णमोक्कारजातिसामण्णतो सता एगं ।
इच्छति ववहारो पुण एगमिहेगं बहू बहवो ॥३३९८॥

१ नओ त । २ जओ को । ३ °द्धिजुत्तो को । ४ रहिओ को ।

**संगहणयो णमोक्कारजाति०** इत्यादि । संग्रहनयस्य नमस्कारजातिसामान्यमात्राक्षेपादेक एव नमस्कारः सर्वस्मिन् जगति सर्वकालमपीति । व्यवहारस्तु मन्यते एकं नमस्कारपरिणतं जीवमेको नमस्कार इति, बहवो नमस्कारपरिणता जीवाः बहवो नमस्काराः अमी इत्यभिमन्यते ॥३३९८॥

**उज्जुसुतातीणं पुण जेण सयं संपदं च वत्थुं ति ।**
**पत्तेयं पत्ते[२२३-द्वि०]यं तेण णमोक्कारमिच्छंति ॥३३९९॥**

**उज्जुसुतातीणं पुण** । ऋजुसूत्रादीनां वर्तमानमात्रग्राहित्वात् 'यत् सम्प्रति स्वकं च तद् वस्तु' इति प्रतिपुरुषं नमस्कारभेदमिच्छन्ति शुद्धनयाः ॥३३९९॥

**पडिवज्जमाणओ पुण एगोऽणेगे[1] व संगहं मोत्तुं ।**
**[2]इट्ठं सेसणयाणं पडिवण्णा णियमतोऽणेगे ॥३४००॥कधं ति गतं॥**

**पडिवज्जमाणओ पुण** । संग्रहमेकं मुक्त्वा शेषनयानां विशेषप्रधानत्वात् वर्तमानकाले एकस्मिन् प्रतिपद्यमाने नमस्कार एक एव, अनेकस्मिन् प्रतिपद्यमाने अनेके नमस्काराः । ये पुनरतीतकाले पूर्वप्रतिपन्नास्ते नियमादनेके—असंख्येयत्वात्—सम्यग्दर्शनं (ने) । एवं 'किम्' इति द्वारं नयप्रपञ्चतो निरूपितम् ॥३४००॥

अतः परं 'कस्य' इति स्वामित्वं निरूप्यते—

**कस्स त्ति णमोक्कारो [3]पुज्जस्स हि संपदाणभावातो ।**
**जे[4]ण्वकारमतं जध भिक्खा कस्स जतिणो त्ति ॥३४०१॥**

**कस्स त्ति णमोक्कारो** । अवश्यं सता पदार्थेन पदार्थान्तरसम्बन्धिना भवितव्यम्, [अतः] सम्बन्धोऽन्वेषणीयः । स च बहुभेदः—कर्तृ-करण-सम्प्रदानाऽपादानाऽधिकरणादिभेदात् कारकविवक्षाधीनः, उपपदविशेषाधीनश्चेति । कस्य नमस्कारः ? इति पृष्टे स्वस्वामिसम्बन्धो गुणगुण्यादिभेदविशिष्ट आक्षिप्तो भवति । तस्य प्रतिनिर्देशः नमस्कारोपपदविशेषात् सम्प्रदानभावमुपनीयोच्यते—पूज्याय नमस्कारः । [5]नमःस्वस्ति-स्वाहा-स्वधाऽलम्-वषड्योगे स्वस्वामिसम्बन्ध एव चतुर्थ्या विभक्त्या द्योत्यते । एतन्नमस्कारकरणं नमस्कार्य-नमस्कर्तृविषयमिति द्वयाधीनत्वेन प्रभेदेन विवेच्यते । यद्यपि नमस्कारक्रियानिष्पादकः कर्ता, तथापि तस्य नोच्यते स्वयमनुपयुज्यमानत्वात्, यति-

१ व को हे । २ गो को । ३ इट्ठो को हे त । ४ पुव्व० त । ५ "नमः-स्वस्ति-स्वाहा-स्वधा-अलम्-वषड्योगाच्च" २।३ १६। काशिका ।

भिक्षावत् । यतेः भिक्षा यतिभिक्षेति सम्बन्धषष्ठीतत्पुरुषः सम्बन्धे सिद्धः, न पुनर्गृहस्थस्य भिक्षानिष्पादकस्य दातुः भिक्षा, तस्य तन्निमित्तैश्वर्यभोगित्वात् । एतल्लोकव्यवहारविषये नैगम-व्यवहारविषये नैगम-व्यवहारनययोर्मतम् ॥३४०१॥

तथा च प्रमाणैः प्रतिपादनम्—

**पुज्जस्स व पज्जाओ तप्पच्चयतो घडातिधम्म व्व ।**
**तद्धेतुभावतो वा घडविण्णाणाभिधाणं व्व[1] ॥३४०२॥**

**पुज्जस्स व पज्जाओ** इत्यादि । पूज्यस्यैव नमस्कारः पर्यायः, तत्प्रत्ययकारित्वात्, घटात्मीयरूपादिवत् । इतश्च पूज्यस्यैव नमस्कारः पर्यायः, तत्प्रतीतिहेतुत्वात्, घटस्य घटविज्ञानाभिधानवत् ॥३४०२॥

**अधवा स करन्तो चे तस्स जं भिच्चभावमावण्णो ।**
**का तस्स णमोकारे चिन्ता दासक्खरोव्वम्मे ॥३४०३॥**

**अधवा स करन्तो चे तस्से**त्यादि । पूज्यस्यैव नमस्कारः स्वामित्वात्, दासखरवत् स्वामिस्वामित्वम् । कथम् ? इति चेत्, तत आह—**स करन्तो चे तस्स जं भिच्चभावमावण्णो** । नमस्कारस्य स्वामी निष्पादकस्तदधीनत्वात्, खरस्य दासवत् । नमस्कर्तुरपि स्वामी पूज्यः, नमस्कर्ती(र्त्रा) भृत्यत्वं प्रतिपद्य पूजनीयत्वाद् राजवत् । तस्मात् पूज्यः स्वामिस्वामीति सिद्धो हेतुः । पूज्यो नमस्कारस्य स्वामी तत्स्वामित्वाद् दासखरस्य राजवत् । तत्राष्टौ भङ्गाः—सम्बन्धविशेषापेक्षाः विवक्षावशात् प्रापितत्वात्—जीवस्य १, अजीवस्य २, जीवानाम् ३, अजीवानाम् ४, जीवस्य च अजीवस्य ५, जीवस्य अजीवानां च ६, जीवानाम् अजीवस्य च ७, जीवानामजीवानां चेति ८ ॥३४०३॥

एषामनुक्रमेणोदाहरणानि गाथात्रयेण—

**जीवस्स सो जिणस्स व अज्जीवस्स तु जिणिन्दपडिमाए ।**
**जीवाण जतीणं पि व अज्जीवाणं तु पडिमाणं ॥३४०४॥**
**जीवस्साजीवस्स य जतिणो बिंबस्स चेगतो समयं ।**
**जीवस्साजीवाण य जतिणो पडिमाण चेगत्थं[4] ॥३४०५॥**
**जीवाणमजीवस्स य जतीण बिंबस्स चेगतो समयं ।**
**जीवाणमजीवाण य जतीण पडिमाणमेगत्थं[5] ॥३४०६॥**

१ °डाय° हे त । २ व को है । ३ चिंतस्स त । ४ °गत्थ जे । ५ °ण चेग° को हे त ।

जीवस्स मो जिणस्स व ३ ॥३४०४–६॥

इदानीं पूर्वविचारेण सह विरोधमुद्भाव्य प्रतिसमाधानं बुद्धिवैमल्यार्थं नयभेदप्रदर्शनार्थं च—

**जीवो त्ति णमोकारो[२२४–प्र०]णणु सव्वमतं कधं पुणो भेदो ।**
**इध जीवस्सेव मतो भण्णति सामित्तचिन्तेयं ॥३४०७॥**

**जीवो त्ति णमोक्कारो ।** ननु सर्वनयमतमुक्तं जीव एव नमस्कार इति सामानाधिकरण्यम् । किं पुनरयं भेदेन निर्दिश्यते 'जीवस्य नमस्कारः' इति ? उच्यते, नैव विरोधः, तथासमानाधिकरणरूपस्यैव जीवस्य मतो नमस्कारस्यान्येन सम्बन्धिना सह स्वामित्वं नेयम्, भेदेनैव स्व-स्वामिनोर्भेदात्, देवदत्ताश्ववत् । तस्य जीवस्य सतो नमस्कारस्यान्य एको जीवः स्वामी, बहवो वा, नमस्कार्याणां बहुत्वात् । कदाचिदजीवः प्रतिमादिरेकः देवकुलस्य देवस्य वा ग्रामवत् । कदाचिदजीवा बह्व्यः प्रतिमाः । एवं संयोगविशेषेण भङ्गका नेतव्याः ॥३४०७॥

अथ संग्रहनयमतमुच्यते नैगम-व्यवहारमतविपर्ययेण—

**सामण्णमेत्तगाही सपरजिएतरविसेसणिरवेक्खो ।**
**संगहणयोऽभिमण्णति तमिहेगस्साविसिट्ठस्स ॥३४०८॥**

**जीवस्साजीवस्स व सस्स परस्स व विसेसणेऽभिण्णो ।**
**ण य भेतमिच्छति सता स णमोसामण्णमेत्तस्स ॥३४०९॥**

**जीवो[3] णमो त्ति तुल्लाधिकरणतं[4] बेति ण तु स जीवस्स ।**
**इच्छइ वाऽमुद्धयरो तं जीवस्सेअ[5] णण्णस्स ॥३४१०॥**

**सामण्णमेत्तगाही** इत्यादि गाथात्रयम् ३ । सामान्यमात्रसंग्राही संग्रहनयः । स्वः आत्मीयः, परः परकीयो जीवः, ताभ्यामितरः अजीवः । तेषां स्व-पर-जीवेतरेषां विशेषाः एकत्व-द्वित्वादयः, तेषु निरपेक्षो विशेषेषु, सामान्यमात्रग्राहित्वात् स्वपरजीवेतरविशेषनिरपेक्षः । स एवंप्रकारः संग्रहः सर्वैकत्ववादी । कस्य ? अविशिष्टस्य जीवमात्रस्य, 'अजीवस्य, स्वस्य, परस्य च' इत्येवंविशेषणनिरपेक्षः, जीवस्य स्वामिमात्रस्य सामान्यस्य परमार्थत्वात् । न च नमस्कारस्यापि शब्दस्योदात्तानु-

---

१ मतो त । २ °परि° जे । ३ °व नमो त । ४ °रणं **को हे** त । ५ °स्सेव **को हे** त ।

दात्तादिद्रुत-विलम्बिता[दि]वृत्तिभेदानपेक्षते भ्रान्तत्वात्, किन्तु 'नमः'सामान्यमात्रमेवेच्छति । 'जीवो नमः' इति च तुल्याधिकरणतामेव ब्रूते अभेदपरमार्थत्वात् । न पुनर्जीवस्य द्रव्यस्य नमस्कारोऽर्थान्तरभूत एव पर्याय इति जीव एव नमस्कार इतीच्छति । 'इच्छइ वा' । 'वा'शब्दो विकल्पार्थः । कश्चित्त्व(त्तु) संग्रहः [अ]शुद्धतरः पूज्यजीवपूजकजीवसम्बन्धाज्जीवस्यैव नमस्कार इत्येकं भङ्गं प्रतिपद्यते, न शेषभङ्गानिति ॥३४०८–१०॥

**उज्जुसुतमतं णाणं सद्दो किरिया व जं णमोक्कारो ।**
**होज्ज ण हि सव्वधा सो जुत्तो तक्कत्तुरण्णस्स ॥३४११॥**

**उजुसुतमत**मित्यादि । ऋजुसूत्रमतमाख्यायते–नमस्कारो हि ज्ञानम्, शब्दः, क्रिया वा स्यात् । सर्वथाऽपि तस्मात् स्वकर्त्तुरन्यस्य न युक्तो व्यपदेष्टुम्, जीवाऽजीवादेः भिन्नविषयत्वात् । न हि खदिरविषयस्य छेदनस्य पलाशे व्यपदेशो युज्यते ॥३४११॥

अपि च, यदि ज्ञानं नमस्कारस्तत इदम्—

**णाणं जीवाणण्णं तं कधमत्थंतरस्स पुज्जस्स ।**
**जीवस्स होतु किध वा पडिमाए जीवरहिताए ॥३४१२॥**

**एवं सद्दो किरिया य सद्दकिरियावतो जतो धम्मो ।**
**ण य धम्मो दव्वंतरसंचारी तो ण पुज्जस्स ॥३४१३॥**

**णाणं जीवाणण्णं** इत्यादि । ज्ञानं जीवान्नमस्कर्त्तुरनन्यत् । तत्कथमर्थान्तरभूतस्य पूज्यस्य नमस्कार[:] जीवान्तरस्य व्यपदिश्यते ? कथं वा प्रतिमायाः जीवरहितायाः, तदधर्मत्वात्, आकाशमूर्तत्ववत् । यदि वा नमस्कारः शब्दः, अथ[वा] क्रिया, तथापि तच्छब्द-क्रियावत एव जीवस्य तौ युक्तौ, तद्धर्मत्वाद्, घटरूपादिवत्, वैधर्म्ये आकाशरूपादिवत् । सर्वधर्मा एव धर्म्यन्तरसञ्चारिणो न भवन्तीति मर्यादा सिद्धा । तस्मान्न पूज्यस्य नमस्कारः ॥३४१२–१३॥

यो वाऽर्थान्तरभूतस्य पूज्यस्य नमस्कारमिच्छेत् यतिभिक्षादृष्टान्तेन तस्यामी दोषाः—

**एवं च कतविणासाकतागमेगत्तसंकरादीया ।**
**अण्णस्स णमोक्कारे दोसा बहवो पसज्जंति ॥३४१४॥**

एवं च कतविणामा० इत्यादि। कर्त्तुरन्यस्य नमस्कारेऽभ्युपगम्यमाने कृतकर्मनाशः, अकृतकर्माऽऽगमः, एकत्वम्, तस्माच्च वस्तुसंकरः, परस्पररूपसंक्रान्तेश्च व्यतिकरः एवमादयो बहवो दोषाः—गृहस्थेन कृता भिक्षा नमस्कारो वा अन्यस्य चेद् व्यपदिश्यते यतेः(तेः)—तस्माद् गृहस्थस्य कृतं कर्म नष्टम्, यतेरकृतं कर्म आगतम्, भिक्षा-नमस्कारकर्तृत्वे वा समाने एकमेव तद् वस्तु जातमिति संकरः, यतिर्वा गृहस्थः [गृहस्थो] वा यतिः स्यादिति व्यतिकरः। नैवेष्यते एवम्, तस्मात् कृतनाशाऽकृताभ्यागमैकत्व-संकरादिदोषभयात येनैव यत् कृतं तस्यैव तद्युक्तं नान्यस्येति कर्त्तुरेव नमस्कारः न पूज्यस्येति ॥३४१४॥

यदि वा कश्चिदेवं मन्येत—

**जति सामिभावतो होज्ज पूयणिज्जस्स सो त्ति को दोसो।**
**अत्थंत[२२४-द्वि०]रभूतस्स वि जध गावो देवदत्तस्स ॥३४१५॥**

**जति सामि०**। 'पूज्यस्य नमस्कारः' इति व्यपदेशः सार्थकः, अर्थान्तरभूतस्वस्वामिसम्बन्धत्वात्, देवदत्तस्य गावः इति यथा ॥३४१५॥

ननु चायम् 'अस्येदंभावः' स्वस्वामिसम्बन्धः प्रायेण बाह्यद्रव्यसम्बन्धी न गुणेष्विति असिद्धत्वं हेतोरुद्भावयन्नाह—

**अस्सेदं ववदेसो हवेज्ज दव्वम्मि ण तु गुणे जुत्तो।**
**पडयस्स सुक्कभावो भण्णति ण हि देवदत्तस्स ॥३४१६॥**

**अस्सेदं ववदेसो** इत्यादि। 'पूज्यस्य स नमस्कारः' इत्ययं व्यपदेशो न युक्तः, गुणसम्बन्धित्वात्, पटस्य शाक्ल्यं देवदत्तस्य स्वमिति यथा पट एव स्वं भवति, न तद्गतं शौक्ल्यम् ॥३४१६॥

अत्राचार्य आह—सत्यम्, व्यपदेशो लोके नास्ति, तथापि तद्गुणस्य स्वत्वमनिवारितं पटशौक्ल्यं देवदत्तस्य स्वम्, तेन भुज्यमानत्वात् स्वगतवर्ण स्पर्शादिवत्। एतदर्थं गाथा—

**ववदेसाऽभावम्मि वि णणु सामित्तमणिवारितं चेव।**
**अण्णाधाराणं पि हु सगुणाण व भोगभावातो ॥३४१७॥**

**ववदेसा०** गतार्था ॥३४१७॥

एवं सिद्धेऽपि स्वस्वामिसम्बन्धे पूज्यस्य न युक्तो नमस्कारो व्यपदेष्टुम्—पूज्यः स्वामी न भवतीत्युक्तं भवति, तत्फलस्यानुपभोक्तृत्वात्, परधनस्येव देवदत्तः। पूजयत एव नमस्कारः स्वम्, तत्फलस्य भोक्तृत्वात् स्वधनस्येव देवदत्त इति ॥३४१७॥

---

१ तो हे। २ ववदेसो जे।

एवं च पूर्वप्रमाणे भोगाभावात् 'नमस्कारः स्वं पूज्यस्य' इत्यत्रासिद्धत्वमुद्भावितं भवति । प्रतिप्रमाणत्वानुमानविरोधः । अत इयं गाथा—

**एवं पि ण सो पुज्जस्स तप्फलाभावतो परधणं व ।**
**जुत्तो फलभावातो सधणं पिव पूजेयंतस्स ॥३४१८॥**

**एवं पि ण सो पुज्जस्से**त्यादिर्भावितार्था ॥३४१८॥

अथासिद्ध[त्व]प्रसाधनार्थं गाथा—

**णणु पुज्जस्सेयं[1] फलं दीसति पूजा[2] ण पूजयंतस्स ।**
**णाणुवजीविचणतो तं तस्स फलं जधा णभसो ॥३४१९॥**

**ण य दिट्ठफलत्थोऽयं जुत्तो[3] पुज्जस्स वोवकाराय ।**
**किंतु परिणामसुद्धी फलमिट्ठं सा य पूजयतो ॥३४२०॥**

**णणु पुज्जस्सेय** इत्यादि । भोक्तैव नमस्कारस्य पूज्यः, तत्फलसम्बन्धित्वात् स्वगुणानामिव, तत्फलं पूजा दृष्टेति । सा च पूज्याय न पूजयतः । नमस्कर्तृकृतपूजा पूज्यस्य फलं न भवति, स्वयमनुपजीव्यमानत्वादाकाशस्येव । ननु च दृष्टा पूजा तेन भुज्यमाना । न हि दृष्टेऽनुपपन्नं नाम ।

आचार्य आह—सत्यम्, दृष्टा, न तु तेन पूज्यता चेतनेन प्रतिमादिना सो(वो)पभुज्यते । न चायं दृष्टार्थ आरम्भः, न च पूज्योपकाराय । किं तर्हि ? अदृष्टधर्मार्जनार्थः स्वोपकारार्थश्च । सा च पूजा—तैन पूजयतः(ता)—अभ्यन्तरपरिणामशुद्धिनिमित्तं प्रयुज्यते । तत्फलं चादृष्टो धर्मः । परिणामविशुद्धिश्च पूजयतः न पूज्यस्येति । तस्माच्छब्दादीनां नयानां पूजयतो नमस्कारः न पूज्यस्येति सिद्धान्तः ॥३४१९–२०॥

उपपत्तयश्चोच्यन्ते—

**कत्तुरधीणत्तणतो तग्गुणतो तप्फलोवभोगातो ।**
**तस्स[6] क्खयोवसमतो तज्जोगातो य सो तस्स ॥३४२१॥**

**कत्तुरधीणत्तणओ** इत्यादि । पूजयतः कर्तुरेव नमस्कारो धर्मः, तदधीनत्वात्, तद्गुणत्वात्, तत्फलोपभोगत्वात्, तत्क्षयोपशमत्वात्, तद्योग्यत्वात् । ज्ञानादिगुणवत् ॥३४२१॥

---

१ पुज्ज° त । २ °स्सेव को हे त । ३ पुज्जा जे । ४ ज° जे । ५ °रोय त । ६ °णा° हे । ७ °स्स य ख° को । ८ व त ।

इतश्च शब्दादीनां नयानां पूजयितुर्धर्म एव नमस्कारः, ज्ञानत्वात्, तदितरज्ञानवत् । तदर्थं गाथा—

जं णाणं चेअ णमो सद्दातीणं ण सद्दकिरियाओ ।
तेण विसेसेण तयं बज्झस्स ण तेऽणुमण्णंति ॥३४२२॥दारं। कस्स त्ति गतं।

जं णाणं चेअ इत्यादि । ज्ञानत्वे च तस्याभ्यन्तरत्वात् बाह्यद्रव्यस्य पूज्यस्य न तेऽनुमन्यन्ते शब्दादय इति ॥३४२२॥ कस्येति द्वारं गतम् ।

'केन' इति अधुना निरूप्यते—

णाणावरणिज्जस्स य दंसण[२२५–प्र०]मोहस्स जो[2] खयोवसमो[3] ।
जीवमजीवे अट्ठसु भंगेसु तु[4] होति सव्वत्थ ॥६५०॥३४२३॥

णाणावरणिज्जस्स य इत्यादि । पूर्वार्धेन 'केन' इति द्वारम् । गाथापश्चार्धेन 'कस्मिन्' इति भविष्यति ॥३४२३॥

अथ पूर्वार्धभाष्यगाथा—

केण त्ति णमोक्कारो साधिज्जति लब्भते व भणितम्मि ।
कम्मक्खयोवसमतो किं कम्मं को खयोवसमो ? ॥३४२४॥

'केण' त्ति णमोक्कारो इत्यादि । 'केन' साधनेन साध्यते नमस्कारः—केन हेतुना लभ्यत इत्यर्थः । आह-कम्मक्खयोवसमतो कर्मक्षयोपशमेन साधनेन—कर्मक्षयोपशमाद्धेतोः ॥३४२४॥

तत्र किं कर्म ? को वा क्षयोपशमः ? इति प्रश्ननिर्वचनार्था गाथा—

मतिसुतणाणावरणं दंसणमोहं च तदुवघातीणि ।
तप्फड्डयाइं दुविधाइं सव्वदेसोवघातीणि ॥३४२५॥

मतिसुतणाणावरणं ज्ञानावरणसामान्येऽपि मति-श्रुति(त)ज्ञानावरणद्वयं परिगृह्यते, मति-श्रुतज्ञानान्तर्गतत्वाद् नमस्कारस्य । ज्ञानं च सम्यग्दर्शनसाहचर्यात् ज्ञानीभवतीति । दर्शनमोहनीयक्षयोपशमोऽप्यत्र कारणम् । तस्मात् त्रीणि कर्माणि तदुपघातीनि । तेषां च द्विविधानि फड्डकानि—सर्वोपघातीनि देशोपघातीनि च ॥३४२५॥

---

१ चेव को हे त । २ तह दी हा म । ३ °मे दी हा म । ४ य को हे दी म ।

तत्रापि—

सव्वेसु सव्वघातिसु हतेसु देसोवघातियाणं च ।
भाएहि मुच्चमाणो समए समए अणंतेहिं ॥३४२६॥
पढमं लभति णकारं एक्केक्कं वण्णमेवमण्णं पि ।
कमसो विसुज्झमाणो लभति समत्तं णमोक्कारं ॥३४२७॥

सव्वेसु सव्वघातिसु गाथा । पढमं लभति णकारं गाथा । सर्वेषु सर्वघातिस्पर्द्धकेषु हतेषु देशोपघातस्पर्द्धकानां च समये समये विशुद्धयपेक्षं भागैरनन्तैः क्षयमुपगच्छद्भिर्मुच्यमानः क्रमेण प्रथममक्षरं लभते णकारम् । एवमेकैकं वर्णं विशुद्धिप्रकर्षक्रमेण विशुद्धयमानः समस्तनमस्कारम्—"णमो अरहंताणं । णमो सिद्धाणं"। इत्यादि—पञ्चप्रकारम् ॥३४२६–२७॥ एवं कर्माण्युक्तानि ॥

कः क्षयोपशमः ? इति गाथा—

खीणमुदिण्णं सेसयमुवसन्तं भण्णते[2] खयोवसमो ।
उदयविघात उवसमो जा समुदिण्णस्स य विसुद्धी ॥३४२८॥

खीणमुदिण्णमित्यादिः स्फुटार्था ॥३४२८॥

किं पुनः कारणम्—त्रितयं कर्मावरणं परिगृहीतम् ? इत्युपपत्तिरुच्यते—

सो सुतणाणं मतिमणुगतं च तं जं च सम्मदिट्ठिस्स ।
तो तल्लाभे जुगवं मति-सुत-सम्मत्तलाभो त्ति ॥३४२९॥दारं। केण त्ति गतं।

सो सुतणाणं इत्यादि । स नमस्कारः स्वयं श्रुतज्ञानम् । तच्च मतिज्ञानमनुगतं पूरण-पालनभावात् । तच्चोभयं सम्यग्दृष्टेर्ज्ञानं भवति । तस्मात् तल्लाभे नमस्कारलाभे मति-श्रुत सम्यक्त्वानां युगपल्लाभो भवति, स्वावरणक्षयोपशमात् ॥३४२९॥'केन' इति द्वारं गतम् ॥

'कस्मिन्' इत्युच्यते—"जीवमजीवे अट्ठसु भङ्गेसु तु होइ सव्वत्थ"[गा०३४२३] सूत्रगाथापश्चार्द्धम् । तस्य भाष्यगाथा—

कम्हि[3] णमोक्कारोऽयं बाहिरवत्थुम्मि कत्तुराधारे[4]
णेगम-ववहारमतं जीवादावट्ठभे[२२५–द्वि०]दम्मि ॥३४३०॥

१ °मन्ने को । २ °ई को, °इ हे । ३ °म्मि त । ४ °रो को हे त ।

कम्हि णमोक्कारोऽयं इत्यादि। 'कस्मिन्' इति "सप्तम्यधिकरणे च" [२।३।३६ का०] अधिकरणं चाधारः—चतुर्भेदः—व्यापकः—तिलेषु तैलम्, औपश्लेषिकः—कटे आस्ते, सामीप्यकः—गङ्गायां घोषः, वैषयिकः—रूपे चक्षुः, रसे रसनमिति। तत्राद्य आभ्यन्तर आधारः, शेषाः बाह्याः। तत्रापि नैगम-व्यवहारौ बाह्यं वस्त्विच्छतः इति जीवादावष्टभेदे बाह्ये वस्तुनि सर्वत्र सम्भवः। 'जीवमजीवे' [गा० ३४२३] इति प्राकृतशैल्या निर्देशः। अनुस्वारस्याभूतस्यैवागमः ॥३४३०॥

जीवे अजीवे इति भङ्गप्ररूपणा—

**जं सो जीवाऽणण्णो तेण तओ जत्थ सो वि तत्थेयं[१] ।**
**एगम्मि अणेगेसु वं[२] जीवाजीवोभएसुं वा[३] ॥३४३१॥**

**जं सो जीवाऽणण्णो** इत्यादि। नमस्कारो जीवगुणत्वाज्जीवाधारः। सोऽपि जीवोऽन्यस्मिन् जीवे वृक्षादौ स्थित इति जीवानन्यत्वान्नमस्कारस्य वृक्षे जीवे बाह्ये नमस्कार इति। एवमजीवे कटादौ। उभयात्मकजीवाजीवयोः एकवचन-बहुवचनभेदादष्टौ भङ्गा प्रागुक्ता एव ॥३४३१॥

**णणु णेगमादिवयणं पुज्जस्स तओ कधं ण तत्थेव ।**
**तस्स य ण य तम्मि तओ धण्णं व णरस्स [४]छेत्तम्मि ॥३४३२॥**

**णणु णेगमादि[५]वयणं** इत्यादि। ननु नैगमादिनयमतम् 'पूज्यस्य नमस्कारः'। ततः किमिति स एवाधारो न भवति, येन चायमजीवाद्याधारोऽपीष्यते ? उच्यते—सत्यम्, 'पूज्यस्य नमस्कारः' इति तस्य च व्यपदिश्यते। न चावश्यं तस्मिन्नेव तेन भवितव्यम्, अन्यत्रापि नमस्कारेण भवितव्यम्, बाह्यस्थित्यभ्युपगमात्, यथा नरस्य धान्यं व्रीह्यादि क्षेत्रे तिष्ठतीति ॥३४३२॥

एतदेव च सर्वसंग्रहः आधारमात्रे सामान्येऽपीच्छतीति सर्वविशेषणनिरपेक्षम्, यस्मादसौ—

**सामण्णमेत्तगाही सपरजिएतरविसेसणिरवेक्खो ।**
**संगहणयोऽभिमण्णति आधारे तमविसिट्ठम्मि ॥३४३३॥**

**सामण्णमेत्तगाही** गतार्था ॥३४३३॥

तानि चामूनि विशेषणानि संग्रहनयो नेच्छति—

---

१ द्रष्टव्यम् "वक्रादौ अन्तः" ८।१।२६। हैमप्रा०व्या०। २ व को हे। ३ ° य को हे। ४ च हे त। ५ °वे° को हे, °वि° त।

जीवम्मि अजीवम्मि वे[1] सम्मि परम्मि व विसेसणेऽभिण्णो ।
ण य भेतमिच्छति सदा सं[2] णमो सामण्णमेत्तस्स ॥३४३४॥

जीवम्मि अजीवम्मि वेत्यादि । गतार्था ॥३४३४॥

यस्मात् संग्रहनयमतमिदम्—

जीवो णमो त्ति तुल्लाधिकरणतं वें[3]ति ण तु स जीवम्मि ।
इच्छति वा सुद्धतरो तं जीवे चेअँ[4] णण्णम्मि ॥३४३५॥

जीवो णमो त्ति इत्यादि । 'जीवः' 'नमः' इति च सामान्या(ना)धिकरण्यमेवेच्छति । अभेदवादिनो हि जीवे आधारेऽर्थान्तरभूते नमस्कार इति व्यपदेशो नास्य नयस्य । अथवा अत्यन्ताभेद एवाधाराधेययोरिति किञ्चिद्विशेषमात्राभ्युपगमाज्जीव एव नमस्कारो नान्यस्मिन् वस्त्वन्तरे ॥३४३५॥

उज्जुसुतमतं णाणं सद्दो किरिया वँ[5] जं णमोक्कारो ।
होज्ज ण हि सव्वधा सो मतो तदत्थंतरब्भूते[6] ॥३४३६॥

उज्जुसुतमतं णाणं इत्यादि । स्फुटार्थो ॥३४३६॥

सगुणिम्मि णमोक्कारो तग्गुणतो णीलता व पण्णँम्मि[7] ।
इधरा गुणसंकरतो सव्वेगत्तातयो दोसा ॥३४३७॥

सगुणिम्मि णमोक्कारो इत्यादि । स्वगुणिन्येव जीवे नमस्कार इति युक्तम् न गुण्यन्तरे, तद्गुणत्वात् । यत्र(पत्रे) नीलतादिवत् । इतरथा यद्यन्यगुणोऽप्यन्यस्मिन् गुणिनि संक्राम्यते ततो गुणसंकरैकत्वादयो दोषाः ॥३४३७॥

भिण्णाधारं [8]पिच्छति णणु उज्जुसुतो[9] जधा वसति खम्मि ।
[२२६-प्र०]दव्वं तत्थाधिकतं गुणगुणिसंबन्धिचिन्तेयं ॥३४३८॥

ननु चर्जुसूत्रोऽन्याधारमपीच्छति—आकाशे वसतीति । सत्यम् , द्रव्यविवक्षायां भेद एवंविधो दृष्टः इतीच्छति । न पुनर्गुणगुणिसम्बन्धविवक्षायां भेदेनैव भवितव्यमिति ॥३४३८॥

सो सम्मण्णति ण गुणं णिययाधारंतरा[10]सयं इधरा ।
को दोसो जति दव्वं हवेज्ज दव्वंतराधारं ॥३४३९॥

---

१ वि त । २ नास्ति को हे । ३ नेइ त । ४ चेव को हे त । त । ५ य को, च हे । ६ °ओ को हे त । ७ पत्तम्मि हे, पत्तस्स त । ८ ऽपे° को । ९ रिउसुत्तो हे, रिजुसुत्तो को । १० °तयास° को हे ।

**सो मम्मण्णति ण गुणं ।** ऋजुसूत्रः स्वगुणं निजादाधारादाधारान्तराधारं न सम्मन्यते, द्रव्यं तु द्रव्यान्तराधारम् । किमिति न सम्मन्यते—तत्र को दोषः ? इति दोषाभावाभिप्रायेण पृच्छति ॥३४३९॥

अथ शब्दनयमतम्—

**जं णाणं चेअे[1] णमो सद्दातीणं[2] ण सद्दकिरियाओ[3] ।**
**तेण विसेसेण तयं वज्झम्मिं[4] ण तेऽणुमण्णन्ति ॥३४४०॥**

**जं णाणं चेअ णमो** इत्यादि । पूर्वमेव भावितार्था ॥३४४०॥

**इच्छति अवि उज्जुसुतो किरियं पि स तेण तस्स काअे वि ।**
**इच्छन्ति ण सद्दणया णियमातो तेसि जीवम्मि ॥३४४१॥ ॥दारं ।**

**इच्छति अवि उज्जुसुतो** इत्यादि । ज्ञानं मुक्त्वा ऋजुसूत्रः क्रियामपि नमस्कारमिच्छति । तेन तस्य नयस्य नमस्कारः कायेऽप्यचेतने भवति, न केवलं जीवे । शब्दनयास्तु ज्ञानमेवैकं नमस्कारः, न क्रिया, न शब्द इति ब्रुवते । तस्मात् तेषां नियमत एव जीवे नमस्कारो नाजीव इति ॥३४४१॥कस्मिन् ? इति द्वारं गतम् ।

अथ कियच्चिरमसौ भवति ? इति स्थितिरुच्यते—

**उवओग पडुच्चंऽतोमुहुत्तलद्धी[5] जहंण्णयं[6] चेवं[7] ।**
**उक्कोसं[8] छासट्ठिं[9] सागरं[10] अरिहाति पंचविधो ॥६५१॥३४४२॥**

**उपओग पडुच्चंऽतोमुहुत्त॰** इत्यादि । उपयोगं प्रतीत्यान्तर्मुहूर्तं तिष्ठति जघन्यतः, उत्कर्षतश्च । लब्धिं प्रतीत्य जघन्यतोऽन्तर्मुहूर्तमेव, उत्कर्षतः षट्षष्टिः सागरोपमाणि स्थितिरित्युक्तम् गाथापर्यन्तखण्डे ॥३४४२॥

'कतिविधो' [३३९१] ? इति द्वारप्रतिनिर्देशः—**'अरिहाति पंचविहो'** । तस्य भाष्यगाथा—

**सो कतिविधो त्ति भणिते पंचविधो, भणति णणु पुराऽभिहितं ।**
**एक्कं णमोभिधाणं केण [11]विसेसेण पंचविधं ॥३४४३॥**

१ चेइ य हे, चेइ को । २ सद्दाईण को । ३ °या वि को हे त । ४ °ज्झं पि ५ °द्धीए ठ हे, °द्धीइ दी हा म त । ६ होइ हे, होइ उ दी हा म त । ७ जहन्ना हे, जहणो दी हा म त । ८ °सहिया हे त, °सट्ठिइं दी म, °सट्ठिइ हा । ९ छावट्ठी को, °वट्ठि हे दी म त । १० °राइं जे. °रा हे दी हा । ११ विहाणेण को हे त ।

**सो कतिविहो त्ति भणिते** । कतिविधो नमस्कारः ? इति पृष्टे प्रतिवचनम्—पञ्चविध इति । ननु च पुरा पूर्वमभिहितम्—'एकं नमोऽभिधानम्' [३३९८]इति एको नमस्कार केन पुनर्विशेषेण पञ्चविधो भण्यते ? ॥३४४३॥

**एक्कं णमोभिधाणं तदरुहदादिपदसण्णिवातातो ।**
**जायति पंचविकप्पं पंचविधत्थोवयोगातो ॥३४४४॥**

**एक्कं णमोभिधाणं** इत्यादि । एकं नम इत्यभिधानं संग्रहनयादेको नमस्कारः, तदेवैकमभिधानमर्हत्-सिद्धाचार्योपाध्यायसर्वसाधुपदसन्निपातान्नानात्वमिव प्रतीयमानं पञ्चविकल्पं भवति, पञ्चविधार्थसम्बन्धात् ॥३४४४॥

**अधवऽण्णपतादिणिवातणाहि णेवातियं च ताइं च ।**
**पंचरुहंतातीणं पताइं तं णिवतते जेसु ॥३४४५॥**

**अधवऽण्णपतादिणिवातणाही**त्यादि । अथवा अन्येषां पदानामादौ निपातनान्नैपातिकमेतदित्यन्वर्थत्वात् तावद्भेदमेतत् । तानि वा अर्हदादीनि पञ्च पदानीति पञ्चनमस्कारः, केवलस्य निपातस्याप्रयोगादिति ॥३४४५॥

**अधवा णेवातियपदंपदत्थ[२२६–द्वि०]मेत्ताभिधाणतो पुव्वं ।**
**इधमरुहतादिपंचविधपदपतत्थोवदेसणतो ॥३४४६॥**

**अधवा णेवातिय०** इत्यादि । अथवा पूर्वं प्ररूपणायां पदं पदार्थश्च नैपातिकपदविषय उक्तः । इदानीं प्ररूपणाद्वारे '**कइविध**' प्रश्ने पञ्चविधो नमस्कार इति पञ्चविधार्हदादिपदार्थोपदर्शनमनेन क्रियते ॥३४४६॥

**णणु वत्थुम्मि पदत्थो ण जतो तच्चकधणं तहिं जुत्तं ।**
**तधवि पदत्थं तत्थेव लाघवत्थं पवोच्छिहिति ॥३४४७॥**

**णणु वत्थुम्मि** इत्यादि । ननूत्तरत्र वस्तुनिरूपणायां पदार्थो निरूपयिष्यते तथा च पुनरुक्तदोष इति । उच्यते, न तत्र पदार्थकथनम् । तत्र हि प्राग्निरूपितपदार्थस्य तत्त्वकथनम्, इह पदार्थ इति । तथापि तदेवं 'गुरुः प्रक्रमः' इति परिभाव्य ग्रन्थलाघवनिमित्तमिममेव पदार्थं तत्र संचार्य तत्त्वकथनं वक्ष्यत इति न पुनरुक्तदोषः ॥३४४७॥ कतिविधः ? इति द्वारं निरूपितम् ।

---

१ °यन्ति ता° को । २ पंचारु° को त, पञ्चारु° हे । ३ °हयाईणि को हे त । ४ °पयं प° त । ५ °णया को हे त ।

तथा च षड्‌पदप्रब्रूपगा व्याख्याता । तदनन्तरं नवपदा प्ररूपणा भण्यत इति—

संतपतपरूवणता दव्वपमाणं च खेत्तफुसणा य ।
कालो य अंतरं भाग भाव अप्पावहुं चेव ॥६५२॥३४४८॥ दारगाथा ॥
संतपदं पडिवण्णे पडिवज्जंते य मग्गणा गतीसु ।
इन्दिय काए जोगे वेदे य कसाय लेस्साय ॥६५३॥३४४९॥
सम्मत्त णाण दंसण संजमेउवयोगतो य आहारे ।
भासग परित्त पज्जत्त सुहुमे सण्णी य भव चरिमे ॥६५४॥३४५०॥
पलित असंखेज्जतिमो पडिवण्णो होज्ज खेत्तलोगस्स ।
सत्तसु चोद्दसभाएसु होज्ज फुसणा वि एमेव ॥६५५॥३४५१॥ दारं ॥
एक्कं पडुच्च हेट्ठा जंधेव णाणा जियाण सव्वद्धा । दारं ।
अंतर पडुच्च एगं जहण्णमन्तोमुहुत्तं तु ॥६५६॥३४५२॥
उक्कोसेणंतकालं अद्धापरियट्टगं च देसूणं ।
णाणाजीवे णत्थि तु भावे य भवे खयोवसमे ॥६५७॥३४५३॥ दारं ॥
जीवाणऽणंत[२२७-प्र०]भागो पडिवण्णो सेसगा अणंतगुणा । दारं ।
वत्थुं तऽरहंतातो पंच भवे तेसिमे हेतू ॥६५८॥३४५४॥

संतप० इत्यादि सूत्रम् । तस्य निर्युक्तिगाथाः–संतपदं पडिवण्णे० । सम्मत्त णाण । पलित असंखेज्जतिमो । एक्कं पडुच्च हेट्ठा । उक्कोसणंतकालं । जीवाणणंतभागो पडिवण्णो सेसगा अणंतगुणा । एवं नवपदप्ररूपणेति द्वारम्, पश्चार्द्धेन वस्तुनिरूपणा–वत्थुं तऽरहंतातो पंच भवे तेसिमे हेतू ॥३४४८–५४॥

अथ नवपदप्ररूपणायाः क्रमेण व्याख्यानमिति । तदतिदेशेन सिद्धं नन्दीव्याख्यानवदनुगन्तव्यमिति अनन्तरगाथया निर्दिश्यते । इदं तावत् सत्पदप्ररूपणां प्रति गत्यादिमार्गणतो विकल्पान्तरं दर्श्यते—

अधवोसप्पुस्सप्पिणिकालो णियतो य तव्विसिट्ठो अ ।
कत्थत्थि णमोक्कारो ण व त्ति णेयं जधासुत्तं ॥३४५५॥

अधवोसप्पुस्सप्पिणीत्यादि । अथवेयं सत्पदगवेषणा अवसर्पिण्युत्सर्पिणीभ्यां

१ °जय° हे त दी हा म । २ °मे दी हा । ३ त° दी हां म । ४ °सेणं चेयं अ° दी हा म । ५ अवइठप° को त । ६ °हुओ दी हा म । ७ °मो को हे दी हा म । ८ °काला जे । ९ तत्थ को हे त ।

षट्समाभेदाभ्यां नियतकालस्य प्ररूपणा, तद्विशिष्टस्य च तत्प्रतिभागस्यावस्थितरूपस्य च सर्वदा अनवसर्पिण्युत्सर्पिणीरूपस्य लोकेऽस्मिन् सम्भवः । तत्र बहुभेदे काले 'क्वास्ति नमस्कारः' ? 'क्व वा नास्ति' ? सूत्रानुसारेण मार्गणा सत्पदप्ररूपणा ॥३४५५॥

अथवा सर्वमपि—

**मति-सुतणाणं णवधा णंदीए जध परूवितं पुव्वं ।**
**तध चेअ णमोक्कारो सो वि सुतऽब्भंतरो जम्हा ॥३४५६॥**

**मति-सुतणाणं णवधा** इत्यतिदेशगाथा लाघवार्थमुक्ता । अथवा षट्पदा नवपदा वा प्ररूपणा बहुषु स्थानान्तरेषु प्रसिद्धा ॥३४५६॥

इयमन्याऽपि प्रदेशान्तरे पञ्चविधा प्ररूपणेति प्रख्यापयन्नाह—

**आरो[2]वणा य भयणा [3]पुच्छण तह दायणा य णिज्जवणा ।**
**[5]एसा वा पंचविधा परूवणाऽऽरोवणा तत्थ ॥३४५७॥**

**आरोवणा** इत्यादि ॥३४५७॥

तत्र आरोपणा—

**किं जीवो होज्ज णमो ? णमो व जीवो ? त्ति जं परोप्परतो ।**
**अज्झारोवणमेसो पज्जणुयोगो मताऽऽरूवणा ॥३४५८॥ दारं ॥**

**किं जीवो होज्ज** इत्यादि । किं जीव एव नमस्कारो भवेत् ? आहोस्वित् नमस्कार एव जीवः ? इत्येवं परस्परावधारणादध्यारोप आरोपणा–पर्यनुयोग इत्यर्थः ॥३४५८॥

एतस्य पर्यनुयोगस्य प्रतिवचनं प्रतिनिर्देशो भजना—

**जीवो णमोऽणमो वा णमो तु णियमेण जीव इति भयणा ।**
**जध चूतो होति दुमो दुमो तु चूतो अचूतो वा ॥३४५९॥**

**जीवो णमोऽणमो वा** इत्यादि । जीव एव नम इति उत्तरपदावधारणम् अजीवाद् व्यवच्छिद्य जीव एव नमोऽवधार्यते । जीवस्त्वनवधारितः नमो वा स्यादनमो वा,

१ "अथ 'च'शब्दाक्षिप्तां प्ररूपणाम् अभिधित्सुराह निर्युक्तिकारः" इति निर्दिश्य श्रीकोट्याचार्यैः स्ववृत्तौ (पृ०८२५) इमां गाथां निर्युक्तिगतां मन्यते । प्रस्तुतवृत्तिकारः कोट्टार्यो न तथा मन्यते । २ °यणा जे । ३ पुच्छा को हा हे दी । ४ दाव° म । ५ नमुक्कारऽनमुक्कारे, नोआइजुए व नवहा वा ॥ दी हा म ।

अनन्तपर्यायत्वात् । एषा एकपदव्यभिचाराद् भजना सामान्यविशेषप्ररूपितत्वात् चूतद्रु-माभिधानवत् । यथा चूतो नियमाद् द्रुमस्ततश्चावधारणमेवम्–'द्रुम एव चूतः' इति । द्रुमस्त्वनवधारितः–चूतो वा स्यादचूतो वा खदिरादिः ॥३४५९॥

एवं तर्हि तृतीया प्ररूपणा अवतरति प्रश्नो नाम—

**तो जति सव्वो जीवो ण णमोक्कारो ततो मता पुच्छा ।**
**सो होज्ज किंविसिट्ठो को वा जीवो णमोक्कारो ॥३४६०॥ दारं ।**

**तो जति सव्वो** इत्यादि । तत एवं भजनां प्राप्य जीवस्य नमस्कारानम-स्कारयोर्व्यापित्वाद् व्यभिचारे युज्यते प्रश्नः–किंविशिष्टो जीवो नमस्कारः ? किंविशिष्ट-श्चानमस्कारः ? इति । अस्याः प्रश्नप्ररूपणायाः प्रतिव्याकरणं चतुर्थप्ररूपणा भवति–दायना, दर्शना, दापना वा । 'दय दान-गति-रक्षणेषु' गत्यर्थत्वात् ज्ञानार्थः इति ण्यन्तस्य दायना । 'दृशिर् प्रेक्षणे' वा, तस्यापि ण्यन्तस्यैव दर्शना प्ररूपणेत्यर्थः, 'डुदाञ् दाने' वा तस्य [ण्यन्तस्य] दापना बुद्धिदानप्रचोदना–बुद्धिं ददतिं प्रयो-जयति या सा दापना ॥३४६०॥

**अध दायणा णमोक्कारपरिणतो जो तओ णमोक्कारो ॥ दारं ।**
**णिज्जवणा सो च्चिय जो सो जी[२२७-द्वि०]वो णमोक्कारो ॥३४६१॥**
**दारं ।**

**अध दायणा णमोक्कारपरिणतो** इत्यादि । नमस्कारपरिणतो जीवो नम इत्युच्यते । नमस्कारादनन्यभावपरिणतो जीवः अनन्य इत्युच्यते । अस्या दापनाया इयं निर्यापणा–निश्चयगमननिष्ठा–एष एव नमःपर्यायपरिणतो जीवो नमः, नम एव पर्यायोऽपि जीव[ः], पर्याय-पर्यायिणोरभेदप्रदर्शनं निर्यापणा ॥३४६१॥

**दायण-णिज्जवणाणं को भेतो दायणा तदत्थस्स ।**
**वक्खाणं णिज्जवणा पच्चब्भासो णिगमणं ति ॥३४६२॥**

**दायण-णिज्जवणाणं को भेतो** इत्यादि । एकं वस्तु दापना-निर्यापणे, एकार्था-भिधायित्वात् इन्द्र-शक्रवत् । उच्यते, दापना प्रश्नार्थव्याख्यानम्, निर्यापणा तस्यैव हेतुपरामर्शात् प्रत्याभ्यासो निगमनं तच्छुद्धयुक्तिः । प्ररूपणेति अवयवसांगत्यख्यापनम् । ततश्चैकार्थाभिधायित्वमसिद्धो हेतुरिति–'नान्यैव(न्ये एव) दापना-निर्यापने' ॥३४६२॥

स चायं सोपपत्तिकः प्रत्याभ्यासः—

---

१ तो हे । २ °वणयाए त । ३ °यणा° त ।

**तप्परिणत एव जधा जीवो[1]ऽत्रधितोऽधवा तधा भुञ्जो ।**
**तप्परिणतो स एव हि णिज्जवणाए मतोऽणण्णो ॥३४६३॥**

**तप्परिणत एव जधा।** तथोपपत्त्या तत्परिणतो जीव एव नाजीव इति अनन्यत्वप्रद[र्श]नं द्रव्य-पर्याययोरिति निर्यापणा पूर्वस्मादर्थप्रदर्शनाद् भिद्यते ॥३४६३॥

अथवा अन्यथा निर्यापना[2], वस्तूनां चतुर्द्धा च(प्र)विभागात् । नमोविषयस्य प्रकृत्यादिचतुष्टयस्य कः कथमिति ? तद्यथा—

**पयतीय अगारेण य णोकारोभयणिसेधतो आँवि[3] ।**
**इह चिंतिज्जति भुञ्जो को होज्ज तओ णमोक्कारो ॥३४६४॥**

**पयतीय अगारेण** इत्यादि । प्रकृतिः स्वभावः शुद्धता ना(न)म इति । स एव नञा सम्बन्धात् अकारेण सह [अ]नमः । तथा स एव 'नो'शब्दोपपदः देश-सर्वप्रतिषेधत्वात् नोनमः । स एव उभयनिषेधसमाश्रयात् नोअनमः । इति चतुष्टयमेतत्, अन्यस्य पञ्चमस्याभावात् । तत्र यथाक्रमेण निश्चयगमनं निर्यापना ॥३४६४॥

**पयइ त्ति णमोक्कारो जीवो तप्परिणतो स चाभिहितो ।**
**अणमोक्कारो परिणतिरहितो तल्लद्धिरहितो वा ॥३४६५॥**

**पयइ त्ति णमोक्कारो** इत्यादि । प्रकृतिरिति नमः । स च जीवस्तत्परिणत इति भावितमेव, उपयोगानन्यत्वात् । अनम इति तत्प्रतिषेधात् तत्परिणतिरहितो जीवः तल्लब्धिरहितो वा ॥३४६५॥

**णोपुव्वो तप्परिणँतिदेसो[4] देसपडिसेधपक्खम्मि ।**
**पुणरणमोक्कारो च्चिय सो सव्वणिसेधपक्खम्मि ॥३४६६॥**

**णोपुव्वो ।** 'नो'शब्दः पूर्वमस्योपपदमिति नोपूर्वः—'नोनमः' इति देशनिषेधपक्षे तत्परिणतजीवदेशो नोनम उच्यते । स एव सर्वनिषेधपक्षे नोशब्दस्य नञा तुल्यार्थत्वात् नोनमः अनम एव—तत्परिणामरहितजीव इत्यर्थः ॥३४६६॥

**णोअणमोक्कारो पुण दुणिसेधप्पयतिगमगभावातो ।**
**होति णमोक्कारो च्चिय देसणिसेधम्मि तद्देसो ॥३४६७॥**

**णोअणमोक्कारो पुण ।** 'नोअनमः' इति 'नो'शब्दो देशनिषेधे सर्वनिषेधे वा स्यात् । यदि सर्वनिषेधे ततो "द्वौ प्रतिषेधावेकत्र निपतितौ प्रकृतिमाहतुः" [ ]

१ °वो अवहिओ वा हे । अवधितो—"अवधूतः—हे० पृ० ११५२ गा० २९३३।
२ "णेर्वा" २।३।८८। इत्यनेन सिद्धहेमव्याकरणसूत्रेण विकल्पेन 'ण'विधानात् निर्यापना।
३ वावि को हे त । ४ °णय° को हे त ।

इति नोअनमो—नम एवेत्यर्थः। स च तन्परिगत इत्युक्तम्। देशप्रतिषेधके नोअनमस्कार-पर्यायलब्धिरहितस्य जीवस्य देशः प्रदेशो वा ॥३४६७॥

अस्मिंश्चतुष्टये किं परमार्थरूपम्? किमौपचारिकम्? इति तद्विवेकार्था गाथा—

**उवयारदेसणातो देसपदेसे त्ति णो णमोकारो ।**
**णोअणमोकारो वा पयतिणिसे[२२८-प्र०]धा तु सब्भूयां ॥३४६८॥**

**उवयारदेसणातो**। देश प्रदेशानां तद्द्रव्यव्यपदेशः औपचारिक इति देश-प्रतिषेधविषयौ द्वौ भङ्गौ—नोनमस्कारः, नोअनमस्कारो वा—औपचारिकौ। प्रकृति-निषेधौ तु सद्भूतौ—प्रकृतिर्नमस्कार इति, सर्वनिषेधस्तु अनमस्कारः। एतौ भङ्गौ परमार्थतः सद्भूतौ। 'तु'शब्दो विशेषणार्थः एतद् विशेषयति। नोशब्दप्रयोगेऽपि सर्व-निषेधे परमार्थरूपमेव, नौपचारिकम्—यथा—अनमस्कार इति। "द्वौ प्रतिषेधौ प्रकृतिं गमयतः [ ]" मनमस्कार इति परमार्थः, नोनमस्कार इति च अनमस्कार इत्यर्थः। सोऽपि निषेधत्वात् परमार्थः ॥३४६८॥

अत एव च नयमार्गणायां व्यञ्जननयस्य शब्दात्मकत्वाच्छुद्धस्य एतौ द्वावेव भङ्गौ प(पा)रमार्थिकौ नौपचारिकौ देशविषयाविति। अशुद्धनयानां च सर्वे भङ्गाश्चत्वारोऽपीति गाथा—

**सव्वो वि णमोकारो अणमोकारो य वंजणणयस्स ।**
**होतुं चतुरूवो वि हु सेसाणं सव्वभेता वि ॥३४६९॥**

**॥ परूवणे त्ति गतं दारं ॥**

**सव्वो वि णमोक्कारो** इत्यादि। सर्वोऽपि भङ्गराशिश्चतूरूपोऽपि भूत्वा व्यञ्जननयस्य द्वयोरेवेति पतति प्रकृति-निषेधयोः एतदङ्गत्वादितरयोः। शेषाणामशुद्धानां सर्वेऽपि भङ्गा इति ॥३४६९॥

अथ **वत्थुं तरहंताती पंच भवे**[३४५४]इत्यस्य सूत्र[स्य] भाष्यम्—

**वत्थुं अरुहा पुज्जा जोग्गा के जे णमोऽभिधाणस्स ।**
**संति गुणरासयो ते पंचारुहतादिजातीया ॥३४७०॥**

**वत्थुं अरुहा** इत्यादि। वस्तु दलिकं योग्यमर्हमिति पर्यायाः। किमस्य नम-स्कारस्य वस्तु योग्यमर्हं पूज्यदलिकम्? इति पृष्टे अर्हदादिजातितः पञ्चप्रकारम्। यैर्गुणैस्ते योग्यास्तेषां गुणानां ते राशयः समूहाः सन्ति वक्ष्यमाणाः ॥३४७०॥

---

१ सो को। २ तां जे को। ३ अत्र कोट्याचार्यः "अथ इदानीम् सांन्यासिकम्" इति निर्दिश्य तदनन्तरम् इमां ३४७०तमां गाथां व्याख्यानि। 'अथ यदुक्तम्—"वत्थुं" इत्या-दिर्गाथा [अत्र ३४५४] इति। तदेतत् प्ररूपणायाम् असमर्थितायाम् अन्तराले प्राग् उपन्यस्तत्वात् सांन्यासिकं कृतमासीत्। तत्र इदानीं प्ररूपणायाः समर्थितत्वाद् यथावसरायातम् वस्तुद्वारम्"— हे० बृ० पृ० ११५६ गा० २९४०।

अथवा—

भेतोवयारतो वा वसंति णाणादयो गुणा जत्थ ।
तं वत्थुमसाधारणगुणालयो पंचजातीयं ॥३४७१॥

**भेतोवयारतो वा** इत्यादि। गुण-गुणिभेदं कृत्वा—परस्परोपचारं कृत्वा—व्युत्पत्तिः क्रियते—वसन्त्यस्मिन् गुणा इति औणादिकः(के) वसः 'अस्तुन्'प्रत्यये वस्तु, तच्च अर्हदादि ॥३४७१॥

आदिग्रहणसूचितानि निर्दिश्यते(न्ते)—

ते[1] अरहंता [2]सिद्धा आयरिओज्झायसाधवो णेया ।
जे गुणमयभावातो गुण व्व पुज्जा गुणत्थीणं ॥३४७२॥

**ते अरहंता** इत्यादि। एते अर्हत्सिद्धाचार्योपाध्यायसाधवः पूज्याः, ज्ञानादिगुणात्मकत्वात्, ज्ञानादिगुणा इव ॥३४७२॥

मोक्खत्थिणो व्व[3] जं मोक्खहेतवो दंसणातितिदंयं[4] वे ।
तो तेऽभिवन्दणिज्जा जति व मती हेतवो किध ते ? ॥३४७३॥

**मोक्खत्थिणो व्व** इत्यादि। मोक्षार्थिनो वा पुरुषस्य तेऽभिवन्दनीयाः, मोक्षहेतुत्वात्, सम्यग्दर्शन-ज्ञान-चारित्रत्रयवत् ॥३४७३॥

यदि वा आशङ्का—कथमेते मोक्षहेतवः ? इत्यसिद्धत्वं मन्येथाः तत्प्रसाधनार्थमिदम्—

मग्गे[6] अविप्पणासो आयारे विणयता सहायत्तं ।
पंचविधणमोक्कारं करेमि एतेहिं हेतूहिं ॥६५९॥३४७४॥ दारगाधा ।
मग्गोवदेसणातो अरहंता हेतवो हि मोक्खस्स ।
तब्भावे भावातो तदभावेऽभावतो तस्स ॥३४७५॥

**मग्गे अविप्पणासो आयारे विणयता सहायत्तं।** मोक्षहेतुरर्हन्, मार्गहेतुत्वात्, मार्गात्मकत्वात्, दर्शनादित्रयवत्। मार्गहेतुरर्हन्, मार्गोपदेशकत्वात्, तद्भावे मोक्षसद्भावात्, श्रुतज्ञानवत्। एवंप्रकाराणि यथाक्रमेण पञ्चभिरमीभिहतुभिः पञ्च प्रमाणानि—तद्यथा—मोक्षहेतुः सिद्धाः, अविप्रणाशात्मकत्वात्, दर्शनादित्रयवत्। तथा मोक्षहेतु[राचार्याः, आचा]रात्मकत्वात् आचारप्रख्यापनाद् दर्शनादिवत्। तथा मोक्ष-

१ तं को मूलमुद्रणे पृ० ८२८। २ °य सिं° हे। ३ व को हे। ४ तिदंयं-त्रितयम्। °तियगं त। ५ च जे को त। ६ °ग्गो को हे म।

हेतुरुपाध्यायाः, विनयात्मकत्वात्, विनयमूलत्वात् दर्शनादिवत्। तथा मोक्षहेतुः साधवः, तत्क्रियायां सहायत्वात्, दर्शनादिवत्। सर्वेषु च पञ्चस्वपि साधनेषु **धनसार्थवाहो** दृष्टान्तः, निर्वाणपुरगमनार्थोपनयनात् ॥३४७४–७५॥

अथ क्रमेण विचारः क्रियते—

**मग्गो च्चिय सिवहेतू जुत्तो तद्धेतवो कधं जुत्ता?।**
**तदधीणत्तणतोऽधव कार[२२८-द्वि०]णकज्जोवयारातो ॥३४७६॥**

**मग्गो च्चिय** इत्यादि। आह–दर्शनादित्रयं दृष्टान्तो मोक्षस्य मार्गः, न मार्गहेतुः, तस्मात् साधनधर्मविकलता दृष्टान्तस्य। यश्च मार्गः स एव शिवहेतुयुक्तो न तद्धेतव इति न मोक्षहेतवोऽर्हदादयः, मार्गहेतुत्वात्, चैत्यायतनकरण–साधुसम्पर्क–पुस्तक–प्रासुकभिक्षादिवत्। उच्यते, तदधीनत्वात् कारणे कार्योपचारात् तदुपकारित्वात् चैत्यायतनकरणाद्यपि मोक्षहेतुरेवेति [न] साध्यधर्मविकलो दृष्टान्तः। धर्मस्वरूपविपरीतसाधनो वा [न] विरुद्धः। मोक्षहेतव एवार्हदादयः, पारम्पर्येणोपकारित्वात् दर्शन-ज्ञानवत्, मार्गहेतुत्वाद्वा चैत्यायतनादिवत् ॥३४७६॥

आह––

**मग्गोवकारिणो जति पुज्जा गिहिणो वि तो तदुवकारी।**
**तस्साधणदाणातो सव्वं पुज्जं परंपरता ॥३४७७॥**

**मग्गोवकारिणो जति** इत्यादि। एवं तर्ह्यनैकान्तिकत्वं हेतोः–गृहिणो मोक्षहेतवो न भवन्ति, अथ च तत्रापि मार्गोपकारित्वं दृष्टमिति। मार्गोपकारित्वं च गृहिणां तत्साधनप्रदानात्। तथा च सर्वमपि त्रैलोक्यं पारम्पर्येण मोक्षमार्गोपकारि इति सर्वस्यापि मोक्षहेतुत्वे संसारकारणस्यापीत्यनिष्टापादनम् ॥३४७७॥

अत्रोच्यते—

**जं पच्चासण्णतरं कारणमेगंतियं च णाणाति[२]।**
**मग्गो तद्दातारो सयं च मग्गो त्ति तो[३] पुज्जा ॥३४७८॥**

**जं पच्चासण्णतरं** इत्यादि। इह हि कार्य-कारणसम्बन्धे प्रत्यासन्नतरमेव कारणं भवति नातिविप्रकृष्टमिति लोकप्रसिद्धेः प्रत्यासन्नतरत्वादेकान्तिकत्वाच्च ज्ञानादीनि मोक्षमार्गः, तेषां च ज्ञानादीनां दातार उपदेष्टारः स्वयं च, ज्ञानादिवदिति ॥३४७८॥

---

१ जुत्तो जे। २ °इ को हे। ३ ते को हे त।

**भत्तीति बेज्झतरओ हेतू ण य णियमतो सिवस्सेयं ।**
**तद्दातारो गिहिणो सयं ण मग्गो त्ति य णं पुज्जा ॥३४७९॥ दारं।**

**भत्ताति बज्झतरओ हेतू** इत्यादि । भक्त-शयनासनादिः बाह्यतरो हेतुः । न चावश्यमसौ मोक्षस्यैव हेतुः, किं तर्हि ? संसारस्यापि । तस्मात् तस्य भक्तादेर्दातारो गृहस्थाः मार्गहेतवो न भवन्ति । न च स्वयं मार्गः, विप्रकृष्टकारणत्वात्, अनैकान्तिकत्वाच्च, भक्त-वस्त्रादिवत् । ततो न पूज्याः गृहस्थाः, मोक्षमार्ग(र्गा)हेतुत्वात्, स्वयं च अमार्गत्वात् अभव्यवत् ॥३४७९॥

अथ द्वितीयो हेतुः 'अविप्रणाशः' इति तत्प्ररूपणा—

**मग्गेणाणेण सिवं पत्ता सिद्धा जमप्पणासेण ।**
**तेण कतत्थत्तणतो ते पुज्जा गुणमया जं च ॥३४८०॥**

**मग्गेणाणेण सिवं** इत्यादि । पूज्याः सिद्धाः, मार्गाऽविप्रणाशख्यापकत्वात्, सम्यग्दर्शनवत्, घनसार्थवाहवत् । गुणमयत्वाद्वा दर्शनादिवदिति ॥३४८०॥

**गुणपूयामेत्तातो फलं ति तप्पूअणं पवज्जामो ।**
**जं पुण जिण व्व मग्गोवकारिणो ते तयं कत्तो ॥३४८१॥**

**गुणपूयामेत्तातो फलं** इत्यादि । 'गुणमयत्वात्' इत्यादि युक्तमुच्यते, गुणपूजातस्तत्फलमिति कृत्वा । मार्गोपकारित्वमविप्रणाशेन ते ख्यापयन्तीति कुतस्त्यमेतत् ? तस्मादसिद्धोऽयं सिद्धेषु धर्मिषु ॥३४८१॥

**जति तग्गुणपूयातो फलं पवण्णं णणूवकारो सो ।**
**तेहिंतो तदभावे का पूया कं फलं वा से ॥३४८२॥**

**जति तग्गुणपूयातो** इत्यादि । अविप्रणाशेन मार्गोपकारिणः सिद्धाः, तद्गुणपूजाफलसम्बन्धित्वात्, अर्हन्त इव तद्गुणपूजातः फलमभ्युपेतं चोदकेनेत्युभयसिद्धो हेतुः । स एव च गुणपूजाफलसम्बन्धस्तेभ्यः सिद्धेभ्यः सिध्यति, 'तदभावे' सिद्धानामभावे कस्य गुणाः, कस्य वा पूजा, किं वा तस्याः फलम् ? इति सिद्धस्तद्भावोऽभ्युपगन्तव्यः ॥३४८२॥

**गंतुरणासातो वा सम्मग्गोऽयं जंधिच्छितपुरस्स ।**
**सिद्धो सिद्धेहिंतो तदभावे पच्चयो कत्तो ॥३४८३॥**

१ °ताई° हे त, २ °ज्झतरो हे° त हे । ३ °व को हे । ४ त्ति णो पु° को हे । ५ स्वर्गमा° इति प्रतौ । ६ °मविप्प° को हे । ७ कि को हे त । ८ जहच्छि° त ।

गंतुरणासातो वा इत्यादि । दर्शन-ज्ञान-चारित्रकलापः सन्मार्गोऽयम्—तेन गन्तॄणामप्रत्यवायात्मकत्वात्—अभीष्टपुरगामी, धनसार्थवाहप्रहतनिष्प्रत्यवायर्जुमार्गवत् । सिद्धाभावे तत्प्रत्ययाभाव एवेति ॥३४८३॥

**मग्गम्मि रुयी तदविप्पणासतो तप्फलोवलंभातो ।**
**जं जायति तेहिंतो णेतरधा तदुवकारो सो[1] ॥३४८४॥**

**मग्गम्मि रुयी** इत्यादि । भव्यानामयं रोचयिष्यते सन्मार्गः, अविप्रणष्टतद्गन्तृत्वात्, उपलभ्यमानतत्फलत्वात् सार्थिकपथिकरुचितधनसार्थवाहगृह(ही)तसन्मार्गवत् । स चोपकारः सिद्धेभ्यः सकाशात्, तेन यातानामनि(न)ष्टत्वात्, धनसार्थवाहादिवत् ॥३४८४॥

**[२२९-प्र०]णणु जिणवयणातो च्चिय तदत्थिणा तप्फलोवलंभो य ।**
**सच्चं तधावि तप्फलसब्भावातो रुयी होति ॥३४८५॥**

**णणु जिणवयणातो च्चिय** इत्यादि । नन्वेतत् सर्वं जिनवचनादेव—तन्मार्गास्तिता, तत्फलोपलब्धिः, सिद्धाः सन्तीति—जिनवचनादेव ज्ञायते तस्मात् त एव अर्हन्तः पूज्याः, सर्वोपकारित्वात्, दर्शनादिवत् । किमिति सिद्धाः परिकल्प्यन्ते? आचार्य आह-सत्यम्, सर्वमेव तद् अर्हद्वचनात्, तथापि तस्य मोक्षमार्गस्य फलं 'सिद्धाः सन्ति' इति तत्फल(लें)न प्ररोचना क्रियते इति तन्मात्रेणोपकारिणस्ते ॥३४८५॥

**अप्प च्चिय सिवमग्गो णिच्छयतो तध वि रुयिणिमित्तं तु ।**
**मग्गोवकारिणो जध जिणा तधा खीणसंसारा ॥३४८६॥ दारं।**
**अविप्पणासेत्ति गतं ।**

**अप्प च्चिय सिवमग्गो** इत्यादि । इह निश्चयनयस्य सर्वमात्मप्रतिष्ठम्[ष्ठम्] न बाह्यं वस्त्वस्तीति आत्मैव मोक्षमार्गः सम्यग्दर्शनादि । आत्मैव मोक्षः आत्मस्वरूपावस्थानात् । तथापि तु व्यवहारनयात् तन्मार्गरुचिनिमित्तं मार्गोपकारिणः मार्गश्च जिना एवार्हन्तः । एवं व्यवहारनयात् सिद्धा अपि क्षीणसंसाराः मार्गोपकारिणः मार्गो वा, मार्गरुचिनिमित्तत्वात्, अर्हद्वचनवत् ॥३४८६॥

**आयारदेसणातो पुज्जा परमोवकारिणो गुरवो । दारं ।**
**विणयातिगाहणातो[4] वज्झाया सुत्तदा जं च ॥३४८७॥ दारं ॥**

---

१ से हे । २ °या को हे त । ३ तह रुई सम्मत्तं हे त । ४ °णा वा उव° को हे त ।

आयारेत्यादि। आचार्याः गुरवः पूज्याः, आचारदेशकत्वात्, मार्गोपकारित्वात्, अर्हद्वत्। आचारमयत्वाद्वा दर्शनादिवत्। तथा उपाध्यायाः पूज्याः, ग्राहितविनयत्वात, सूत्रदत्वाच्च। विनयात्मकत्वाद्वा अर्हद्वत् ॥३४८७॥

**आयारविणयसाधणसाहज्जं साधवो जतो देन्ति।**
**तो पुज्जा तध पंच वि तग्गुणपूयाफलणिमित्तं ॥३४८८॥ दारं।**

आयारेत्यादि। एवं सर्वसाधवः पूज्याः, आचार-विनय-मोक्षसाधनसाहाय्यकदायित्वात्, अर्हदादिवत्। एवमेव सर्वेऽप्यर्हत्-सिद्धाचार्योपाध्यायसाधवः पूज्याः, तद्गुणपूज्याः(जा)फलनिमित्तत्वात्, दर्शनादित्रयवत् ॥३४८८॥

इदानीं भगवतामर्हतां स्थलपथे भव्यजीवान् मोक्षपुरं प्रापयतां संसाराटवीनिर्गमनदेशकत्वेन सार्थवाहोपमानता, वारिपथे च भव्यजीवान् मोक्षपुरमिष्टपत्तनं प्रापयतां संसारमहासमुद्रोत्तारणसम्यग्दर्शनादिवातप्रधाविताऽनास्रवजीवपोतप्रस्थापकनिर्यामकोपमानता च सुखबोधार्थं प्रदर्श्यते—

**अडवीय देसियत्तं तधेव णिज्जामया समुद्दम्मि।**
**छक्कायरक्खणट्ठा महगोवा तेण वुच्चन्ति ॥६६०॥३४८९॥**

**जध[2] णिव्वुतिपुरमग्गं पुरा धणो विविधपधियसत्थस्स।**
**देसे[3]ति वच्चमाणो दव्वातिविधाणं[4]सुविसुद्धं ॥३४९०॥**

**तध णिव्वुतिपुरमग्गो पुरा जिणिन्देहि भवियसत्थस्स।**
**उवदिट्ठो सुविसुद्धो णिव्वुतिपधदेसया [२२९-द्वि०]तो ते ॥३४९१[5]॥**

**जध सो देसितणिव्वुतिपुरमग्गो तं धणं पधियसत्थो।**
**चिरगतमप्पभिणंदति महोवकारि त्ति तध चेअ ॥३४९२॥**

---

१ ते हे। २ "अथ 'जध णिव्वुतिपुरमग्गं' इत्यादिका विस्तरार्थप्रतिपादनपराः सप्तदश गाथाः सुगमाः" इति नोद्धृताः हे प्रतौ। ३ दरिसे° को। ४ °णि सु° को। ५ इतो गाथापश्चात् अत्र निम्नाश्चतस्रो गाथाः 'संसाराडवीए' इत्यादिगाथातः पूर्वम् उपलभ्यन्ते दी हा म प्रतिषु –

अडविं सपच्चवायं, वोलित्ता देसिओवएसेणं। पावन्ति जहिट्ठपुरं, भवाडविं पी तहा जीवा॥
पावन्ति निव्वुइपुरं, जिणोवइट्ठेण चेव मग्गेणं। अडवीइ देसिअत्तं, एवं नेअं जिणिंदाणं॥
जह तमिह सत्थवाहं, नमइ जणो तं पुरं तु गंतुमणो। परमुवगारित्तणओ निव्विग्घत्थं च भत्तीए॥
अरिहो उ नमुक्कारस्स, भावओ खीणराग-मय-मोहो। मुक्खत्थीणं पि जिणो, तहेव जम्हा अओ अरिहा॥

संसाराडवीए मिच्छत्तऽण्णाणमोहितपथाए ।
जेहि कत देसियत्तं ते अरिहंते पणिवतामि ॥३४९३॥

जध चक्खुणा सुदिट्ठो विण्णाणेण य धणेण विण्णातो ।
गमणकिरियाहि पहतो महापधो सो तध इमो वि ॥३४९४॥

सम्मद्दंसणदिट्ठो णाणेहि य सुट्ठु तेहि विण्णातो ।
चरण-करणेणं पहओ णेव्वाणपधो जिणिन्देहिं ॥३४९५॥

णिव्वुतिपुरं समत्थो जह सत्थाहो गतो अविग्घेणं ।
पत्तो परं च मोक्खं तधा जिणिन्दा सपरिवारा ॥३४९६॥

सिद्धिवसधिं उवगता णेव्वाणमुहं च ते अणुप्पत्ता ।
सासतमव्वाबाहं पत्ता अयरामरं ठाणं ॥३४९७॥

जध चिरगतम्मि वि धणे तक्कतमग्गेण पधियसंघातो ।
टंकुक्खतऽक्खरागममणुसरमाणो पुरं पत्तो ॥३४९८॥

तध चिरगतेसु वि जिणेसु भवियस[२३०-प्र०]त्थोऽधुणा वि मग्गेणं ।
सुतणाणमणुसरंतो सिवपुरमचिरेण पाउणति ॥३४९९॥ दारं ॥

**अडवीय देसियत्तं** इत्यादि–नव(एकादश) गाथाः–यावत् **'सिवपुरमचिरेण पाउणति'**[३४९९] प्रायः स्फुटार्था इति । प्रमाणेनोपसंहारः–मिथ्यात्वाज्ञानमोहितः(त)-पथसंसाराटवीकान्तारविनिर्गमकुशलमहादेशि(श)काः भगवन्तोऽर्हन्तः सर्वेणापि निर्वृतिपुरसिद्धिवसतिकाङ्क्षिणा भव्यसार्थलोकेनाभिगमनीयाः, पूजनीयाश्च, बहुशः सम्यग्-दर्शनचक्षुःसमालोकितविशुद्धवैवत्र्बुद्धिविज्ञानात्यन्तनिरवद्यसर्वसत्त्वहितचरणप्रहताभय-प्रदानपटहावघोषणकृतसमाश्वासनिर्वृतिपुरयायिसत्पथप्रयातृभव्यजीवसार्थवाहत्वात्, स्व-यम(स्वयमेव) विहितामलचक्षुःसमालोकितौत्पत्तिक्यादिबुद्धिचतुष्टयविज्ञानमस्य[य]क्रिया-समीकृतविषमदुर्गगहनपरिकल्पितबहुतृणोदकसुखवासभक्तशयनीयादिसुविहितविधाननि-र्वृतिपुरकाङ्क्षिप्रा(प्रापि)तायनेकपथिकजनानुयाताऽकारणवत्सलधनसार्थवाहवत् । निर्वृ-तिपुरं चिरगतेष्वपि जिनसार्थवाहेषु भव्यसार्थोऽधुनाऽपि सुखमेव गच्छति, गमिष्यति च तत्कृतश्रुतज्ञानटङ्कोत्खाताक्षरचिह्नानुसारित्वात्, धनसार्थवाहकृतबहुचिह्नसुखाऽऽ-वासमार्गानुसारिसमुद्युक्तनिर्वृतिपुरगामिलोकवत् ॥३४८९–३४९९॥

१ तह सं° जे । २ देस° को ३ °याय को । ४ उवलद्धो दी हा म । ५ °णेहिं म । ६ सस° को । ७ सो° को मु० पृ० ८३२ ।

उद्धिम्मि कालियावातविरहिते गज्जैहाणुकूलम्मि ।
जध सुणिउणणिज्जामयपरिग्गहाऽणासवा पोता ॥३५००॥
पावंति पवरपट्टणमचिरेणेवं भवण्णवे भीमे ।
सुणिउणजिणणिज्जामयपरिग्गहाऽणासवद्दारा ॥३५०१॥
मिच्छत्तकालियावातरहितसम्मत्तगज्जंहपवाते ।
एगसमएण पत्ता सिद्धिवसधिपट्टणं पोता ॥३५०२॥
जध संजत्तियसत्थो पसिद्धणिज्जामयं चिरगतं पि ।
जत्तासिद्धिणिमित्तं पूजयति तधा जिणिन्दा वि ॥३५०३॥
णिज्जामयरतणाणं अमूढणाणमतिकण्णधाराणं ।
वंदामि विणयपणतो तिविधेण तिदंडविरताणं ॥३५०४॥ दारं ।

उद्धिम्मीत्यादिगाथाः पञ्च स्फुटार्थाः । प्रमाणं तु–संसारमहासमुद्रपतितजीवपोतस्स(तस)मुत्तारणकुशलमहानिर्यामका भगवन्तोऽर्हन्तः सर्वेणापीष्टप्रवरपट्टनकाङ्क्षिणा भव्यसांयात्रिकलोकेन समभिगमनीयाः, परिकल्पितयोग्योपकरणकृतानाश्र(स्र)वमिथ्यात्वकालिकावातचिरसम्यक्त्वगर्जभवातानुकूलाऽमूढज्ञानकर्णधारविज्ञानसमयमात्रसिद्धिप्राप्तिकुशलत्वात्, लोकप्रसिद्धमहासमुद्रोत्तरणसमर्थ(र्था)नाश्र(स्र)वपोतसमारूढ(ढाऽ)मूढमतिकर्णधारकालिकावातविरहितगर्जभानुकूलदिक्प्रधाविताभीष्टपट्टनकाङ्क्षिसांयात्रिकानुगतसुनिपुणमहानिर्यामकवत् । एवं महादेशि(श)का महानिर्यामकाश्चेति निरुक्ताः ॥३५००–३५०४॥

अथ महागोपाः कथम्? इति तदुच्यते—

पालन्ति जधा गावो गोवा सावतभयातिदुग्गेहि ।
पउरतणपाणियाणि य वणाणि पावेंति तध चेअ ॥३५०५॥

---

१ वि का° जे । २ °ज्झ° जे । ३ °रव° को । ४ °वायविरहिए स° को दी हा म । ५ "सम्यक्त्वमेव गर्जाभः प्रवातो यत्र"—म०वृ०गा० ८१३ पृ० ४९७ प्र० । "एत्थ य अट्ठ वाया–पाईणवाए, पतीणवा० उदोणवा० दाहिणवा० । जो उत्तरपुरत्थिमेणं सो सुत्तासुतो, दाहिणपुव्वेणं तुंगारो, दाहिणावरेणं बीयावो, अवरुत्तरेण गज्जहो ।...अन्ने विदिसासु अट्ठ चेव–उत्तरपुव्वेणं दोन्नि–उत्तरसुत्तासुतो पुरत्थिमसुत्तासुओ य । इयरीए वि दोण्णि–पुरत्थिमतुंगारो दाहिणतुंगारो य । तहा दाहिणवीयावो अवरबीयावो य, अवरगज्जहो उत्तरगज्जहो य । एते सोलस वाया"–कोटया० वृ० पृ० ८३५ गा० ३५२२ । ६ अत्र स्या गाथायाः अपूर्वम् निम्नदर्शिता गाथा दी हा म प्रतिषु उपलभ्यते–पार्विति जहा पारं सम्मं निज्जामया समुद्दस्स । भवजलहिस्स जिणिंदा, तहेव जम्हा अओ अरिहा ॥

७ °मय° म । ८ गोवो गावो को । ९ अहिंसावयाइदुग्गेहिं दी हा म को ।

जीवणिकाया गावो [२३०-द्वि०] जं ते पालेन्ति तो महागोवा ।
मरणादिभयाहि जिणा णेव्वाणवणं च पावेन्ति ॥३५०६॥ दारं ।

पालेन्ति जधा गावो इत्यादि । जीवणिकाया गावो इत्यादि । 'गम्लृ सृप्लृ गतौ' इति गन्तारः—अगच्छन्ति(गच्छन्ति इति) कर्त्तरि गमेर्न[गमेर्डो]प्रत्ययः इति गावः सूक्ष्म-स्थूलानेकन्दनयताऽनयानेक-विकलेन्द्रिय-संज्ञ्यसंज्ञिनः संसाराटवीगताः षड् जीवनिकायाः अत्यन्तदुष्परिपालास्ताः । एवंविधाः गाः पान्तीति गोपाः यथास्यातचारित्रिणः सर्वे, सर्वातिशयसम्पन्नास्तु महागोपाः । तीर्थकराः महागोपाः, सर्वथा सर्वदा सर्वतो मरणादिभयप्रणाशकत्वात्, एकान्तिकात्यन्तिकसुखपरमनिर्वृतिध(व)न प्रापितत्वाच्च, तथाविधलोकप्रसिद्धिवर्तिनमहागोपवत् ॥३५०५-६॥

अथ नमोर्हाः इति निर्वचनम्—

राग-दोसकसाए य इंदियाणि य पंच वि ।
परीसहे उवसग्गे णामयंता[2] णमोऽरिहा ॥६६१॥३५०७॥
[3]रंजंति तेण तम्मि व रंजणमधवा णिरूवितो रागो ।
णामातिचतुब्भेतो दव्वे कम्मेतरविभिण्णो ॥३५०८॥

राग-दोसकसाए इत्यादि । 'रञ्ज रागे' रज्यन्ते तेन तस्मिन् वा करणाधिकरणयोर्घञ्, रञ्जनं वा राग इति भावे घञ् । स च नामादिश्चतुर्भेदः । नाम-स्थापने सर्वत्र तुल्ये इति गम्यमानत्वान्नोक्ते । द्रव्यं द्विविधम्–आगमतः नोआगमतश्च । आगमतो रागपदार्थज्ञोऽनुपयुक्तः । नोआगमतः—ज्ञशरीर-भव्यशरीर-तद्व्यतिरिक्तो नोआगमतो द्रव्यराग इति । तत्र सूत्रं निपतितम्–'दव्वे कम्मेतरविभिण्णो' कर्मद्रव्यरागः, इतरो नोकर्मद्रव्यरागः ॥३५०७-८॥

तत्र कर्मद्रव्यरागश्चतुर्विधः । कर्मपुद्गला रागवेदनीयविषयाः भावकषायवेदनीयस्य भावरागस्य कारणभूतास्तद्यथा—

जोग्गा, बद्धा, बज्झंतगा य, पत्ता उदीरणावलियं ।
अह कम्मदव्वरागो चतुव्विधा पोग्गला होन्ति ॥३५०९॥

जोग्गा, बद्धा, बज्झंतगा य, पत्ता उदीरणावलियं इत्यादि । बन्धपरिणामाभिमुखा योग्याः, बन्धपरिणामं प्राप्ता बध्यमानकाः, निर्वृत्तबन्धपरिणामाः सत्कर्म-

---

१ अत्र अस्या गाथाया अनन्तरम् एषा गाथा–
तो उवगारित्तणओ नमोऽरिहा भविअजीवलोगस्स । सव्वस्सेह जिणिंदा, लोगुत्तमभावओ तह य ॥ दी हा म । २ 'यन्तो म । ३ रज्जं को हे ।

तया स्थिताः बद्धा', जीवेनात्मसात्कृता उदीरणाकरणेनाऽऽकृष्य उदीरणावलिकां प्राप्ता यावदुदयं न यान्ति तावत् । एते चतुर्विधाः पुद्गलाः कर्मद्रव्यराग इत्युच्यते ॥३५०९॥

**णोकम्मदव्वरागो पओगतो सो कुसुंभरागादी ।**
**बितियो य वीससाए णेयो संज्झऽब्भरागाती ॥३५१०॥**

**णोकम्मदव्वरागो** इत्यादि । कर्मद्रव्यव्यतिरिक्तः तदेकदेशो वा नोकर्मद्रव्यरागः । स द्वेधा–प्रयोगतः, विस्रसा च–स्वभावत इत्यर्थः । तत्र प्रायोगिकः कुसुम्भरागादिः, वैस्रसिकः सन्ध्याभ्ररागादिर्जीवप्रयोगनिरपेक्षः । अथ भावगमः–आगमतो नोआगमतश्च । आगमतो रागपदार्थज्ञ उपयुक्तः । नोआगमतो भावरागः ॥३५१०॥

**जं रागवेतणिज्जं समुदिण्णं भावतो तओ रागो ।**
**सो दिट्ठि-विसय-णेहाणुरागरूवो अभिस्संगो ॥३५११॥**

**जं रागवेतणिज्जं** । रागवेदनीयं कर्म उदीर्णं भावरागः–स च त्रिप्रकारः–दृष्टिरागः, विषयरागः, स्नेहराग इति वा रागः अभिष्वङ्गः–गार्ध्यम् ॥३५११॥

तत्र यथासंख्येनोदाहरणानि—

**कुप्पवयणेसु पढमो बितियो सद्दातिएसु विसएसु ।**
**विसयादणिमित्तो वि हु सिणेहरागो सुतातीसु ॥३५१२॥ दारं ।**

**कुप्पवयणेसु पढमो** । दृष्टिर्दर्शनम्–मतमिति, तद्विषयः कुप्रवचनदृष्टिरागः । शब्दादिविषयेषु गार्ध्यम् । विषयाद्यऽनिमित्तं कारणरहितोऽप्यविनीतेष्वपि पुत्रादिषु रागः स्नेहरागः । 'रागः' इति निरुक्तम् ॥३५१२॥

अथ 'दोषः' निर्वचनम्—

**दुस्संति तेण तम्मि व दूसणमध देसणं व [2]देसो त्ति ।**
**[२३१–प्र०] देसो वे सो चतुद्धा दव्वे कम्मेतरविभिण्णो ॥३५१३॥**

**दुस्संति तेण** इत्यादि । 'दुष वैकृत्ये' दूष्यते तेन तस्मिन् वा दोषः, दूषणं चे(वे)ति भावसाधनः । 'द्विष अप्रीतौ' वा–द्विष्यते तेन तस्मिन् वा द्वेषः, द्वेषणं वा । सोऽयम्–दोषः [द्वेषः] इति वा नामादिश्चतुर्द्धा । पूर्ववच्च विस्तरः । संक्षेपेण–'दव्वे कम्मेतरविभिण्णो' ॥३५१३॥

**जोग्गा बद्धा बज्झंतया य पत्ता उदीरणावलियं ।**
**[3]इह कम्मदव्वदोसो इतरो दुट्ठव्वणातीयो ॥३५१४॥**

---

१ दो॰ जे । २ च हे । ३ इह त ।

जोग्गा बद्धा इत्यादि । पूर्ववद् भावना ॥३५१४॥

जं दोसवेदणिज्जं समुदिण्णं एस भावतो दोसो ।
वत्थुविकारनिस्सभावोऽणिच्छितमप्पीतिलिंगो वा ॥३५१५॥

जं दोसवेदणिज्जं इत्यादि । भावतो दोषः दोषकषायवेदनीयकर्मोदीर्णम् । 'दुष वैकृत्ये' इति वस्तुविकृतिस्वभावः । द्वेषो वा द्वेषवेदनीयकर्मोदीर्णम्–अनीप्सितम् अप्रीतिलिङ्गं वा ॥३५१५॥

एतौ राग-द्वेषौ द्वावपि कषायाश्चत्वारो व्यपदिश्यन्ते, तत्र नयमतमन्यद् अन्यत् नेदमिति तत्प्रदर्शनम्—

कोधं माणं चेऽप्पीतिजातितो [3]वेंति [4]संगहो दोसं ।
माया लोभे य सपीतिजातिसामण्णतो रागं ॥३५१६॥
मायं पि दोसमिच्छति ववहारो जं परोवघाताय ।
णायोवादाणे च्चिय मुच्छा लोभो त्ति तो रागं ॥३५१७॥

कोधं माणं चऽप्पीतिजातितो इत्यादि । 'द्विष अप्रीतौ' इति निरुक्तेर्द्वेषः अप्रीतिरुच्यते । ततः सङ्ग्रहनयः क्रोधं मानं च(चाऽ)प्रीतिजातिसामान्यसङ्ग्रहाद् 'दोषम्' इति ब्रवीति । माया-लोभौ च प्रीतिजातिसामान्याद् 'रागम्' इति । कषायत्रयमुक्त्वा लोभ एवावशिष्यते, तस्य रागसंज्ञा न्यायोपादानद्रव्यमूर्च्छात्मकत्वात् प्रीतिमध्यप्रक्षेपात् ।३५१६–१७॥

उज्जुसुतमतं कोधो दोसो सेसाण मयमणेगंतो ।
रागो त्ति व दोसो त्ति व परिणामवसेणं तु विसेसो ॥३५१८॥

उज्जुसुतमतं कोधो दोसो । ऋजुसूत्रस्य क्रोध एव केवलो दोषः द्वेषो वा, अप्रीतिस्वरूपत्वात् । शेषाणां त्रयाणामपि मान-माया-लोभानां प्रीत्यप्रीत्युभयस्वरूपत्वात् नैकान्तेन रागत्वम् द्वेषत्वं वा, परिणामवशेन तु तद्विशेष उच्यते ॥३५१८॥

संपतगाहि त्ति तओ णं योवयोगदुगमेगकालम्मि ।
अप्पीति-पीतिमेत्तोवयोगतो तं तथा दिसति ॥३५१९॥

संपतगाहि त्ति तओ । साम्प्रतम्–वर्तमानभावम्–तस्य वस्त्विति तस्मिन्नेकस्मिन् काले प्रीतिस्वरूपमप्रीतिस्वरूपं वा, उपयोगद्वयस्यैककाले प्रतिषिद्धत्वात् ।

---

१ वऽपीं° को, वाऽपि° हे, वापी° त । २ °जाई° हे । ३ वें° जे । ४ यथा अत्र क्रोध-मानादयः कषायाः नयैर्विचारिताः तथा चूर्णिसहिते कसायपाहुडेऽपि विचारिताः–द्रष्टव्यम् चूर्णिसहितकसायपाहुडं मुद्रितम् पृ० ३४ चूर्णिसूत्राणि ८८–९१ । ५ लाभो जे । ६ रागो को हे त । ७ °ण अवसेओ को हे । ८ न ओ° को हे । न उव° को हे ।

तस्मा एवं (तस्माद् एवं) तद्यथापरिणामं मान-माया-लोभानां रागत्व(त्वम्) द्वेषत्वं वा, नैकरूपत्वमिति ॥३५१९॥

तस्य च परिणामस्य प्रविभाग आख्यायते—

**माणो रागो त्ति मतो साहंकारोवयोगकालम्मि।**
**सो चेअ होति दोसो परगुणदेसोवयोगम्मि ॥३५२०॥**
**माया लोभो[2] चेवं [२३१-द्वि०]परोवघातोवयोगतो दोसो।**
**मुच्छोवयोगकाले रागोऽभिस्संगलिंगो त्ति ॥३५२१॥**

**माणो रागो त्ति मतो**। यदा मानः साहंकारोपयोगवेलायां प्रयुज्यते आत्मनि बहुमानप्रीतियोगात् तदा राग इत्युच्यते। यदा पुनः स एव मानः परगुण-द्वेषे प्रयुज्यते तदा दोषे[द्वेषः] ऋजुसूत्रस्य। एवं माया-लोभावपि परोपघातोपयोग-वेलायां दोषः [द्वेषः]। मूर्च्छोपयोगकाले प्रीतिमात्रत्वात् तदा 'रागः' इत्युच्यते, अभि-ष्वङ्गलिङ्गत्वात् ॥३५२०-२१॥

**सद्दातिमतं माणे मायाएँ य सगुणावकाराय।**
**उवयोगो लोभो च्चिय जतो स तत्थेव अवरुद्धो ॥३५२२॥**

**सद्दातिमतं**। शब्दादिमतम्—लोभ एव मान-माये स्वगुणोपकारमूर्च्छात्मकत्वात् प्रीत्यन्तर्गतत्वात्, लोभस्वरूपवत्। ततश्च त्रितयमपि रागः ॥३५२२॥

**सेसंसा कोधो वि य परोवघातमइअ त्ति तो दोसो।**
**तल्लक्खणो य लोभो अध मुच्छा केवलो रागो ॥३५२३॥**

**सेसंसा कोधो वि य**। स्वगुणोपकाराशं(रांशं) मुक्त्वा मान-माययोः शेषांशाः परोपघातप्रवणाः, कोपश्च सर्वप्रकार एव, त्रयोऽप्येते शब्दादीनां दोषाः,[द्वेषाः], परो-पघातात्मकत्वात् क्रोधत्वम्, तल्लक्षणश्च लोभोऽपि परोपघातस्वरूपः दोषा[द्वेषा]न्त-र्गत एव, तत एव हेतोस्तद्वत्। '**अध मुच्छा केवलो रागो**' अथैते सर्वेऽपि क्रोध-वर्जाः मान-माया-लोभा आत्मत्वेन परिग्रहात् तत्प्रीतिस्वरूपमूर्च्छया परिगृह्यते(न्ते), ततस्तत्परिणामवशाच्छुद्धनयानां सर्वेऽपि 'रागः' केवलः, यथैव 'द्वेषः' केवल इति ॥३५२३॥

अथवा—

**मुच्छाऽणुरंजणं वा रागो संदूसणं ति तो दोसो।**
**सद्दस्स व भयणेयं इयरे एक्केक्क थितपक्खा ॥३५२४॥**

---

१ °णदो° त हे को। २ °भा वेवं जे। ३ °च्छाव° जे। ४ °ए विय गु° को, °ए चिय गु° हे। ५ °घाइ° त। ६ ठिं° को, ढिं° हे।

मुच्छाऽणुरंजणमिच्यादि । अथवा सर्वव्यापिलक्षणं मूर्च्छानुरञ्जनं यत्र स रागः । यत्र परसंदूषणं स दोषः (द्वेषः) इति शब्दनयस्यैवं भजना । इतरे शब्दनयव्यतिरिक्ताः एकान्तग्राहेण एकैकस्मिन् भिन्नमेव पक्षं प्रतिपद्यन्ते 'रागम् द्वेषं च' । न भजनां प्रतिपद्यते(न्ते) । राग-द्वेषद्वारे व्याख्याते ।३५२४॥

अथ कषायद्वारविवरणम्—

कम्मं कसं भवो वा कसमायो सिं जतो कसाया तो ।
कसमाययंति व जतो गमयंति कसं कसाय त्ति ॥३५२५॥

कम्मं कसं भवो वा इत्यादि । कषतीति कषः—कर्माणि भवो वा । कषम् आयो येषां ते कषायाः । कषमाययन्ति चेति—गमनीयंति(गमयन्ति) इत्यर्थः—कर्मोपपदे 'अण्'प्रत्ययस्ततः कषायाः ॥३५२५॥

आयो[2] व उवादाणं तेण कसाया जतो कसस्साऽऽया ।
जीवपरिणामरूवा जेण तु णामातिणियमोऽयं ॥३५२६॥

आयो व उवादाणं । अयनमायः उपादानम् , कषस्य आयाः कषायाः—सरूपैकशेषवद् बहुवचनम्—कषायाः ॥३५२६॥

ते जीवपरिणामा इति नामाद्यष्टधा प्ररूपणम्—

णामं ठवणा दविए उप्पत्ती पच्चए य आदेसे[4] ।
रस भाव कमाए वि य परूवणा तेसिमा होति ॥३५२७॥

णामं ठवणा दविए इत्यादि । नाम-स्थापने पूर्ववत् ॥३५२७॥

दुविधो दव्वकसायो कम्मदव्वे य णो य कम्मम्मि ।
कम्मदव्वकसायो चतुव्विधा पोग्गलाऽणुदिता ॥३५२८॥
[२३२-प्र०]सज्जकसायादीयो णोकम्मदव्वतो कसायोऽयं । दारं ।
खेत्ताति समुप्पत्ती जत्तो पभवो कसायाणं ॥३५२९॥

दुविधो दव्वकसायो । द्रव्यतः कषायः आगमतः नोआगमतश्च । पूर्ववद्भावना । उत्पत्तिकषायाः क्षेत्रादिभ्यो येभ्यः प्रभवन्ति कषायाः तत् कषायनिमित्तम् ॥३५२८–२९॥

---

१ कस को हे । "स्वम् उपगतं स्वावलम्बनं च कषति इति कषायः इति व्युत्पत्तेः कर्तृसाधनः कषायः" । कसायपाहुडे जयधवलाटीकायाम् पृ० ३१९ । २ आउ हे । ३ अत्र चूर्णिसहितकसायपाहुडगतं "कसाओ ताव णिक्खिवियव्वो–णामकसाओ, ट्ठवणकसाओ, दव्वकसाओ, पच्चयकसाओ" इत्यादि सूत्रं तुलनीयम्–मुद्रिते चूर्णिसहितकसायपाहुडे पृ० २० सू० ३९ । ४ सो त ।

**होति कसायाणं वन्धकारणं जं स पच्चयकसायो।**
**सद्दातियो त्ति केइं[1] ण समुप्पत्तीयें भिण्णो सो ॥३५३०॥ दारं।**

**होति कसायाण**मित्यादि। कषायाणां कर्मरूपाणां बन्धकारं(रणं) यत् आशयविशेषः। अन्ये "शब्दादिविषयान् पञ्च प्रत्ययान्" [ ] इति मन्यन्ते, तन्न, समुत्पत्तिकषायग्रहणेन ग्रहणात्। तस्माद्यथोक्तमेव बन्धकारणं प्रत्ययकषाय इति ॥३५३०॥

**आदेसतो कसायो कइतवकतभिउडिभंगुराकारो[2][3]।**
**[4]केई [5]चित्ताइगतो ठवणाणत्थंतरो[6] सो यं[7] ॥३५३१॥ दारं।**

**आदेसतो कसायो**। आदिश्यत इत्यादेशः, आदिशनं वा आदेशः–आज्ञा, तया आज्ञया विनापि कषायेण तदाकारप्रदर्शनम्–कैतवकृतभ्रकुटिभङ्गुराकारः। "नृत्तादिप्रयोगेषु केषुचिदेव भ्रकुटिभङ्गुराकारं चित्रस्थमादेशकषायः"[ ] इति ब्रुवते, तन्न, स्थापनाकषायानर्थान्तरत्वात् ॥३५३१॥

**रसतो रसो कसायो। दारं। कसायकम्मोदयो य भावम्मि।**
**सो कोधाति चतुद्धा णामादि चतुव्विधेक्केक्को ॥३५३२॥**

**रसतो रसो** इत्यादि। रसतः कषायो रसकषायः–हरीतक्यादीनां रसः। भावतः कषायो भावेन वा कषायो भावकषायः–जीवपरिणामत्वात्–क्रोधादिश्चतुर्विधः। तत्रैकैको न्यासतो नाम-स्थापना-द्रव्य-भावैः क्रोधादिः प्ररूपणीयः ॥३५३२॥

अथास्यामष्टविधायां कषायप्ररूपणायां नयमतारि(नि)—

**भावं सद्दातिणया अट्ठविधमसुद्धणेगमातीया।**
**[8]णाऽऽदेसुप्पत्तीओ सेसा जं पच्चयविकप्पा ॥३५३३॥**

**भावं सद्दातिणया** इत्यादि। शब्दादयः शुद्धनयाः परमार्थग्राहित्वाद् भावकषायमेवैकं मन्यन्ते, शेषान् सप्त–औपचारिकत्वात्–नेच्छन्ति। अशुद्धनयास्तु नैगम-सङ्ग्रह-व्यवहाराः निश्चय-व्यवहारद्वयाङ्गीकरणादष्टविधमपीच्छन्ति। शेषा ऋजुसूत्र-शुद्धनैगमादयश्च आदेशोत्पत्तिवर्जम्, यस्मादेतद् द्वयं प्रत्ययविकल्पावेव। ततः प्रत्ययकषायमध्ये प्रक्षेपः ॥३५३३॥

---

१ केई को हे त। २ °एँ को, ए हे, इ त। ३ °डी° हे। ४ केयि जे। ५ चिन्ता° जे। ६ °तरं जे। ७ °ऽयं को हे। ८ "आज्ञा कषायो नटादिः। केचन तु चित्रकर्म आदिशन्ति"—कोट्या वृ० पृ० ८४१। अत्र हे० गा० २९८४ वृत्तिरपि तुलनीया पृ० ११६९। ९ आएसु° हे।

अथ नाम-स्थापना-द्रव्य-भावक्रोधचतुष्टयप्ररूपणा । तत्र नाम-स्थापने सर्वत्र तुल्ये इति न निर्दिष्टे । द्रव्यक्रोधप्ररूपणा—

दुविधो[1] दव्वक्खेवो कम्मद्दव्वे य णो य कम्मम्मि ।
कम्मद्दव्वक्कोधो तज्जोग्गा पोग्गलाऽणुदिता ॥३५३४॥
णोकम्मदव्वकोधो णेयो चम्मार-णीलिकोधादी ।
जं कोधवेदणिज्जं समुदिण्णं भावकोधो सो ॥३५३५॥

दुविधो दव्वक्खेवो इत्यादि । गाथाद्वयं प्रायशो भावितार्थमनन्तरमेव । प्राकृतशब्दसामान्यापेक्षात[तः] चर्मकारश्च[र्म]संकोचः, रजकनीलीकोव(थ)श्च कोथः इत्येवं गृह्यते, अन्यथा क्रोध-कोथयोर्भिन्नत्वात् कोथस्याग्रहणमेवेति । अथवा क्रोधकर्मद्रव्याणां तद्भावानुदयानुयो[ग्यादो]ग्यानामेव ये केचिदुपग्रहकारिणः पुद्गलाः ते नोकर्मद्रव्यक्रोधग्रहणेन गृह्यन्ते इति । शेषं स्फुटार्थम् ॥३५३४-३५॥

माणादयो वि एवं णामादिचतुव्विधा जधाजोगं ।
णेया पिधप्पिधा वा सव्वेऽणंताणुबन्धादी ॥३५३६॥

माणादयो वि एवं । मान-माया-लोभा अपि नामादिचातुर्विध्येन नेयाः । अथवा अन्यथा क्रोधादीनां प्रत्येकं चातुर्विध्यम् अनन्तानुबन्ध्यादि, प्रसिद्धत्वात् सिद्धान्ते । आदिग्रहणसूचनं स्वरूपकथनं तत्सदृशोपमानैः फलावस्थानतः फलप्रख्यापनाच्च गाथात्रयेण ॥३५३६॥

जल[२३२-द्वि०]-रेणु-भूमि-पव्वतरायीसरिसो चतुव्विधो कोधो ।
तिणिसलता-कट्ठऽट्ठिय-सेलत्थंभोवमो माणो ॥३५३७॥
मायाऽवलेहिँ-गोमुत्ति-मेंढसिंग-घणवंसिमूलसमा ।
लोभो हलिद्द-खंजण-कद्दम-किमिरागसामाणो ॥३५३८॥
पक्ख-चतुमास-वच्छर-जावज्जीवाणुगामिणो कमसो ।
देव-नर-तिरिय-णारगगतिसाधणहेतवो णेया ॥३५३९॥ दारं ।

जल-रेणु-भूमि-पव्वतरायी० इत्यादि । गाथापर्यन्ते राशिजीव[राजी]शब्दः प्रत्येकमभिसम्बध्यते । अनन्तानुबन्ध्यादिभिश्चातुर्विध्यमुद्दिश्य स्वरूपकथनमुत्क्रमेण मोक्षपथप्रत्यासत्तेः मङ्गलार्थं शुभभावदेवगतिप्रापकसंज्वलनकषायप्ररूपणमादौ कृतम्—

१ °विहो व दव्वकोहो क° हे । २ °व्वे को° को हे त । ३ °णील° जे । ४ °गं को हे त । ५ °हँ° जे । ६ °मेंढ° को, °मेढ° हे । °मिंढ° त । ७ °संग° जे । ८ °म्मास° हे°।

जलराजीसदृशः पक्षमात्रस्थायी संज्वलनक्रोधः देवगतिसाधनफलः। रेणुराजीसदृशः चतुर्मासकालस्थापनायां प्रत्याख्यानावरणक्रोधो मनुष्यगतिसाधनः । भूमिराजीसदृशः संवच्छ[त्स]रकालस्थायी अप्रत्याख्यानावरणक्रोधः तिर्यग्गतिसाधनः। पर्वतराजीसदृशः यावज्जीवकालानुबन्धी अनन्तानुबन्धिक्रोधः नरकगतिसाधन इति । एवं सर्वेऽपि मानादयः तैः स्वैरुपमानैः पक्षादिना कालेन देवगत्यादिसाधनेन च योज्याः। कषायद्वारं गतम् ॥३५३७–३९॥

अथेन्द्रियप्ररूपणा—

इंदो जीवो सव्वोवलद्धिभोगपरमेस्सरत्तणतो ।
सोत्तादिभेतमिन्दियमिह तल्लिंगादिभावातो ॥३५४०॥

इंदो जीवो इत्यादि । 'इदि परमैश्वर्यै[र्ये]' इन्दनादिन्द्रः–सर्वोपलब्धिभोगपरमैश्वर्यसम्बन्धात्–जीवः तस्य लिङ्गम् तेन दृष्टं चेत्यादि "इन्द्रियमिन्द्रलिङ्गम्"[1] [५।२।९३। पा०] इत्यादिना सूत्रेण निपातकात्(तनात्) । तच्च श्रोत्रादि पञ्चभेदम् ॥३५४०॥

तं णामाति चतुद्धा दव्वं णिव्वत्ति[2] ओवैकरणं[3] च[4] ।
आगारो णिव्वत्ती[5] चित्ता वज्झा इमा अन्तो ॥३५४१॥

तं णामाति चतुद्धा । तत् श्रोत्रादि इन्द्रियं सामान्यसंज्ञातः विशेषसंज्ञातश्च नामादिना न्यासेन चतुर्द्धा निक्ष[क्षि]प्यते–नामेन्द्रियम् स्थापनेन्द्रियम् द्रव्येन्द्रियम् भावेन्द्रियं चेति । तत्र नोआगमतो द्रव्येन्द्रियम्–निर्वृत्तिः उपकरणं च। तद्बाह्याभ्यन्तराकारनिर्वर्त्तनं निर्वृत्तिः, बाह्याकारनिर्वृत्तिश्चित्रा जातिविशेषापेक्षा नानेत्यर्थः–यथा–मनुष्यस्य श्रोत्रं भ्रूसमं नेत्रयोरुभयपार्श्वतः, अश्वस्य मस्तके नेत्रयोरुपरिष्टात् तीक्ष्णाग्रम् इत्यादिजातिभेदाद् बहुविधाकारा । बाह्यनिर्वृत्तिरेव चक्षुरादीनां विपयेति[यः इति] ॥३५४१॥

अभ्यन्तरनिर्वृत्तिस्तु सर्वेषां समा–जीवानाम्–सा(ताः) चेमाः—

पुप्फं[6] कलंबुकाए धण्णमसूरादिमुत्तचन्दायी[7] ।
होति खुरुप्पो[8] णाणाऽऽकिती य सोतिन्दियादीणं ॥३५४२॥

---

१ "इन्द्रियम् इन्द्रलिङ्गम् इन्द्रदृष्टम् इन्द्रसृष्टम् इन्द्रजुष्टम् इन्द्रदत्तम् इति वा" इति संपूर्णं सूत्रम्।
२ °व्विति हे त । ३ उव° हे । ४ व हे । ५ °व्विति हे । °व्विती त । ६ फलं° जे हे । ७ °चन्दो य को हे त । ८ खुर° को हे त ।

पुप्फं कलंबुकाए इत्यादि। सर्वं श्रोत्रं कलम्बुकापुष्पाकारम्, सर्वं चक्षुः धान्यमसूराकारम्, सर्वं घ्राणेन्द्रियं अतिमुक्तकपुष्पचन्द्रकाकारम, सर्वं रसेन्द्रियं क्षुरप्राकृतिः, स्पर्शनेन्द्रियं तु बाह्यनिर्वृत्त्यानुकारि विचित्रम्। एतदुभयं निर्वृत्तीन्द्रियम् उपकरणद्रव्येन्द्रियम् ॥३५४२॥

**विसयग्गहणसमत्थं उवकरणं इन्दियंतरं तं पि।**
**जं णेह तदुवघाते गेण्हति णिव्वेत्तिभावे वि ॥३५४३॥**

**विसयग्गहणसमत्थं** इत्यादि। स्वविषयग्रहणशक्तियुक्तं खड्गस्येव धारा छेदनसमर्था तत् शक्तिरूपमिन्द्रियमन्तरम्। निर्वृत्तौ सत्यामपि शक्त्युपघाते विषयं न गृह्णातीति। एतद् द्रव्येन्द्रियं द्विविधमपि निर्वृत्त्युपकरणविषयमुक्तम्॥३५४३॥

अथ भावेन्द्रियम्—

**लद्धुवयोगा भाविन्दियं तु लद्धि त्ति जो खयोवसमो।**
**होति[२३३-प्र०]तदावरणाणं तल्लाभे चेव सेसं पि ॥३५४४॥**

**लद्धुवयोगा भाविन्दियं तु।** तत्र प्रतिस्वमिन्द्रियस्य आवरणक्षयोपशमो लब्धिरुच्यते। 'तल्लाभे' च स्वावरणक्षयोपशमलाभे शेषं निर्वृत्त्युपकरणजातं लभ्यते, न लब्धिविरहितं तद् भवतीति ॥३५४४॥

उपयोगस्तु—

**जो सविसयवावारो सो उवयोगो स चेगकालम्मि।**
**एक्केण चेयं तम्हा उवयोगेगिन्दिओ सव्वो ॥३५४५॥**

**जो सविसयवावारो** इत्यादि। यः स्वविषयस्य व्यापारः प्रणिधानवीर्यं स उपयोगः तद् भावेन्द्रियम्। स चैकेन्द्रियेण एकस्मिन् काले एक एवोपयोग इति निश्चयनयं प्राप्य उपयोगैकेन्द्रियः सर्व एव जीवः ॥३५४५॥

**एगिन्दियातिभेदा पडुच्च सेसिन्दियाइं जीवाणं।**
**अधवा पडुच्च लद्धिन्दियं पि पंचिन्दिया सव्वे ॥३५४६॥**

**एगिन्दियातिभेदा** इत्यादि। ये पुनरेकेन्द्रियादिभेदाः जीवानाम्—एकेन्द्रियः द्वीन्द्रियः त्रीन्द्रियश्चतुरिन्द्रियः पञ्चेन्द्रिय इति च, ते भेदाः शेषेन्द्रियाणि प्रतीत्य—उपयोगादन्यानि शेषेन्द्रियाणि। निर्वृत्त्युपकरणलब्धीन्द्रियाणि- तानि—यस्य

१ °ब्धि° को त। २ °व को त।

यावन्ति तावद्भिर्व्यपदेश इति । अथवा लब्धीन्द्रियं प्रतीत्य सर्वेऽपि जीवाः पञ्चेन्द्रियाः । यदा यत्र वा जीवे एव ता लब्धयो भविष्यन्ति, नाजीवे ॥३५४६॥

तथा चोपपत्तिः—

**जं किर बउलादीणं दीसति सेसिन्दियोवलंभो वि ।**
**तेणत्थि तदावरणक्खयोवसमसंभवो तेसिं ॥३५४७॥**

**जं किर बउलादीणं** इत्यादि । बकुलादीनां वृक्षाणां बाह्यनिर्वृत्त्यभावेऽपि रसादीन्द्रियार्थोपलब्धिर्दृष्टेति तदावरणक्षयोपशमलब्धिरनुमीयते ॥३५४७॥

ततश्च—

**पंचिंदियो व्वे बउलो णरो व्व सव्वविसयोवलंभातो ।**
**तध वि ण भण्णइ पंचिन्दियो त्ति बज्झिन्दियाभावे[3] ॥३५४८॥**
**सुत्तो वि कुंभणिव्वत्तिसत्तिजुत्तो त्ति जह स घडगारो ।**
**लद्धिन्दिएण पंचिन्दियो तधा बज्झरहितो वि ॥३५४९॥**

**पंचिंदियो व्व** इत्यादि । 'पञ्चेन्द्रियो बकुलः' इति प्राप्नोति व्यपदेशः, पञ्चेन्द्रियार्थोपलब्धिमत्त्वात् मनुष्यवत् । एवमार्हतस्यागमविरोधः, एकेन्द्रियाभ्युपगमात् । अपक्षधर्मत्वं च पञ्चेन्द्रियार्थोपलब्धेरभावात् । ननु च सनूपुरालङ्कारयुवतिगण्डूषसीधुसेचनात् पुष्पवृद्धिः किंकृता ? एषोऽभिप्रायः स्यात्—नूपुरशब्दश्रवणात्, सालङ्कारयुवतिदर्शनात्, तद्धस्त-पादादिसंस्पर्शनात्, गण्डूषसीधुरसाऽऽस्वादनात्, तद्गन्धाऽऽघ्राणाच्च पञ्चेन्द्रियार्थोपलब्धिमत्त्वं दृष्टमिति कथमपक्षधर्म उच्यते लब्धीन्द्रिये सत्यपि पञ्चेन्द्रियत्वोपपत्तौ ? भवान्तरे वा बाह्येन्द्रियाभावे निर्वृत्त्यभावे व्यवहारनयस्य पञ्चेन्द्रियत्वाभावः बाह्यविषयाग्रहणं च । अथैवं मन्येथाः—गृहीता एव ते तेन बकुलेन विषयाः उपलब्धि[ब्ध]तत्प्रीतिलिङ्गपुष्पप्रदानवत्त्वात् मनुष्यवत् । उच्यते, सन्दिग्धासिद्धोऽयम्—बाह्येन्द्रियाभावे किं तेनोपलब्धाः उत नोपलब्धा इति ? पुष्पप्रदानं तु—तद्द्रव्यावयवस्पर्शविनीता[त]दौहृतत्वात्—स्पर्शेन्द्रियविषयमेव पानीयसेचनादिवत् । तस्माल्लब्धीन्द्रियं प्राप्यैव बकुलः पञ्चेन्द्रियः तच्छक्तियुक्तत्वात् कुम्भनिर्वृत्तिशक्तियुक्तसुप्तकुम्भकारवत् । तच्चोक्तम् 'लब्धीन्द्रियं प्राप्य सर्वे जीवाः पञ्चेन्द्रियाः' इति सिद्धसाधनम् । बाह्येन्द्रियाभिव्यक्तिं प्रति एकेन्द्रिय एव बकुलः, उपयोगं प्राप्य पञ्चेन्द्रियाः अप्येकेन्द्रियाः किमुत शेषाः ? इति ॥३५४८–४९॥

---

१ उवला॰ त । २ वि को । ३ ॰वा हे । ४ ॰व्वु॰ त । ॰वत्ति॰ जे । ५ ॰ह घडा॰ त ।

ननु च लाभक्रमः-पूर्वं कर्मक्षयोपशमाल्लब्धीन्द्रियम्, ततो निर्वृत्युपकरणे, तत उपयोग इति किमर्थं क्रमभेदः ? उच्यते, द्रव्येन्द्रियग्रहणसामान्यात् क्रमभेदः । तत इयं गाथा—

**लाभक्कमो[1] तु लद्धी णिव्वत्तुवकरणतो[2] वओगो य ।**
**दव्विन्दिय-भाविन्दियसामण्णातो कमो[3] भिण्णो ॥३५५०॥ दारं ।**

लाभक्कमो तु इत्यादि । गतार्था । इन्द्रियद्वारम् ॥३५५०॥

अथ परीषहद्वारम्—

**परिसोढव्वा जतिणा मग्गाऽविच्चुति-विणिज्जराहेतुं[4] ।**
**जत्तो[5] परीसहा ते खुधादयो होन्ति बावीसं ॥३५५१॥ दारं ।**

**परिसोढव्वा जतिणा** इत्यादि । "मार्गाऽच्यवन-निर्जरार्थं परिषोढव्याः परीषहाः" [तत्त्वार्थसू० ९. ८] इति सूत्रेणैव निर्वचनं कृतम् । यत एवं तस्मात् ते परीषहाः । ते च द्वाविंशतिः परिसंख्यानाः एवम्—क्षुत्-पिपासा-शीतोष्ण-दंशमशक-नाग्न्याऽरति-स्त्रीचर्या-निषद्या-शय्याऽऽक्रोश-वध-याचनाऽलाभ[6]-रोग-तृणस्पर्श-मल-सत्कारपुरस्कार-प्रज्ञाऽज्ञानाऽदर्शनानि[7] विस्तरशोऽनुगन्तव्याः ॥३५५१॥

अथ उपसर्गद्वारम्—

**उवसज्जण[२३३-द्वि०]मुवसग्गो तेण तओ व उवसिज्जते[8] जम्हा ।**
**सो दिव्व-मणुअ-तेरिच्छियाऽऽतसंचेतणा[9]भेतो ॥३५५२॥**

**उवसज्जणमुवसग्गो** इत्यादि । सामीप्येन सर्जनमुपसर्गः, उपसृज्यतेऽनेनेति वा उपसर्गः करणसाधनः, उपसृज्यतेऽसाविति कर्मसाधन उपसर्गः । स च प्रत्ययभेदाच्चतुर्विधः—दिव्य-मानुष-ति[तै]र्यग्योनाऽऽत्मसंवेदनाभेदात् ॥३५५२॥

तत्र दिव्या इमैः कारणैः—

**हास-प्पतोस-वीमंसतो विमातायें[10] वा भवे[11] दिव्वो ।**
**एवं चिय माणुस्सो कुसीलपडिसेवण चउत्थो[12] ॥३५५३॥**
**तिरियो भय-प्पदोसाऽऽहाराऽवच्चादिरक्खणत्थं[13] वा ।**
**घट्टण-थंभण-पवडण-लेसणतो वाऽऽदसंचेतो[14] ॥३५५४[15]॥**

**हास-प्पतोस-वीमंसतो विमातायेत्यादि** । दिवि भवो दिव्यः 'द्यौः' इत्युपलक्षणया देवयोनिकृतः सर्व एव । तत्र व्यन्तराः क्रीडाप्रधानाः हासादुपसर्गं कुर्युः, केचिदव-

---

१ °मे हे । २ °ण उव° हे । ३ कओ को हे त । ४ °हेऊ हे त । ५ जुत्ता को हे । ६ प्रतौ °लाभ—वधरोग° इति । ७ प्रतौ °ज्ञानदर्शना° इति । अस्य 'अज्ञानपरीषह' इत्यपि संज्ञा । ८ °सज्ज° हे त । ९ °संवे° को हे । १० °एँ को, ए हे, इ त । ११ °वो हे । १२ °त्थे हे । १३ °ट्टत्थं° हे त । १४ वाऽऽयसंवेओ को । १५ अतः परं 'रागेऽरहदत्तादी' [गा० ३५५५] इत आरभ्य 'आतोदाहरणा' इति गा० ३५६० पर्यन्ताः षड् गाथा न सन्ति त हे ।

ज्ञातः प्रद्वेषात्, पूर्वभवानुबन्धक्रोधाद्वा, क्वचिद् मीमांसन्तः–'किमयं तपश्चरणाच्चालयितुं शक्यः ?' इति, अथवा विमात्रया–विविधा मात्रा विमात्रा हास्यादीनि बहूनि कारणानि, विशिष्टा वा मात्रा विशिष्टं प्रयोजनं तेन 'अस्मत्स्थानं विशिष्टतपस्विनाऽधिष्ठीयते' इति निदानकारणार्थम् । विगता वा मात्रा–विनैव प्रयोजनेन–अप्रत्ययकारणमेव । एवं मानुष्यकोऽप्युपसर्गः । [1]यस्तु चतुर्थः आत्मसञ्चेतना शरणार्थं वा स्थानपरिग्रहरक्षणार्थं वा, अथवात्र सञ्चेतनाकृतः घट्टन-स्तम्भन प्रपतन-श्लेशनादिना ॥३५५३-५४॥

तत्रोदाहरणानि आवश्यकचूर्ण्यादिव्याख्यानिकप्रतिबद्धानि–

रागेऽरहदत्तादी, णावियणन्दातयो य दोसम्मि ।
कोधम्मि परसुरामादयो, सु[2]भूमादयो माणे ॥३५५५॥

मायाए सुआदीया, लोभम्मि य लुद्धणं[3]दवणियादी ।
सोतम्मि पुप्फसालादि, लोयणे वणिसुतादीया ॥३५५६॥

गंधप्पियादि घाणे, तध सोतासादयो य रसणम्मि[4] ।
फासिन्दियम्मि तव्विसयगिद्धरागादयो णेया ॥३५५७॥

णेया परीसहजए सुरिन्ददत्तादयो जधोवणया ।
दिव्वम्मि वन्तरीसंगमे य जतिलोभणातीया ॥३५५८॥

गणिया सोमिल धम्मोवदेसणे साल्लु जोसितादीया ।
[२३४–प्र०]तिरियम्मि साण-कोसिय-सीहाऽचिरखतियंगवाती[5] ॥३५५९॥

कणुं[6]अ-कुदणाभिपदणादिगत्तसंलेसणातओ णेया ।
[7]आतोदाहरणा वात-पित्त-कफ-सण्णिवाता वा ॥३५६०॥

रागेऽरहदत्तादीत्यादिगाथाप्रपञ्चः ॥३५५५–६०॥

णामयन्ता णमोऽरिहा [३५०७] इत्यस्य व्याख्यानम्––

१ अत्र आशयस्पष्टीकरणाय कोटया० वृ०पृ० ८४६ तथा हे०वृ० पृ० ११७५ द्रष्टव्यम् ।
२ सुभोम्मा° को। ३ °दवाणियओ को। ४ घाणेंदियंमि गंधप्पिओ य रसणंमि रायसोदासो को। ५ °तिगावा° को। ६ °णुगपडणपवडणया घट्टणय सले° को। ७ अहवा संवेदणि वात° को मु०पृ०८४४ ।

**पह्वीकरणं णामणमथवा णासणमतो जधाजोगं[3] ।**
**णेयं रागादीणं तण्णामातो णमोऽरहता ॥३५६१[4]॥**

**पह्वीकरणं णामणमि**त्यादि । 'नमो अरहंता णं' इत्यादिप्राकृतशब्दश्रवणादनेकं शब्दान्तरं श्रुतिसामान्याद् अक्षरैकदेशसाधर्म्याद्वा बहु प(प्र)प्लवते । तन्निरुक्तविधानान्याचष्टे–निरुक्तं व्याख्यानाङ्गमिति–तत्र नमः प्रह्वीकरणः रागाद्यर्थानां प्रह्वीकरणान्नामनात् ! "अनेकार्था धातवः" [ ] इति वा रागादिनाशनं कृतमेवेति यथायोगं नमोऽर्हास्ते भगवन्तः । अथवा 'अरीणां हन्तारः' इति निरुक्तिः ॥३५६१॥

के पुनस्ते रिपवः ? इति चेत् अत इयं गाथा—

**इन्दिय-विसय-कसाए परीसहे वेतणा[6] उवस्सग्गे ।**
**एते अरिणो हंता अरिहन्ता तेण उँच्चन्ति ॥३५६२॥**

**इन्दिय०** इत्यादि । गतार्था ॥३५६२॥

अथवा 'नमोऽर्हाः' इत्यत्र इन्द्रियादीनां नामितत्वान्नाशितत्वाद्वा पुनरुक्तमरित्वम्, अतोऽन्येऽरयो व्याख्यायते(न्ते) । ते च अष्टौ ज्ञानावरणादिसंज्ञाः–सामान्यसंज्ञया तु अष्टविधं कर्मेति संगृहीतम्—

**अट्ठविधं पि य कम्मं अरिभूतं होति सव्वजीवाणं ।**
**तं कम्ममरिं हंता अरिहंता तेण उच्चन्ति ॥३५६३॥**

**अट्ठविधं पि य** इत्यादि । एवं च 'अरिहन्तारः' इति गतार्था ॥३५६३॥

अथवा 'अर्ह पूजायाम्' अर्हन्तीति–पचाद्यच् कर्तरि–अर्हाः, तेषां वन्दनाद्यर्हाणां नमस्कार इति–देवाऽसुर-मनुष्येभ्यः पूजामर्हन्ति प्राप्नुवन्ति तद्योग्यत्वात् । 'नमो रहंताणं' इति अकारो नैवादौ । किं तर्हि ? रजो हन्तारः–रजः कर्म अष्टविधम्–तेभ्यो वा रजोहन्तृभ्यो नम इति । तत इदं गाथाद्वयम्—

**अरिहन्ति वन्दण-णमंसणाणि अरहन्ति पूय-सक्कारं ।**
**सिद्धिगमणं च अरहा अरहन्ता तेण वुच्चंति ॥३५६४॥**
**देवासुरमणुआणं अरहा पूया सुरुत्तमा जम्हा ।**
**अरिणो रयं च हन्ता अरिहंता तेण वुच्चन्ति ॥३५६५॥**

**अरिहन्ति वन्दण० । देवासुर०** इत्यादि । भावितार्था एवमियम् ॥३५६४–६५॥

---

१ पह्वीक° हे त । १ °मण° को । ३ °ग्गं° को । ४ °मोऽरिहया को, °मोऽरहा हे, °मो अरहा त । ५ अतः परम् ३५६२ गाथतः ३५६५गाथापर्यन्ताश्चतस्रो गाथाः त तथा हे प्रतौ नोपलभ्यन्ते परन्तु तासां स्थाने त प्रतौ 'इंदिय" इत्यादिकाश्चतस्रो गाथाः' इत्येवम् अक्षराणि दृश्यन्ते । ६ °णाओ म । ७ वुच्च° को दी हा म । ८ अर° को । ९ °णुएसु दी हा म । १० °माणं च जे त । ११ °णो हंता रयं हन्ता जे को दी हा ।

अरहन्तणमोकारो जीवं मोएति भवसहस्साओ ।
भावेण कीरमाणो हो[२३४-द्वि०]ति पुणो बोधिलाभाए ॥३५६६॥

अरहन्तणमोक्कारो इत्यादि । ॥३५६६॥

स चायं चतुर्विधो नामादिरस्यां गाथायामुपात्त इति द्वितीयगाथया व्याख्यायते—

अरहन्ताऽऽगारवती ठवणा, णामं मतं णमोकारो ।
भावेणं ति य भावो दव्वं पुण कीरमाणो त्ति ॥३५६७॥

इय णामातिचतुव्विधबज्झब्भंतरविधाणकरणातो।
सो मोएति भवातो होति पुणो बोधिबीयं च ॥३५६८॥

अरहन्ताऽऽगारवती ठवणा इत्यादि । 'अर्हन्तानाम्[र्हताम्] नमस्कारः' इति पदद्वयम् । तत्रार्हच्छब्देन बुद्धिस्था ति[इति] स्थापना । नमस्कारः—नमस्कारशब्द एव नामनमस्कारः । 'भावेन' इति उपयोगात्मको भावनमस्कारः । 'क्रियमाणः' इति शब्दात्मकत्वाद् द्रव्यनमस्कारः । इय णामातिचतुव्विधेत्यादि । एवं बाह्याभ्यन्तरभेदस्य चतुर्विधस्य—नमस्का(क)रणम्—प्रयोगः मोचयति भवसहस्रेभ्यः । 'सहस्र'शब्दो यद्यपि दशशतसंख्यायां वर्त्तते तथाऽप्यर्थादनन्तसंख्यायामवगन्तव्यः—अनन्तभवना(भवा)द् मोक्षं प्रापयतीत्युक्तं भवति । यस्य वा कदाचित् तद्भवे मोक्षप्राप्तिर्न भवेत् तं प्रत्युच्यते—भवति पुनर्बोधिलाभाय—तस्याऽप्यनन्तरभवे पुनर्बोधिर्बीजमसौ भवति ॥३५६७–६८॥

अरहंतणमोक्कारो धण्णाण भवक्खयं करेन्ताणं ।
हितयं अणुम्मुयंतो विसोत्तियावारयो होति ॥६६२॥३५६९॥

धण्णा णाणातिधणा परित्तसंसारिणो पतणुकम्मा ।
भवजीवितं पुण भवो तस्सेह खयं करेन्ताणं ॥३५७०॥

इहं विस्सोतो गमणं चित्तस्स विसोत्तिया अवज्झाणं ।
अरहन्तणमोक्कारो हितयगतो तं णिवारेति ॥३५७१॥

अरहंतणमोक्कार० इत्यादि । 'धन्याः' ज्ञान-दर्शन-चारित्रधनाः, 'परित्त-(परिमित)संसारिणः' 'प्रतनुकर्माणः' तद्भवजीवितम्—'भवः' 'तस्य' क्षयः भवक्षयः तं

१ कुणं° दी हा। २ °णुमु° हे, । ३ इय त ।

'कुर्वताम्' 'हृदयम्' अमुञ्चन् विस्रोतोगमनं निवारयति–विस्रोतोगमनमव[प]ध्यानम्। विस्रोतसिकः–विदेशेन वा स्रोतस्य भावेन्द्रियाख्यस्य गमनम् अन्यत्राव(प)ध्याने प्रवृत्तिः विस्रोति(तसि)का तां(तां) निवारयति–धर्मध्यानैकालम्बनतां करोत्यर्थः ॥३५६९–७१॥

अरहंतणमोक्कारो एवं खलु वण्णितो महत्थो त्ति ।
जो मरणम्मि उवग्गे अभिक्खणं कीरती बहुसो ॥६६३॥३५७२॥

अरहंतणमोक्कारो एवं खलु वण्णितो इत्यादि। महान् अर्थो यस्य स 'महार्थः' अल्पाक्षरोऽपि द्वादशाङ्गार्थसङ्ग्राहित्वाद् महार्थः महार्घमूल्यमहार्थरत्नवत् ॥३५७२॥

ज्वलनादिभयेषु त्वरिततरं तस्य परिग्रहात् अथवा 'महत्थं' इति–प्राकृतशब्दसमानश्रुतेः–महास्त्रम् अस्त्रमायुधम् तदमोघं स्वकार्यनिर्वृत्त्यवश्यंभावात् महास्त्रमुच्यते, तत्र युधि अतिभये किल्लापतिते प्रयुज्यते न सर्वकालम्, अत एव तस्य देवतापरिग्रहास्त्रत्वम्। अतोऽसौ ज्वलनादिमहायुद्धभयातिरिक्ते मरणकाले महार्थत्वाद् महास्त्रत्वाद्वा परिगृह्यते। अत इदं गाथाद्वयम्—

जलणादिभए सेसं मोत्तुं उदगरयणं महामोल्लं ।
जुधि [1]वातिभए घेप्पति अमोह[2]मत्थं जध तधेह ॥३५७३॥
मोत्तुं पि बारसंगं[3] स एव मरणम्मि कीर[२३५–प्र०]ते जम्हा ।
अरहन्तणमोक्कारो तम्हा सो बारसंगत्थो ॥३५७४॥

जलणादिभए। मोत्तुं पि बारसंगं इत्यादि। भावितार्थौ ॥३५७३–७४॥

कथं च द्वादशाङ्गो(ङ्गार्थो) नमस्कार इति? तदुच्यते—

सव्वं पि बारसंगं परिणामविसुद्धिहेतुमेत्तायं ।
तक्कारणभावातो किध ण तदत्थो णमोक्कारो? ॥३५७५॥

सव्वं पि बारसंगं। समस्तद्वादशाङ्गप्ररूपितार्थाभिधायी नमस्कारः, परिणामविशुद्धिहेतुत्वात्, समस्तद्वादशाङ्गवत् ॥३५७५॥

ण हु तम्मि देसकाले सक्को[4] बारसविधो सुतक्खंधो ।
सव्वो अणुचिंतेतुं [5]धन्तं पि समत्थचित्तेणं ॥३५७६॥
एक्कम्मि वि जम्मि पते संवेगं कुणति वीयरागमते ।
तं तस्स होति णाणं जेण विरागत्तणमुवेति ॥३५७७॥

---

१ °तिमिरे जे। वाऽभिभवे मलय० वृ० मुद्रित पृ० ५११ प्र०। २ °सत्थं° को। ३ °ग मरणाइभएसु कीं° को हे त। ४ °क्का त। ५ य विचिं° त। ६ धन्तम्– अतिशयेन।

**एक्कम्मि वि जम्मि पते संवेगं कुणति वीतरागमते ।**
**सो तेण मोहजालं छिन्दति अज्झप्पजोगेणं ॥३५७८॥**

**ण हु तम्मि देसकाले** इत्यादि । **एक्कम्मि वि जम्मि पते** । तथा पुनरपि **एक्कम्मि वि जम्मी**त्यादि । **जो मरणम्मि उवग्गे** । [गा० ३५७२] एषामक्षराणां व्याख्या—मरणसमीपमुपेग्रहं मरणम् । व्यवहारनयमतौ अतस्मिन् काले मरणशब्दः । निश्चयनयमतं तु—

"समये समये म्रियते मरणेनाऽऽवीचिकेन कर्मवशात् ।
कर्मणः आयुष्कस्य हि जी[वि]तमिति वेदनं प्रोक्तम्" [ ] ॥३५७३-७७-७८॥

**ववहारातो मरणे तं पतमेगं मतं णमोक्कारो ।**
**अण्णं पि णिच्छयातो तं चेव य बारसंगत्थो ॥३५७९॥**

**ववहारातो मरणे** इत्यादि । तस्माद् व्यवहारनयमतात्मके मरणे पदसमुदायोऽपि नमस्कारः पदमेवेत्युपचर्यते । तदेकं नमस्कारः अन्यदपि च पदं तस्मिन् काले वैराग्यज्ञानार्थम्, तदेव पदं नमस्कारपदमेव, द्वादशाङ्गार्थत्वात् ॥३५७९॥

**जं सोऽतिणिज्जरत्थो पिण्डयत्थो वेन्नितो महत्थो त्ति ।**
**कीरति णिरंतरमभिक्खणं तु बहुसो बहू वारे ॥३५८०॥**

**जं सोऽतिणिज्जरत्थो** । यस्माच्चासौ निर्जरार्थः पिण्डकार्थो वा तस्माद् महार्थः । 'क्रियते' इति वर्त्तमानकालव्यापारवन्निरन्तरं सततम् अभीक्ष्णं बहुशः अभ्यावृत्त्येत्यर्थः ॥३५८०॥

**अरहन्तणमोक्कारो सव्वपावपणासणो ।**
**मंगलाणं च सव्वेसिं पढमं होति मङ्गलं ॥६६४॥३५८१॥**
**पंसेति, पिवति व हितं, पाति भवे वा [२३५–द्वि०]जियं जतो पावं ।**
**तं सव्वमट्ठसामण्णजातिभेतं पणासेति ॥३५८२॥**
**णामादिमंगलाणं पढमं ति पधाणमधव पंचण्ह ।**
**पढमं पधाणतरयं च मंगलं पुव्वभणितत्थं ॥३५८३॥**

**॥ इति अर्हन्नमस्कारः समाप्तः ॥**

---

१ "उपाग्रे" कोट्या० वृ० मु० पृ० ८४९ गा० ३५९२ । हे० वृ० मु० पृ० ११७८ गा०३०१५ । २ पिंडत्थो को हे । ३ वत्ति° जे । ४ °वारा को, °वारो त । ५ पु° दी हा म । ६ हवइ को दी हा म । ७ °ब° को हे । ८ त° हे त । ९ अत्र गाथासमाप्तौ 'इत्येतां नमस्कारनिर्युक्तिं पुरुषः अन्तकाले नित्यम् अनुपालयति तस्य अचिरात् कालात् मोक्षावाप्तिर्भविष्यति इति' जे ।

**अरहन्तणमोक्कारो सव्वपाव०** । पंसेति, पिबति च इत्यादि । पंसयतीति निपातनात् पापम् । पिबति वा हितमिति पापम्—औणादिकः 'प'प्रत्ययः । पाति रक्षति जीवं भवस्थमिति पापम्, तत् सर्वमष्टप्रकारमपि पापजातिसामान्यापेक्षा(क्षणा)त् । तत् प्रणाशयतीति सर्वपापप्रणाशनः । **णामादि०मंगलाणं च** । नामादीनि बहूनि मङ्गलानि, तेषां सर्वेषां प्रथममिति प्रधानार्थकारित्वात् । अथवा पञ्चामूनि भावमङ्गलानि अर्हदादीनि, तेषां प्रथममाद्यम्–इत्यर्थः–प्रधानतरं वा प्रथममिति ॥३५८१–८३॥ उक्तार्थं मङ्गलद्वारम् ।

अथ सिद्धनमस्कारस्वरूपम्—

**सिद्धो जो णिप्फण्णो जेण गुणेण स य चोद्दसविकप्पो ।**
**णेयो णामातीओ ओदणसिद्धादिओ दव्वे ॥३५८४॥**

**सिद्धो जो णिप्फण्णो** । 'षिधु संराधौ' 'राध साध संसिद्धौ' 'षिधू शास्त्रे माङ्गल्ये च' । सिध्यति स्म सिद्धः—यो येन गुणेन निष्पन्नः परिनिष्ठितः न पुनः साधनीयः सिद्धौदनवत्—चतुर्दशविकल्पः । 'सिद्ध'शब्दसामान्यापेक्षात(तः) सर्वेषां ग्रहणम्, समानशब्दाभिधेयत्वात् 'गो'शब्दाक्षिप्तगवादिपदार्थवत् । तेषां च व्यवच्छेद(दः) अर्थ-प्रकरणादिभिरिति चतुर्दशापि वर्ण्यन्ते । स च नामादिकः प्रोक्तश्चतुर्विधः । नाम-स्थापने पूर्ववत् । द्रव्यसिद्धः 'निष्पन्न ओदनः' सिद्ध उच्यते । भावसिद्धः–कर्मक्षयसिद्धः—पर्यन्ते वक्ष्यते ॥३५८४॥

**[1]कम्मे सिप्पे य विज्जाय मन्ते जोगे य आगमे ।**
**अत्थजत्ताअभिप्पाए तवे कम्मक्खए ति[2] य ॥६६५॥३५८५॥ दारगाधा ।**
**[3]कम्मं जमणायरियोवदेसजं सिप्पमण्णधाभिहितं ।**
**किसि-वाणिज्जादीयं घड-[4]लोभारादिभेतं च ॥३५८६॥**

**कम्मे सिप्पे य** इत्यादि । **कम्मं जमणायरियोवदेसजं** । अनाचार्योपदेशजातं सातिशयमनन्यसाधारणं कर्म उच्यते । यत् पुनराचार्योपदेशाद् ग्रन्थनिबन्धाद्वोपजायते सातिशयं कर्मापि तच्छिल्पमुच्यते । भारवहन-कृषि-वाणिज्यादि कर्म । घटकार-रथकारादिभेदजं शिल्पम् ॥३५८५–८६॥

**जो सव्वकम्मकुसलो जो जत्थ य सुपरिणिट्ठितो होति ।**
**सज्झगिरिसिद्धओ इव स कम्मसिद्धो त्ति विण्णेयो ॥३५८७॥ दारं ।**

---

१ त नास्ति २ वि को । ३ अत्र ३५८६ गाथातः ३६२७ गाथापर्यन्ता द्वाचत्वारिंशद् गाथा हे तथा त प्रत्योर्नोपलभ्यन्ते, तस्य स्थाने हे त प्रतौ च "कम्मं" गा० ३५८६ तः आरभ्य "न किलम्मइ जो तवसा" [३६२७] गाथापर्यन्ता एकचत्वारिंशद् गाथाः" इति निर्देशः । ४ °लोहारा° को दी हा म ।

**जो सव्वकम्मकुसलो** । सर्वकर्मकुशलः एककर्मा चात्यन्तप्रकर्षप्राप्तः कर्म-सिद्धः, स्व(सु)परिनिष्ठितकर्मत्वात् **सज्झे(ह्य)गिरिसिद्धवा**दिवत् ॥३५८७॥

**जो सव्वसिप्पकुसलो जो जत्थ व सुपरिणिट्ठितो होति ।**
**कोकासवड्ढई वित्र सातिसओ सिप्पसिद्धो सो [२३६-प्र०] ॥३५८८॥**
**। दारं ।**

**जो सव्वसिप्पकुसलो** । सर्वशिल्पकुशलः एकशिल्पो(ल्पे) वा परिनिष्ठां गतः शिल्पसिद्धः, प्रकर्षगतशिल्पत्वात्, **कोक्कासवर्द्धकिवत्** ॥३५८८॥

विद्या–मन्त्रसिद्धयोर्भेदप्रदर्शनार्थं गाथा—

**इत्थी विज्जाऽभिहिता, पुरिसो मन्तो त्ति तव्विसेसोऽयं ।**
**विज्जा ससाधणा वा, साधणरहितो य मन्तो त्ति ॥३५८९॥**

**इत्थी विज्जाऽभिहिता** । 'विदॢ(द्‌ऌ) लाभे' 'विद सत्तायाम्' वा । तस्य 'विद्या'–इति भवति–ज्ञानम् । 'मन्त्रि गुप्तभाषणे' तस्य 'मन्त्रः' इति । रहस्यम् उभयत्रापीति । यस्मिन् मन्त्रदेवता स्त्री सा विद्या **अम्बकूष्माण्ड्या[ष्माण्डया]**दिः । यत्र देवता पुरुषः स मन्त्रः–यथा–विद्याराजो **हरिणेगमेषिः**, सर्वेणे(सर्वे च) यक्षय(यक्षा) इत्यादि । अथवा यावान् मन्त्रः सकल्पसाधनः सा विद्या । यस्तु पठितः सिद्धः साधनरहितः सांपरमन्त्रवता(शाबरमन्त्रवत्) स मन्त्र इति ॥३५८९॥

**विज्जाण चक्कवट्टी विज्जासिद्धो स जस्स वेगा वि ।**
**सिज्झेज्ज महाविज्जा विज्जासिद्धोऽज्जखउडो व्व ॥३५९०॥दारं।**

**विज्जाण चक्कवट्टी** इत्यादि । विद्यानां सर्वासामधिपतिश्चक्रवर्त्ती, एका वा महती विद्या सिद्धा—यथा **अम्बकूष्माण्डी महारोहिणी महापुरुषदत्ता महाप्रज्ञप्तिर्वा**—[यस्य]स विद्यासिद्धः, सातिशयत्वात्, **खपुटक्षमाश्रमणा**दिवत् ॥३५९०॥

**साधीणसव्वमंतो बहुमंतो वा पधाणमन्तो वा ।**
**णेयो स मन्तसिद्धो खम्भागरिसो व्व सातिसयो ॥३५९१॥ दारं ।**

**साधीणसव्वमंतो** । 'सा(स्वा)धीनसर्वमन्त्रः' 'बहुमन्त्र(न्त्रः)' 'प्रधानैकमन्त्रो वा' 'मन्त्रसिद्धः', आश्चर्यप्रसिद्धकर्मत्वात्, **स्वामिदासांदिवत्** ॥३५९१॥

१ सह्यगिरिसिद्धकथानकम् श्रीमलयगिरिवृत्तौ पृ० ५१२ द्रष्टव्यम् । २ साह° । ३ एषा कोक्कासवर्धकिकथा वसुदेवहिण्डयाम् । पृ० ६२—६३ द्रष्टव्या । ४ "यथा विद्याराजो हरिणेगमेषिःइत्यादि"—हारि० वृ० ४११ प्र० । ५ "शाबरादिमन्त्रवत्"—हारि० वृ० पृ० ५११ प्र० । ६ थंभा° दी म । ७ अत्र मूलगाथायाम्—"खम्भागरिसो व्व" इति निर्दिष्टम् । एतस्य पदस्य व्याख्यानम् "स्तम्भाकर्षवत्" इत्येवं हारि०मलय०वृत्त्योः पृ० ५१२ प्र० तथा पृ० ५१४ द्वि० ।

सव्वे वि दव्वजोगा परमच्छेरयफलाऽधवेगो वि ।
जस्सेह होज्ज सिद्धो स जोगसिद्धो जधा समिओ ॥३५९२॥ दारं ।
आगमसिद्धो सव्वंगपारयो गोतमो व्व गुणरासी ।
पउरत्थो अत्थपरो व मम्मणो वेऽत्थसिद्धो तु ॥३५९३॥ दारं ।

**सव्वे वि दव्वजोगा** । विदिताऽलक्षितसर्वयोगः आश्चर्यफलैकयोगो वा स योगसिद्धः, प्रदर्शिताश्चर्यफलत्वात्, शमिकवत् । **आगमसिद्धो** अधिगतद्वादशाङ्गः आगमसिद्धः, प्रवचनपारगत्वात्, **गौतमस्वामिवत्** । प्रभूतार्थश्चार्थसिद्धः, अर्थपरत्वात्, **मम्मणवत्** ॥३५९२-९३॥

जो णिच्चसिद्धजत्तो लद्धवरो जो व तुंडियाति व्व ।
सो किर जत्तासिद्धोऽभिप्पाओ बुद्धिपज्जाओ ॥३५९४॥
विपुला विमला सुहुमा जस्स मती जो चतुव्विधाए वा ।
बुद्धीए संपण्णो स बुद्धिसिद्धो इमा सा य ॥३५९५॥

**जो णिच्चसिद्धजत्तो । विपुला विमला** । यस्य नित्यमेव स्थलपथ-वारिपथेषु सिद्धा यात्रा स यात्रासिद्धः, सर्वदाऽस्खलितयात्रत्वात्, **तुण्डिकवत्** । अभिप्रायो बुद्धिः अध्यवसाय इति पर्यायाः । सा च बुद्धिः **विपुला** विस्तारवती एकपदेन अनेकपदानुसारिणी, **विमला** संशयः(य)-विपर्ययो(या)ऽनध्यवसायविरहिता, 'सूक्ष्मा' अत्यन्तदुरवबोधः(ध)-सूक्ष्म-व्यवहितार्थपरिच्छेदसमर्थो(र्था) । यस्यैवंविधा बुद्धिः स बुद्धिसिद्धः—अभिप्रायसिद्ध उच्यते । अथवा चतुर्विधया बुद्ध्या संपन्नः अभिप्रायसिद्धः ॥३५९४-९५॥

सा चतुर्विधा बुद्धिरिमा(यम्)—

उप्पत्तिया वेणइया कम्मया पारिणामिया ।
बुद्धी चउव्विधा वुत्ता पंचमा [२३६-द्वि०]णोवलब्भती[5] ॥३५९६॥

**उप्पत्तिया वेणइया कम्मया पारिणामिया** इत्यादि ॥३५९६॥

अस्या व्याख्या—

---

१ व्व को । २ 'शमित' इति हारि० वृ० पृ० ४१२ तथा मलय० वृ० पृ० ५१५ प्र० । ३ °मिम° दी म । ४ परि° म । ५ औत्पत्तिकीप्रभृतिचतसृणां बुद्धीनां तन्नाममाह' विशदीकरणाय अत्र ३५९६ गाथातः ३६२६पर्यन्ता या गाथा निर्दिष्टाः तासु या गाथा उदाहरणदर्शिकाः लक्षणसूचिकाश्च ताः सर्वा नन्दिसूत्रमूले पृ ०१४४-१६५ (गा० ६२-७४) पर्यन्तं दृश्यन्ते किन्तु तासु लक्षणसूचिकाः कतिपया गाथा अल्पपाठान्तरसहिता विद्यन्ते ।

**उप्पत्तीए च्चिय जा ण सत्थकम्माणुमाणतादीहि ।**
**उप्पज्जति ण चिरेण य ण वाहतफला य जा किंतु ॥३५९७॥**

**उप्पत्तीए च्चिय** । उत्पत्तिरेव यस्याः कारणं नान्यत् शास्त्र-कर्माऽभ्यासाऽनुग्ना(मा)नादिकम् । यद्यपि क्षयोपशमादुपजायते अन्तरङ्गनिमित्तात, तत सर्वबुद्धिसाधारणमिति न विवक्ष्यते, अन्यद् बाह्यं कारणमुत्पत्तौ नापेक्ष्यते । उत्पत्तिरेव प्रयोजनं यस्याः सा औत्पत्तिकी विवक्षितार्थकृता(त्य)नन्तरमेव समुपजायते न परिमैलेन । उत्पन्ना चाभिप्रेतार्थनिष्पादनसमर्था अव्याहतफलेति ॥३५९७॥

नैतावदेव लक्षणम् किन्तु अन्यदपि लक्षणं सूत्रोक्तमस्ति—

**पुव्वं अदिट्ठ-असुतावेतितत्क्खणविसुद्धगहितत्था ।**
**अव्वाहता फलवँती बुद्धी उप्पत्तिया णाम ॥६६६॥३५९८॥**
**पुव्वं अदिट्ठमसुतं अपरिण्णातं खणम्मि तत्थेव ।**
**ईसि व्व तं मुहुत्तं गहितत्था अवगतत्थ त्ति ॥३५९९॥**

**पुव्वं अदिट्ठ०** इत्यादि । **पुव्वं अदिट्ठमसुतं** इत्यादि । बुद्धयुत्पादात् पूर्वं स्वयमदृष्टम्, अन्यतो वा न श्रुतम्, अवेदितं मनसाऽपि पूर्वमनालोचितम् किन्तु तस्मिन्नेव क्षणे विशुद्धो यथावस्थितगृहीतोऽवधारितोऽर्थो यया सा अगृहीताऽश्रुताऽवेदिततत्क्षणगृहीतार्था अथवा आवेदितमीषत् परिज्ञातं किञ्चिदुद्घट्टितम् अदृष्टाऽश्रुताऽऽवेदितं तत्क्षणमेव सर्वथा विशुद्धमर्थं गृह्णाति या सा ०गृहीतार्था अवगतार्थेत्यर्थः । ॥३५९८–९९॥

**अव्वाहता फलेति** व्याख्यायते—

**फलमेगंतियमव्वाहतं ण वा दूसितं जमण्णेण ।**
**इध-परलोगगतं वा जीसे अव्वाहतफला सा ॥३६००॥**

**फलमेगंतियमित्यादि** । अवश्यंतया निष्पन्नमैकान्तिकं फलं यस्याः—न चान्येन फलान्तरेण दूष्यते—इहलोक-परलोकयोः शुद्धफला वा अव्याहतफला औत्पत्तिकी बुद्धिः ॥३६००॥

तस्या विषयप्रदर्शनार्थमुदाहरणानि—

---

१ "न शास्त्रव्यापारात् न कर्माभ्यासात् न अनुमानादिभिः"—कोट्या वृ०मु०पृ० ८५४ । २ परिमलो विमर्दनम्—विचारणा—चर्चादिकरणम् इति आशयः । ३ °ट्ठ-मस्सुयमवे° को दी हा म । ४ °लजोगिणि(णी) दी हा° लजोगा म । ५ संमयरहिय विसुद्धा ग° को । ६ इदम् 'अगृहीत'पदम् 'अदृष्ट'पदार्थबोधकं ज्ञेयम्

भरध मिल मेण्ढ कुक्कुड तिल वालुअ हत्थि अगड वणसंडे ।
[1]पेरमग्ग पत्त णेण्डियं[2] ख्वाडहिल्ला पंच पितरो य ॥३६०१॥
भरध मिल पणित रुक्खे [3]खुड्डगं पड सरड काक उच्चारे ।
गय [5]घयण गोल खंभे खुड्डग मग्गित्थि पति पुत्ते ॥३६०२[6]॥
मधुसित्थ मुद्दियंके[7] य णाणए भिक्खु चेडयणिधाणे ।
सिक्खा य अत्थसत्थे इच्छाय महं सतसहस्से ॥३६०३॥ दारं ।

भरध सिल पणित इत्यादि । तथा भरह सिल मेण्ढ कुक्कुड इत्यादि । आवश्यकचूर्ण्यामेतान्युदाहरणानि विस्तरेण ज्ञातव्यानि ॥३६०१-४॥[8]

अथ वैनयिकी बुद्धिर्व्याख्यायते—विनय(य) प्रयोजनमस्या विनयप्रधाना वा वैनयिकी। स विनयः—

विणयो गुरुयणसेवा सत्थं व गुरूवदेसियं तत्तो ।
जा तदणुसारतो वा संजा[२३७-प्र०]यति चिंतयंतस्स ॥३६०४॥

विणयो गुरुयणसेवा इत्यादि। गुरुशुश्रूषा विनयः, गुरूपदिष्टशास्त्रं वा विनयः, या तदनुसारा चिन्तयतः उपजायते सा वैनयिकी ॥३६०४॥

तस्याः लक्षणसूत्रम्—

भरणित्थरणसमत्था तिवग्गसुत्तत्थगहितपेयाला ।
उभयोलोगफलवती विणयसमुत्था हवति बुद्धी ॥६६७॥३६०५॥

कज्जं भरो त्ति गुरुअं णित्थरणं जं तदंतगमणं तु ।
धम्मातयो तिवग्गो अधवा लोगादयो तिण्णि ॥३६०६॥

---

१ पायस अतिया पत्ते खा° को दी हा म । २ अयं शब्दः छगलियालिंडीरूपमर्थं सूचयति । हरिभद्रवृत्तौ पृ० ४१७ प्र० 'लेंडियाओ' पदं न्यस्तम् , मलयगिरिवृत्तौ च 'छगलिया-लिंडीतो' पदं दर्शितम् । छगलियालिंडी नाम छागिकाया उच्चारः भाषायाम् 'लिंडी' इति पदेन प्रसिद्धः। अत्र मूलगाथायाम् क्वचित् पाठान्तररूपं 'णेण्डिय' इति पदं तत् ण-लयोरभेदात् 'लेण्डिय'-'लिंडी-अर्थस्य सूचकम् । ३ खेड्डुअ जे त । ४ "खुड्डगं नाम अङ्गुलीयकरत्नम् मलय० वृ० मु० पृ० ५१९ प्र० । ५ घयणो नाम विविधरूपकरणशीलो भाण्डः। ६ इयम् अनन्तरमेव ३६०१ अङ्कान्विता निर्दिष्टा गाथा लिखितपुस्तके ३६०२ गाथाया अनन्तरं लिपिकारेण असाव-धानतया द्विर्लिखिता परन्तु वृत्तिकारोऽपि नैनां द्विः निर्दिशति तथा हरिभद्रवृ० मलयगिरि वृ० अपि नैषा द्विर्निर्दिष्टा अतः निष्प्रयोजनत्वाद् अत्र अस्माभिरपि न स्वीकृता । ७ °के पणए सिक्खू य चे° म। ८ आवश्यकचूर्ण्यां मुद्रितानि (पृ० ५४४-५५२) उदाहरणानि द्रष्टव्यानि ।

**तस्सागमसुत्तत्थोवलद्धिसारं ति गहितपेयाला ।**
**इहपरलोगगतोभयफलभावातो फलवति त्ति ॥३६०७॥**

**भरणित्थरणसमत्था** इत्यादि । **कज्जं भरो त्ति गुरुअं** इत्यादि । **तस्सागम०** इत्यादि । भर इति गुरुकार्यं दुर्निर्वहत्वाद् भर इव भरः, तन्निस्तरणसमर्था–तस्य कार्यस्यान्तमयत्नेन गच्छतीति । त्रयो वर्गास्त्रिवर्गमिति, त्रिवर्गा लोकरूढाः–धर्मार्थकामाः, तदर्जनपरोपायनिबन्धनं सूत्रम्, तस्य व्याख्यानमर्थः, 'पेयालं' प्रमाणं सार. । सम्(त्रः) अर्थो गृहीतो यया सा त्रिवर्गसूत्रार्थगृहीतपेयाला । अथवा त्रिवर्गः अधस्तिर्यगूर्ध्वलोकाः, तत्प्ररूपक आगमः सूत्रम्, तस्यार्थः, तयोर्गृहीतः [सारो यया सा गृहीत]सारा । उभयलोकफलवती–विशुद्धगतिप्रापणात् फलवती ॥३६०५-७॥

तस्या उदाहरणानि पूर्ववत्[1]—

**णिमित्त अत्थसत्थे य लेहे गणिते य कूव अस्से य ।**
**गद्दभ लक्खण गंठी अगते गणिया य रहिए य ॥३६०८॥**
**सीता साडी दीहं च तणं अवसव्वगं च कोंचस्स ।**
**णिव्वोतए य गोणे घोडयपडणं च रुक्खाओ ॥३६०९॥ दारं ।**

**णिमित्त अत्थसत्थे य** । **सीता साडी**त्यादि ॥३६०८–९॥

अथ कर्मजा बुद्धिराख्यायते—

**जो णिच्चं वावारो तं कम्मं होइ सिप्पमितरं वा ।**
**जा तदणुसारतो होति जा य कालेण बहु[२३७–द्वि०]एणं ॥३६१०॥**

**जो णिच्चं वावारो** इत्यादि । नित्यव्यापारः कर्म, कादाचित्(त्कं) कर्म शिल्पम् । या कर्म कुर्वतः–तदनुसारादतिशयबुद्धिस्तद्विषयोपजायते–कर्माभ्यासात् बहुना कालेन सा कर्मजा ॥३६१०॥

तस्या लक्षणसूत्रम् –

**उवयोगदिट्ठसारा कम्मपसंगपरिघोलणविसाला ।**
**साधुक्कारफलवती कम्मसमुत्था हवति बुद्धी ॥६६८॥३६११॥**
**उवयोगोऽभिणिवेसो मणसो सारो य कम्मसब्भावो ।**
**कम्मे णिच्चब्भासो कम्मपसंगो त्ति[3] सत्ती वा ॥३६१२॥**

१ आवश्यकचूर्ण्यां मुद्रितानि (पृ० ५५३-५५६) उदाहरणानि द्रष्टव्यानि । २ °याला जे त । ३ हि तप्पभवो ॥ को बृ०मु०पृ० ८५३ गा० ३६३२ ।

**उवयोगदिट्ठसारा** इत्यादि । **उवयोगोऽभिणिवेसो** । उपयोजनमुपयोगः—कर्मणि तस्मिन् मनसोऽभिनिवेशः, मारस्तस्य कर्मणः सद्भावः परमार्थः, उपयोगेन दृष्टः सारो यया सा उपयोगदृष्टसारा-अभिनिवेशोपलब्धकर्मसद्भावा । प्रसङ्गोऽभ्यासः तच्छक्तिर्वा ॥३६११-१२॥

**परिघोलणं वियारो विण्णासो वा तधेण्णधा बहुधा ।**
**साधु कतं सुट्ठु त्ति य साधुक्कारो पसंस त्ति ॥३६१३॥**

**परिघोलणं वियारो** इत्यादि । परिघोलनं विचारः तस्य विन्यासो वा । बहुधा तेन परिघोलनेन विशाला विस्तीर्णा, साधु कृतं 'सुष्ठु कृतम्'इति वा प्रशंसा साधुकारः, तेन फलवती कर्मजा बुद्धिः ॥३६१३॥

अथवा **उवयोगदिट्ठसार** त्ति अन्यथा व्याख्यायते—

**चित्तोवयोगदाणा हि दिट्ठसार त्ति दिट्ठपरमत्था ।**
**कम्मप्पसंगपरिघोलणेहि[2] विउला विसाल त्ति ॥३६१४॥**

**चित्तोवयोगदाणा** हीत्यादि । अथवा उपयोगो ज्ञानमेव चित्तस्स(स्य) चावहितत्वम्—कर्मणि प्रणिधानमित्यर्थः। तत्कर्मणि चित्तप्रणिधाना । दृष्टः सारः सपरमार्थो यया सा उपयोगदृष्टसारा । प्रसङ्ग-परिघोलने व्याख्यातार्थे । विपुला विशाला—अनेकार्थविषया ॥३६१४॥

**[3]साधु त्ति बहुजणातो णियतं च फलं ति तप्फलवती सा ।**
**तेण व सेसं पि फलं तीसे तप्फलवती तो सा ॥३६१५॥**

**साधु त्ति बहुजणातो** इत्यादि । 'साधु साधु'इति बहुजनप्रशस्ता । भूम-निन्दा-प्रशंसासु मत्वर्थीय इति बहुना प्रशस्तेन च फलेन च युक्ता इति फलवती । साधुकारेण ता(वा)शेषफलं यस्याः सा फलवती ॥३६१५॥

तस्या उदाहरणानि पूर्ववत्[4]—

**हेरण्णिए करिसए कोलिय [5]दोए य मुत्ति घत पवए ।**
**[6]तुण्णाए [7]वड्ढगी पूविए य घड चित्तकारे अ ॥६६९॥३६१६॥ दारं ।**

---

१ तद° को । २ °णेहिं सुवियारविन्थिण्णा ॥ को बृ० मुद्रित पृ० ८५३ गा० ३६३४ । ३ विउसेहिंतो संसं सुट्ठु कयं साहुकारओ अहवा । सेसं पि फलं तेण उ तीसे को बृ० मु० पृ० ८५३ गा० ३६३५ । ४ आवश्यकचूर्णौ मुद्रितानि (पृ० ५५६-५५७) उदाहरणानि ज्ञेयानि । ५ डोवे को·दी हा म । ६ °ण्णाग को दी हा, °उन्नाग म । ७ वु° दी ।

**हेरण्णिए करिसए** इत्यादि ॥३६१६॥

अथ पारिणामिका(की) बुद्धिः—

**[1]परिणामो पुव्वावरसुदीहकालावलोअणं मणसा ।**
**एगग्गस्स ततो जा संजायति जा य कज्जाणं ॥३६१७॥**

**परिणामो पुव्वावर०** इत्यादि । परितः समन्तात्, नमनं परिणामः—सुदीर्घकालात् पूर्वाऽपरार्थावलोकनम्—मनसा चिन्तनम्, तत एकाग्रस्य—एकालम्बनस्याभिनिविष्टचेतसो—यो जायते परिणामः, कायपरिणामाद्वा(मो वा)। परिणामः प्रयोजनमस्या इति पारिणामिकी ॥३६१७॥

तस्याः लक्षणसूत्रम्—

**[२३८-प्र०]अणुमाणहेतुदिट्ठंतसाधिया वयवि[2]वक्कपरिणामा ।**
**हितणिस्से[3]सफलवती बुद्धी परिणामिआ णाम ॥६७०॥३६१८॥**
**इध लिंगियमणुमाणं सपरप्पच्चायगं मतं णाणं ।**
**हेतु त्ति कारगो जो कुंभातीणं व पिण्डादी ॥३६१९॥**

**अणुमाणहेतुदिट्ठंतसाधिया** इत्यादि । **इध लिंगियमणुमाणं** इत्यादि । त्रिरूपाल्लिङ्गादर्थदर्शनमनुमानमिति। अन्ये "निर्दिष्टं हेतु[मनु]मानम्" [ ] इति व्याचक्षते । तत्रानुमीयते[ऽने]नेति हेतुरेवानुमानम् । किं पुनर्हेतुः पृथगुच्यते ? आहाचार्यः—इह लैङ्गिकमनुमानम्, ज्ञापको हेतुः परप्रत्यायनार्थत्वात् । स्व-परप्रत्यायकं तु [4]ज्ञान[मनुमान]मुच्यते, हेतुरिति कारक एव, हेतुः मृत्पिण्ड इव कुम्भादीनाम्, बीजमिवाङ्कुरस्य । अयं हेतोरनुमानस्य च भेदः ॥३६१८-१९॥

अथवा अन्यो भेदः—

**होज्जत्थलक्खणं वाऽणुमाणमिह वयणलक्ख[5]णं हेतू ।**
**अणुमाणहेतुभेतो सपरप्पच्चायणकतो वा ॥३६२०॥**

**होज्जत्थलक्खणं वाऽणुमाण**मित्यादि । इह आत्मप्रत्यायनार्थम् अर्थात्मकमनुमानं धूमादग्निज्ञानवत् । परप्रत्यायनार्थं तु वचनात्मकं पक्ष-हेतु-दृष्टान्तवचनं प्ररूपितम्। तत्र त्रिलक्षणो हेतुः—पक्षधर्मः, सपक्षेऽस्ति, विपक्षा(क्षाद्) व्यावृत्त इति अनुमानस्य हेतोश्च भेदः । त्रिलक्षणत्वेपु उभयः(योः) स्व-परप्रत्यायनकृतो भेदः ।

१ आ दीहकालपुव्वावरचिंतणओ भवे सयं म° को मु० वृ०पृ० ८५३ गा० ३६३७ । एषा[३६१७] गाथा हा० म० न दृश्यते मुद्रिता । २ विवागप° दी हा म । ३ °स्सेअस० को दी हा म । ४ अत्र तुलनीयमेतत्-"इह लैङ्गिकं स्व-परप्रत्यायकं ज्ञानम् अनुमानं मतम्"-कोट्या० वृ० मु० पृ० ८५६। ५ °णो को ।

"स्वनिश्चयवदन्येषां निश्चयोत्पादनेच्छया । पक्षधर्मत्वं सम्बन्धसाध्योक्तेरन्यवर्जनम्" ॥ [प्रमाणसमु० ]इति वचनात् ॥३६२०॥

**दिट्ठंतो णिदरिसणं साधम्मेतरविधाणतो तेहि ।**
**सज्झं साधेति तई वयपरिणामे य पाएणं ॥३६२१॥**

**दिट्ठंतो णिदरिसणं ।**

"साध्येनानुगमो हेतोस्साध्याभावे च नास्तिता ।

व्याप्यते यत्र दृष्टान्तः स [साधर्म्येतरो] द्विधा" ॥ [ ] इति उपात्तैकवस्तुको घटवन्निदर्शनमित्युच्यते, अनुपात्तै[क]वस्तुकस्तु–यत्र यत्र धूमः तत्राग्निरिति–अन्वयानुगममात्रनिदर्शनम् । तैरनुमान-हेतु-दृष्टान्तैः साध्यमर्थं साधयतीति अनुमान-हेतु-दृष्टान्तसाधिका । वयोविपाके परिणामोऽस्याः प्रायेणेति वयोविपाकपरिणामा ॥३६२१॥

**सा होति तेण वा पारिणामिगी हितफलं इध परे य ।**
**णीसेसं च सिवसुहं तीसे तप्फलवती तो सा ॥३६२२॥**

**सा होति तेण वा पारिणामिगी ।** वयःपरिणामा(माद्) ज्ञातेति पारिणामिकी । तद् इह-परलोकसुखसाधनम् । निःश्रेयसं च सर्वदुःखद्वन्द्वोपरमाव्व वित(माच्च हित)निःश्रेयसस्य फलवती पारिणामिकी बुद्धिरिति ॥३६२२॥

एतस्या उदाहरणानि[1]—

**अभए सेट्ठि कुमारे देवी उदितोतए हवति राया ।**
**साधू य णंदिसेणे धणदत्ते सावग अमच्चे ॥६७१॥३६२३॥**
**[2]खमए अमच्चपुत्ते चाणक्के चेव थूलभद्दे य ।**
**णासिक्कसुंदरीणंदे वइरे परिणामिया बुद्धी ॥६७२॥३६२४॥**
**[२३८–द्वि०]चलणाहण[3] आमण्डे मणी य सप्पे य खग्गे[4] थूभिन्दे ।**
**परिणामिय-बुद्धीए[5](उ) एवमाती उदाहरणा ॥३६२५॥ दारं ।**

**अभए सेट्ठि कुमारे** इत्यादि । अनया चतुर्विधया बुद्ध्या सम्पन्नाः अभिप्रायसिद्धाः, सातिशयबुद्धित्वात्, भरक(त)रोहक-रथ्वि(थि)क हेरण्णि(हैरण्यि)काऽभय-श्रेष्ठ्यादिवत् ॥३६२३–२५॥

अथ तपःसिद्ध उच्यते—

---

१ एतानि उदाहरणानि आवश्यकचूर्ण्याम्-पृ०५५७ प्र०–५६८–द्वि० । २ खव° **दी हा** । ३ °हय **दी हा** । ४ °ग्गि **दी हा**, °ग्गी **म** । ५ °ए एवदिया होंतुदाहरणा **को मु०वृ०** पृ० ८५४ नि० गा० ९५१॥

**ण किलम्मति जो तवसा सो तवसिद्धो दढप्पहारि व्व । दारं ।**
**सो कम्मक्खयसिद्धो जो सव्वक्खीणकम्मंसो ॥३६२६॥**

**ण किलम्मति जो तवसा** इत्यादि । न[1] कम्पते महताऽपि तपश्चरणेन स सिद्धः, अग्लानित्वात्, दृढप्रहारिवत् । यस्य सर्वकर्माः(कर्माणि) क्षीणाः(क्षीणानि) भवन्ति स कर्मक्षयसिद्धः भावसिद्धश्च, सितध्वंसित्वात् । सितम्- कर्माष्टविधम्-बद्धमित्यर्थः, तद् ध्वंसयितुं शीलमस्येति सितध्वंसी सिद्धः, परिनिष्ठितकर्मत्वाद्वा समुद्घातानन्तरकृत-योगनिरोधशैलेशीप्राप्तपञ्चह्रस्वाक्षरकालब्धसिद्धस्वरूपवत् ॥३६२६॥

कथं पुनः सितध्वंसिद्धं(त्वं) पक्षधर्म इति ? कथं वा दृष्टान्तसिद्धिरिति ? तन्निरूपणाय गाथाप्रपञ्चः—

**दीहकालरयं जं-तु-कम्मं से सितमट्ठधा ।**
**सितं धंते त्ति सिद्धस्स सिद्धत्तमुपजायति ॥६७३॥३६२७॥**
**णाऊण वेतणिज्जं अतिबहुअं आउअं च अतिथोवं[2] ।**
**गंतूण समुग्घातं खवेति[3] कम्मं णिरवसेसं ॥६७४॥३६२८॥**
**दंड कवाडे मन्थन्तरे य सींहरणता[4] सरीरत्थे ।**
**भासा जोग णिरोधे सेलेसी सिज्झणा चेव ॥६७५॥३६२९॥**
**जध उल्ला [5]सादीया आसुं [6]सुक्खति विरल्लिता संती ।**
**तध कम्मलहुअसमए वचन्ति जिणा समुग्घातं ॥६७६॥३६३०॥**

**दीहकालरयं जं-तु-कम्ममित्यादि** गाथाचतुष्टयम् ॥३६२७–३०॥

तस्य व्याख्यानगाथा—

**संताणतो अणाती दीहो ठितिकाल एव बंधातो ।**
**जीवाणुरंजणातो रयो त्ति जोगो त्ति सुहुमो वा ॥३६३१॥**

**संताणतो अणातीत्यादि** । सन्तानतोऽनादिर्बन्ध इति कृत्वा दीर्घः–बन्ध–कालोऽस्येति दीर्घकालम्, जीवानुरञ्जनाद् रजः कर्मैवोच्यते । दीर्घकालं च तद् रजश्च तदिति दीर्घकालरजः । अथवा रयो वेगोऽनुभवः फलम्, दीर्घकालो रयोऽस्येति

---

१ "न कलामति-न क्लमं गच्छति"-हरिभ० वृ० पृ० ४३८ गा०९५२। "न क्लाम्यति-न क्लमं गच्छति"—मलय०वृ०पृ०५३४गा०९५२ । २ थोवागं **को हे त दी हा म** । ३ खवंति **दी हा** । ४ साहणया हे, साहारणा त, संहर° म । ५ साडीया **को हे दी हा म** । ६ सुक्क° **को हे दी हा म त** ।

वा दीर्घकालरयम्, सन्तानानुभवात्। अथवा रज इव रजः सूक्ष्मतया स्नेहबन्धनयोग्यत्वाद् वा 'रजः' इत्युच्यते ॥३६३१॥

**[२३९-प्र०]सो जस्स दीहकालो कम्मं तं दीहकालरयमुत्तं ।**
**अतिदीहकालरंजणमथवा चेट्ठाविसेसत्थं ॥३६३२॥**

**सो जस्स दीहकालो** इत्यादिर्गतार्था । चेष्टाविशेषणार्थं रजो(यो) वेग इत्युक्तम् । स दीर्घकालो वेगः—रयः—चेष्टा—यस्य तद् दीर्घकालरयम् ॥३६३२॥

**जं कम्मं ति तु सद्दो विसेसणे पूरणेऽथवा जीवो ।**
**जंतु त्ति तस्स जंतो कम्मं से जं सितं बद्धं ॥३६३३॥**

**जं कम्मं ति 'तु' सद्दो।** 'यत्'[1]शब्दः सर्वनामत्वाद् उद्देशवचनः—यत् कर्म एवंविधम्। 'तु'शब्दो विशेषणे—भव्यजीवविशेषणार्थः। अभव्येषु दीर्घकालरयमे (ए)व सर्वदानात्मयते—(सर्वथा नाऽऽध्मायते—) तं(तद्) न क्षप्यते इत्यर्थः। अथ एतद् भव्यजीवविशेषणं प्रवचनारम्भेणैव गतम् **"भव्वस्स मोक्खमग्गाभिलासिणो"** [विशेषा० स्वो० वृ० भा० गा० ४ पृ० २] इत्यारम्भात्। ततः 'तु'शब्दः पादपूरणार्थः । अथवा नैवायं 'यत्' शब्दः, न चा(वा) 'तु'शब्दः, किं तर्हि? शब्दान्तरमेवेदम्—'जन्तु' शब्दो 'जीव'पर्यायः, तस्य जन्तोः कर्म **'जं'** कर्म **'से'** इति तस्य इत्यर्थः। सितं बद्धम् "[2]षिध(षिञ्) बन्धने" तस्य निष्ठान्तस्य 'सितम्' इति भवति ॥३६३३॥

**अथवा सेऽसितमसियं गहियं वत्तमइसंसिलिट्ठं वा ।**
**जं वा वि-सेसितं अट्ठध त्ति खयसेसितं व त्ति ॥३६३४॥ दारं।**

**अथवा सेऽसितमसियमित्यादि ।** अथवा **'से'** असितम् कृष्णम्—सर्वमेव कर्म संसारानुबन्धित्वात् कृष्णम् अशुभमित्यर्थः। अथवा "यो'('षो[4]') अन्तकर्मणि" सितम्-गृहीतं व्याप्तं वा अथवा "श्लिष संश्लेषणे"[चौरादिकः]**'सेसितं'** श्लेषितम्—

१ "यच्छब्दः उद्देशवचनः सर्वनामत्वात्, 'तुः'...इति भव्यकर्मविशेषणार्थः अभव्यकर्मणः सर्वथा ध्मातत्वासंभवात्—कोट्या० वृ० मु० पृ० ८५८ पं० १। "यतो न अभव्यकर्म सर्वथाऽऽध्मायते" हरिभ० वृ० पृ० ४३९ प्र०। मलय० वृ० पृ०५३४ द्वि० तथा ५३५ प्र०। २ स्वादिगणे पञ्चमे, क्र्यादिगणे नवमे वा। ३ °इकिलि° जे। ४ यद्यपि 'षो' धातुः अन्तकर्मणि—विनाशरूपे अर्थे धातुपाठे वर्तते, स एव च वृत्तिकारेण निर्दिष्टः तथापि धातूनामनेकार्थत्वात् अयमर्थः 'षो' धातोः बोध्यः। 'षो' धातुः दैवादिको ज्ञेयः।

अतिसंश्लिष्टम् अथवा वि¹शेषितं "शिष असर्वोपयोगे" [चौरादिकः]'अष्टविध' इत्येवं विशेषितम् अथवा शेषवृत्तं शेषितं पूर्वनिर्जरया यन्(यद् न) क्षपितम्–शेषं वर्तितम्–तत् शेषितम् इदानीं क्षप्यत इति क्षयस्य शेषितम् ॥३६३४॥

²णेरुत्ततो सितं धंतमस्स तवसा³ मलो व्व लोहस्स ।
इति सिद्धस्सेय सतो सिद्धत्तं सिज्झणा समए ॥३६३५॥

**णेरुत्ततो** । तदेवंप्रकारं सितं कर्म ध्मातं यस्य स सिद्ध इति पृषोदरादि-निपातनात् नैरुक्तविधिना वा अक्षरसामान्यादपि । तत् केन ध्मातम्–केन दग्धमिति ? आह–तपसा मनोग्निना लोहमलवत् इति सिद्धः सः । **सिद्धत्तं उवजायति** [३६२७] त्ति । एवं कर्मदहनानन्तरं सिद्धस्यैव सत· सिद्ध[त्व]मुपजायते, नासिद्धस्य । "भव्यासिद्धो न सिध्यति" [ ]इति वचनात् सिद्ध एव सिध्यति ॥३६३५॥

अथ कथमुच्यते सिद्धत्वमुपजायत इति ? तज्जन्मना कृतकत्वात् सिद्धस्य विनाशेनापि भवितव्यमिति । उच्यते —

उवजायति त्ति ववहारदेसणमभावताणिसेधो वा ।
पज्जायंतरविगमे तप्पज्जायंतरं सिद्धो ॥३६३६॥

**उवजायति त्ति ववहारदेसण**मित्यादि । इह जीवस्य सिद्धत्वं स्वाभाविको धर्मः–कर्मभिरावृतत्वात्–तिरोभूत आसीत् । तेषां कर्मणां पुरुषकारेणापगमः कृत इति कर्मापगमः–कर्मनिर्जरणम्–जीवकर्मविश्लेषः क्रियते । तदावरणविगमानन्तरं स्वरूपा-वस्थानं सिद्धत्वं प्रकटीभवति केवलम्, नापूर्वमुपजायते, तथापि तु लौकिकवाचो-युक्त्या व्यवहारादेशनयात् 'उपजायते' इत्युच्यते, न निश्चयनयात् । व्यवहारवचनं चात्र परमार्थवेलायां सार्थकम् अभावनिषेधार्थम् ।

कैश्चिदुक्तम्–"प्रदीपनिर्वाणवन्निर्वाणप्राप्तिः सिद्धत्वमभावीभवनम्" [ ] तन्निवार-णार्थम्-सिद्धत्वमुपजायते-प्रकटीभवति ज्ञान-शम-वीर्य-दर्शन-सुखतत्त्वात्, सावस्थानात्, भव्यत्वपर्यायविगमानन्तरं सिद्धत्वपर्यायान्तरप्रतिलाभा(भात्) । सिद्धः सत्पदार्थः, एकपदनामसिद्धेः, सत्प्रतिषेधात्, सतस्तथौपम्यात् । यत्(यः) सर्वथा ननासः (अनाशः) सत्प्रतिपक्षश्च यदभावः सः पदार्थविषयः सिद्धशब्दः, शुद्धैकनामपदत्वात्,

---

१ मूलगाथायाम् 'जं वा वि सेसितं' इत्येवं चत्वारि पदानि । 'विशेषित'अर्थदर्शनाय 'जं वा विसेसितं' इत्येवं त्रीणि एव पदानि बोध्यानि । २ °रुत्तिओ को, °रुत्तियं हे त । ३ जीवस्स को ।

रूपशब्दवत्। तथा विद्यमानार्थविषयः सिद्धशब्दः, क्वचित् प्रतिषिध्यमानार्थत्वात्, ब्राह्मणशब्दवत्। 'नास्ति सिद्धः' इत्यत्र सिद्धशब्दः विद्यमानार्थः, अनुपचरितशुद्धैकपदत्वे सति प्रतिषेधसम्बन्धित्वात्, ब्राह्मणशब्दवत्, तथा मुख्यार्थेनार्थवान् सिद्धशब्दः क्वचिदुपर्मीयमानार्थत्वात्, चन्द्रशब्दवत्। तथा अपरिनिष्ठितसन्तान एव सर्वः पदार्थः, कथञ्चिद्विनाशित्वात्, घटवत् प्रदीपवच्च विद्युदादिष्वपि सूक्ष्मपुद्गलसन्तानास्तित्वात्। तथा 'असिद्धम्' इत्ययमर्थः सत्पदार्थप्रतिपक्षवान्, अभावत्वात्, अघटार्थवत् ॥३६३६॥

**कम्मचतुक्कं कमसो समं ति खयमेति तस्स भणितम्मि ।**
**समयं ति कते भासति कत्तो तुल्लट्ठितीणियमो ? ॥३६३७॥**

**कम्मचतुक्कं** । कर्मचतुष्कम्–वेदनीयम् आयुः नाम गोत्रं चेति। यस्य भावत एव कथमपि समस्थितीति(नि) तस्य सममेव क्षयमुपयान्ति–युगपदित्यर्थः ॥३६३७॥

न तत्र समुद्घातकरणप्रयत्नः कस्यचित् ? इत्युक्ते ब्रवीति कुतस्तुल्यस्थितिनियमः ?

**किह व अपुण्णठितीयं खवेतु कत्तो व तस्समीकरणं ।**
**कतणासादिभयातो नो तस्स कमक्खयो जुत्तो ॥३६३८॥**

**किह व अपुण्णठितीयं** इत्यादि । कथं वा अपूर्णस्थितिकालं कर्म क्षयमुपगच्छेत् ? कथं वा तस्यान्यैः कर्मभिः समीकरणम् ? यतः एकत्र कृतनाशः प्राप्नोति अधिकखण्डनात्। अन्यत्र अकृतागमः प्राप्नोति ऊनस्य संवर्द्धनात्। तस्माद् यथास्थितिकालमेव क्रमशस्तेषां क्षयो युक्त इति चोदकमतम् ॥३६३८॥

अत्र आचार्येण—

**भण्णति कम्मक्खयम्मि जताऽऽयुमादीय तस्स णिट्ठेज्ज ।**
**[२३९–द्वि०]तो कधमच्छतु स भवे सिज्झतु व कधं सकम्मंसो ॥३६३९॥**

**भण्णति कम्मक्खयम्मि** । भण्यतेऽत्र–कर्मक्षयकाले यदि आयुष्क-वेदनीय-नाम-गोत्राणाम् एकस्य द्वयोर्वा अधिकत्वे तदूनं सत् आदावेव प्रथमतरं क्षीयेत, ततोऽसौ जीवः जीवनाधारत्वादायुष्कविगमे कथं तिष्ठेत् शेषकर्मानुभावार्थम् ? अथ न तिष्ठति किं तर्हि तदायुष्कविगमात् सिध्यते(ति) ? ततः कथमसौ सावशेषकर्मा सिध्यतु ? "सर्वकर्मक्षये सिद्धिः"[ ]इति वचनात् ॥३६३९॥

तस्मात् कश्चित् प्रयत्न आस्थेयः, स चायम्—

१ °वेइ त। २ कम्म° को। ३ ऽजु° को। ४ जयाऽऽऽउराईए को। ५ °माईए हे, °माईइ त। ६ तत्त्वार्थसूत्रे तु "कृत्स्नकर्मक्षयो मोक्षः" १०,३ इति वचनम्।

तम्हा तुल्लठितीयं कम्मचतुक्कं सभावतो जस्स ।
सो अकतसमुग्घातो सिज्झति जुगवं खवेतूणं ॥३६४०॥
जस्स पुण थोवमायुं हवेज्ज सेसं तियं च बहुतरयं ।
तं तेण समीकुरुते गंतूण जिणो समुग्घातं ॥३६४१॥

**तम्हा तुल्लठितीयं** इत्यादि । **जस्स पुण थोवमायुं** इत्यादि । तस्माद् यस्य कर्मचतुष्कं स्वभावत एव तुल्यस्थितिकम्-न प्रयत्नेन समीकृतम्, स्वभावेनैव बद्धमीदृशमिति-स किलाकृतसमुद्घातः सिध्यति युगपत् कर्मक्षयस्य स्वयमेव जाति(त)त्वात् । यस्य पुनः स्तोकमायुष्कं भवेत् शेषकर्मत्रिकं च बहुतरम्, स तत् त्रिकं तेनायुषा सह समीकुरुते-स च जिनोऽवश्यमेव केवली मान्यः-गत्वा समुद्घातं वक्ष्यमाणलक्षणम् ॥३६४०-४१॥

कतणासातिविघातो कतो पुरा जध य णाणकिरियाहि ।
कम्मस्स कीरति खयो ण चेदमोक्खातयो दोसा ॥३६४२॥

**कतणासातिविघातो** इत्यादि । नन्वेवं समुद्घातगमन(ने) जिनानाम्[अ])कृतागमादयो दोषाः प्राप्नुवन्ति । मा प्रापन्, पुरा अन्यस्मिन् स्थाने तद्दोषाणां कृतो विघात इति पुनरुक्तभयाद् ग्रन्थगुरुताप्रसङ्गाच्च नेहोपन्यासः । यथा च ज्ञान-क्रियाभ्यां न य(स च) क्रियते तथाप्युक्तम् । अन्यथा चेदं(द)मोक्षादयो दोषाः ॥३६४२॥

असमट्ठितीण णियमो को थोवं आउअं ण सेसं ति ।
परिणामसभावातो अद्धुवबन्धो व तस्सेव ॥३६४३॥

**असमट्ठितीण णियमो** । कोऽत्र चोदयति ? यस्याऽसमस्थितीनि कर्माणि तत्र को नियमः ?-अवश्यमेवायुषा न्यूनेन भवितव्यं न पुनः शेषैरिति । उच्यते, बन्धपरिणामस्वाभाव्यात् । अपि च प्रमाणम्- वेद्य-मान(नाम)-गोत्रेभ्यस्त्रिभ्योऽपि [3]स्तोकमायुष्कमेव, स्तोकबन्धकालत्वात्, एकसमयबहुपुद्गलवत् । स्तोकबन्धकालत्वं प्रसिद्धं सिद्धान्ते, अध्रुवबन्धत्वादायुष्कस्येति ॥३६४३॥

विसमं स करेति समं समोहतो बन्धणेहि ठितिए य ।
कम्मदव्वाइं बन्धणाइं कालो ठिती तेसिं ॥३६४४॥

---

१ तयं हे त । २ "कृतनाशाकृताभ्यागमदोषविघातश्च" को० मु० वृ० पृ० ८६३ गा० ३६६२ । ३ स्तोकमायुष्कमायुष्कमेव इति त प्रतौ ।

**विसमं स करेति समं।** विषमं कर्मत्रिकं समं करोति, आयुष्कस्य केन साम्यम्? बन्धनैः स्थित्या च। तत्र बन्धनानि कर्मद्रव्याणि, तैर्बध्यते रज्जुभिरिव जीव इति। स्थितिः पुनस्तेषामेवावस्था[न]कालः। यस्यैतद् द्वितयं समं स समुद्घातमेव नागच्छति। यस्य तु विषमं स स्थित(ति)कालमेव समीकरोति[1] न बन्धनानि ॥३६४४॥

यत एवमुच्यते —

**आयुअसमयसमाए गुणसेढीय तदसंखगुणिताए।**
**पुव्वरइतं खवेहिति जध सेलेसीय पतिसमयं[2] ॥३६४५॥**

यावदायुष्कं शेषमवतिष्ठते तावद्भिः समयैः समा तेषामपि त्रयाणां स्थितिः। सा च तेषां गुणश्रेणिरुच्यते–असंख्येयगुणाकारगुणेनाभ्यावृत्त्या गुणश्रेणिरिति। सा चायुष्कसमयसमा कालतः, आयुष्कस्य च प्रथमसमये बहून्यायुष्कद्रव्याणि, द्वितीयसमये स्तोकानि, तृतीयसमये स्तोकतराणि, चतुर्थसमये स्तोकतमानीति परिहाण्याऽऽयुष्कचरि(र)मसमये स्तोकतमान्यतिशयेनेति ऊर्ध्वं गोपुच्छाकृति त्र्यश्रि क्षेत्रं समयबिन्दूपलक्षितम्–▲। एतदेव विपर्ययेण शेषकर्मत्रयस्य अधो गोपुच्छा[कृ]ति त्र्यश्रि क्षेत्रम्– △ △ △ △ यान्यायुष्कस्य प्रथमसमये लिखितानि तत् समालिखित्वा(लिख्य) द्वितीयादिसमयादावायुष्कस्य दी(ही)नतराणीति दी(ही)नतराणीति शेषाणामसंख्येयगुणवृद्धिमन्ति लेख्यानीति। एवं बुद्धिपूर्वमिव शैलेशीप्रतिपत्तिकालात् पूर्वतरं रचितं विशुद्धकेवलज्ञानेन ज्ञात्वा शैलेशीप्रतिपन्नः प्रतिसमयं यथा क्षपयिष्यति तथोऽन्नेष्यामः। यदुक्तम्–"**तत्र कम्मलहुअसमए वच्चंति जिणा समुग्घातं**"– [विशेषा०भाष्य०वृ० पृ० ७१९ गा० ३६३०] इति ॥ ३६४५ ॥

कर्मलघुतायाः समयं(यः) कालः कर्मलघुतासमयः, स क्रिया(य)त्प्रमाणः? इत्याचार्यमतभेदेनोच्यते—

**कम्मलहुताय समयो भिण्णमुहुत्तावसेसओ कालो।**
**अण्णे जहण्णमेत्तं[3] छम्मासुक्कोस[२४०–प्र०]मिच्छंति ॥३६४६॥**

---

१ अस्य वाक्यस्य स्पष्टीकरणाय दर्शनीयोऽयमुल्लेखः–"स समवहतः केवलिसमुद्घातगतो जीवः....विषमं वेदनीयादिकर्मत्रयमपवर्तमानः...आयुष्केण समं करोति। कैः कृत्वा समं करोति? इत्याह–बध्यते—जीवो यैस्तानि बन्धनानि तैर्बन्धनैः कर्मद्रव्यैः, स्थित्या च काललक्षणया" हे० वृ० पृ० ११८७। कोट्या० वृ० मु० पृ० ८६३–८६४। २ अत्रापि वृत्तिकारेण वृत्तौ संपूर्णा गाथा निर्दिष्टा। ३ °मेयं को हे त।

**कम्मलहुताय समयो** इत्यादि । कर्मभिर्लघुता–कर्मलघुता अनन्तरभाविनीति भाविनि भूतवदुपचारं कृत्वा अनागते समुद्घाते कर्मलघुतोक्ता। तस्याः कः कालः ? कियत्यायुषि शेषे समुद्घातं जिनाः प्रतिपद्यन्त इति ? केचिदाहुः "भिन्नमुहूर्त्तावशेषायुष्कस्येति भिन्नमुहूर्त्ताव[शेष]कालः"। अन्ये पुनराहुः "सत्यम्, स तु सर्वजघन्य', नत्वयमेव नियमः किन्तु यतः षण्मासावशेष उत्कृष्टं कालः" इति ॥३६४६॥

तच्च तेषां षण्मासावशेषायुष्ककालवादिनामाचार्याणां स्वागमेनैव वचनं विरुध्यते इति निवारयन्नाह—

**तं [1]णोऽणन्तरसेलेसिवयणतो जं च पाडिहारीणं [2]।**
**पच्चप्पणमेव सुते इधरा गहणं पि होज्जाहि ॥३६४७॥**

**तं णोऽणन्तरसेलेसिवयणतो** इत्यादि । तं(तद्) नेति, कुतः ? आगमविरुद्धत्वात्। स चायमागमः- समुद्घातानन्तरं शैलेशीप्रतिपत्तिकाल इति पञ्चह्रस्वाक्षरकाला शैलेशी, ततो मोक्ष एव [इति] कथं समुद्घातं षण्मासावशेषायुर्गच्छेदिति ? अन्यदपि वचनान्तरम्–समुद्घातप्रत्यागत्या समुपसंहृतात्मा देहमात्रे स्थित्वा प्रत्याहरणीयगृहीतफलकादिप्रत्यर्पणं करोति शैलेशिं(शीं) प्रतिपत्तुः(त्तु)कामः निःसङ्गोऽहमिति। यदि तु समुद्घातप्रत्यागतस्यापि दीर्घमेवायुष्कं षण्मासमात्रम् ततः प्रत्याहरणीयफलकादिग्रहणविधिरप्युक्तोऽभविष्यत्, न चोक्तं(क्तः), प्रत्यर्पणमेव निःसङ्गताप्रदर्शनार्थमभिहितम् । अतस्तेषामागमविरोधात् षण्मासवचनं 'न' इति स्थापितम् ॥३६४७॥

भिन्नमुहूर्त्त एव विशेषः स्थित इति तत्र समुद्घातशब्दार्थः—

**तत्थाउअसेसाहियकम्मसमुग्घातणं समुग्घातो ।**
**तं गंतुमणो पुव्वं आवज्जीकरणमब्भेति ॥३६४८॥**

**तत्थाउअसेसाहि॰** इत्यादि । आयुष्कादवशेषाणि आयुष्कावशेषाणि, तेषां यदधिकं तस्य कर्मणः समुद्घातनम्–प्राबल्येन घातनम्–खण्डनम्–निर्जरणम् । समुद्घातं गन्तुमनाः तं प्रारभमाणः पूर्वमावर्जीकरणमभ्येति ॥३६४८॥

तस्य लक्षणम्—

**आवज्जणमुवयोगो वावारो वा तदत्थमादीयं ।**
**अंतोमुहुत्तमेत्तं कातुं कुरुते समुग्घातं ॥३६४९॥**

---

१ णा हे । ना त । २ °हेराणं को हे, °हेरीणं त ।

**आवज्जणमुवयोगो** । आवर्जनमावर्जः–अभिमुखीकरणम्–अभ्यासनयनम्–उदयावलिकायां प्रक्षेपः । अनावर्जस्याभूततद्भावात् विः(द्विः) आवर्जीकरणम्, तत्रोपयोगः तद्व्यापारः, स च समुद्घातगमनाय तदादावन्तर्मुहूर्त्तमात्रं भवति, ततः समुद्घातं गच्छति ।।३६४९।।

तस्य चायं क्रमः—

**उड्ढाहायतलोगतगामिणं सो सदेहविक्खम्भं ।**
**पढमसमयम्मि डंडं करेति वितियम्मि य कवाडं ।।३६५०।।**

**उड्ढाहायतलोगंतगामिणं** इत्यादि । तत्र प्रथमसमये स्वदेहविष्कम्भतुल्यविष्कम्भम् ऊर्ध्वमधश्चायतं उभयतोऽपि लोकान्तगामिनं जीवप्रदेशसंघातदण्डं दण्डस्थानीयं केवलज्ञानाभोगतः करोति, द्वितीयसमये तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणात् पार्श्वतो लोकान्तगामिकपाटं करोति ।।३६५०।।

**ततियसमयम्मि मंथं चतुत्थए लोअपूरणं कुणति ।**
**पडिलोमं साहरणं कातुं तो होति देहत्थो ।।३६५१।।**

**ततियसमयम्मि मंथं** इत्यादि । तृतीयसमये तदेव कपाटं दक्षिणोत्तरदिग्द्वयप्रसारणात् मन्थसदृशं मन्थानं करोति लोकान्तप्रापितमेव । एवं च लोकस्य प्रायो बहु पूरितं भवति, मन्थान्तराण्यपूरितानि अनुश्रेणिगमनात् । चतुर्थे तु समये तान्यपि मन्थान्तराणि सह लोकनिष्कुटैः पूरयति । ततश्च सकलो लोकः पूरितो भवति । तदनन्तरमेव पञ्चमे समये यथोक्तक्रमात् प्रतिलोमं मन्थानान्तराणि संहरति, जीवप्रदेशान् सकर्मकान् संकोचयति, षष्ठे समये मन्थानमुपसंहरति, घनतरसंकोचः, सप्तमे समये कपाटमुपसंहरति दण्डात्मनि संकोचात्, अष्टमे समये दण्डमुपसंहृत्य देहस्थ एव भवति–देहप्रमाणसंकोच इत्यर्थः ।।३६५१।।

तस्येदानीं समुद्घातगतस्य योगव्यापारश्चिन्त्यते–ते च मनोवाक्काययोगास्त्रयः, तेषां कः कदा व्याप्रियते ? ये(ए)ते उच्यन्ते—

**ण किर समुग्घातगतो मण-वइयोगप्पओयणं कुणति ।**
**ओरालियजोगं पुण जुंजति पढमऽट्ठमे समए ।।३६५२।।**
**उभयव्वाव।।तो तं मीसं वितिय-छट्ठ-सत्तमए ।**
**ति-चउत्थ-पंचमे कम्मयं तु तम्मत्तचेट्ठातो ।।३६५३।।**

१ °वाय° जे ।

**ण किर समुग्घातगतो।** 'किल' शब्द आगमप्रदर्शनार्थः । समुद्धाते मनोवाग्योगव्यापाराभाव एव, निष्प्रयोजनत्वात्, कारणाभावाच्च। शरीराद् बहिरिति काययोगव्यापारः केवलः, तत्र प्रथमाष्टमसमययोरौदारिककायव्यापारप्राधान्यादौदारिक एव योगः, द्वितीय-षष्ठ-सप्तमसमयेषु शरीरे चौदारिके तस्माच्च बहिः कार्मणशरीरे वीर्यपरिस्पन्दादौदारिक-कार्मणमिश्रकाययोगः, त्रि-चतुर्थ-पञ्चमेषु तु बहिरेव शरीरात् बहुतरप्रदेशव्यापारात् कार्मणकाययोगः एवं(व), केवलतन्मात्रचेष्टनात् ॥३६५२-५३॥

**[२४०-द्वि०]विणिवित्तसमुग्घातो तिण्णि वि जोए जिणो पयुंजेज्ज।**
**सच्चमसच्चामोसं च सो मणं तह वयी जोगं ॥३६५४॥**

**विणिवित्तसमुग्घातो।** विनिवृत्तसमुद्घातस्तु कारणवशा(शात्) योगत्रयमपि व्यापारयेत्। तत्रापि मनो-वाग्योगयोः प्रत्येकं भेदचतुष्टयसंभवे द्वयोरपि द्वावेव भेदौ प्रयुङ्क्ते-सत्यं वा असत्याऽमृषा वा, नेतरौ द्वौ-मृषा सत्या(त्य)मृषात्मकं वा ॥३६५४॥

**ओरालियकायोगं गमणाती पाडिहारियाणं वा।**
**पच्चप्पणं करेज्जा जोगणिरोधं ततो कुरुते ॥३६५५॥**

**ओरालियकायोगमित्यादिः** स्फुटार्थैव ॥३६५५॥

**किण्ण सजोगो सिज्झति स बंधहेतु त्ति जं सजोगो य।**
**ण समेति परमसुक्कं स णिज्जराकारणज्झाणं ॥३६५६॥**

**किण्ण सजोगो** इत्यादि। किमर्थं योगनिरोध इति? उच्यते, मोक्षार्थिना अवश्यमेव निरोद्धव्याः योगाः, मोक्षविघातित्वात्, मिथ्यादर्शनादिवत्। मोक्षविघातित्वं कथमिति चेत्? संयोगः किन्न सिध्यतीति प्रश्नः। मोक्षविघातिनो योगाः, बन्धहेतुत्वात्, मिथ्यादर्शनाऽविरत्यादिवत्। अन्यच्च सयोगे न परमनिर्जराकारणं परमशुक्लं ध्यानम्—अत्यन्ताऽप्रकम्पता—अवाप्यते, योगापगमाच्च तद् लभ्यते इति मोक्षकारणकारणत्वानु(त्वात् तु) योगनिरोधः कर्त्तव्यः, परमशुक्लध्यानवदिति ॥३६५६॥

तस्य च योगनिरोधस्य प्राग् मनोयोगनिरोध इति तमेव प्राग् निरूपयति—

**पज्जत्तमेत्तसण्णिस्स जत्तियाइं जहण्णजोगिस्स।**
**होन्ति मणोद्व्वाइं तव्वावारो य जम्मेत्तो ॥३६५७॥**

१ °रणं जे त। २ सभोगः इति त प्रतौ। ३ °जोगि° को हे त। ४ °म्मित्तो को हे।

तदसंखगुणविहीणं समए समए णिरुंभमाणो सो ।
मणसो सव्वणिरोधं करेंतसंखेज्जसमएहिं ॥३६५८॥
पज्जत्तमेत्तबेन्दियजहण्णवइजोगपज्जया जे तु ।
तदसंखगुणविहीणे समए समए णिरुंभंतो ॥३६५९॥
सव्ववइजोगरोधं संखातीतेहिं कुणति समएहिं ।
[२४१-प्र०]तत्तो य सुहुमपणयस्स पढमसमयोववण्णस्स ॥३६६०॥
जो इर जहण्णजोगो तदसंखेज्जगुणहीणमेक्केक्के ।
समए णिरुंभमाणो देहतिभागं च मुंचंतो ॥३६६१॥
रुंभति स कायजोगं संखातीतेहिं चेव समएहिं ।
तो कतजोगणिरोधो सेलेसीभावतामेति ।३६६२॥

पज्जत्तमेत्तसण्णिस्स । तदसंखगुण० । पज्जत्तमेत्तबेन्दिय० । सव्ववइजोग० । जो इर जहण्णजोगो । रुंभति स कायजोगं । अक्षरारूढ एवार्थः ॥३६५७-६२॥

तो कतजोगणिरोधो सेलेसीभावतामेति । अत्र रूपैराद्धिरनेकधा वक्तव्येति प्रपञ्चः—

सेलेसो इर मेरू सेलेसी होति जा तधाऽचलता ।
होतुं व असेलेसो सेलेसी होति थिरताए ॥३६६३॥

सेलेसो इर मे० इत्यादि । शिलाभिर्निर्वृत्तः शिलानामयं वा इति–अण्–शैलः पर्वतः' शैलानामीशः शैलेशः-अधिपतिः मेरुः । शैलेशस्य इयं स्थिरता-शैलेशी स्थिरता, साऽस्यास्तीति परमशुक्लध्याने वर्तमानः शैलेशीवा(मा)न्, अभेदोपचारादुच्यते स एव शैलेशी । अथवा अशैलेशः सन् अभूततद्भावात् शैलेशी'भवति' इत्यध्याहारः कार्यः ॥३६६३॥

अधवा सेलो व्व इसी सेलेसी होति सो थिरयताए ।
से व अलेसी होती सेलेसी होतऽलोवातो ॥३६६४॥

अधवा सेलो व्व इसी इति । प्राकृतशब्दस्यानेकधा संस्कृतानुमानम् । प्राकृते ऋवर्णस्यैकारादेशात् शैल इव ऋषिः 'शैलर्षी(र्षिः)' संस्कृतम् । प्राकृते 'सैलेसी'

१ °रुम्भ° को । २ कुणइ असं° को, करेअसं° हे । ३ °रुम्भ° को । ४ भावच्चमेति इति त प्रतौ । ५ रूपराद्धिः-'सेलेसी'रूपस्य साधना । ६ तदच° हे । ७ °ऽतिथिरयाए द्री हे त । ८ केषांचिद् वैयाकरणानां मते प्राकृतभाषायामपि ऐकारः प्रयुज्यते इत्यतः 'सैलेसी' इति शुद्धं प्राकृतेऽपि ।

इति । अथवा मागधदेशीपदात् 'से' इति भण्यते, 'से–मुणी अलेसी संवुत्ते' अकारलोपात् सेऽलेसी ॥३६६४॥

**सीलं व्व[1] समाधाणं णिच्छयतो सव्वसंवरो सो य ।**
**तस्सेसो सीलेसो सेलेसी होति तदवत्थो[2] ॥३६६५॥**

[3]**सीलं व्व समाधाणं** इत्यादि । अथवा "शीलँ[4] समाधौ" समाधानम्–सर्वसंवरः–शीलम् , तस्य ईशः शीलेशः, शीलेशस्येयं योगनिरोधावस्थेति शैलेशी ॥३६६५॥

एवमनेकधा निरुक्तमभिधाय तस्य स्थितिकालः—

**हुस्सक्खराइं मज्झेण जेण कालेण पंच भण्णन्ति ।**
**अच्छति सेलेसिगतो तत्तियमेत्तं तओ कालं ॥३६६६॥**

**हुस्सक्खराइं मज्झेण जेण** इत्यादिः स्फुटार्था ॥३६६६॥

**तणुरोधारंभातो ज्झायति सुहुमकिरियाणियट्टिं सो ।**
**वोच्छिण्णकिरियमप्पडिवातिं सेलेसिकालम्मि ॥३६६७॥**

**तणुरोधारंभातो** इत्यादि । [5]काययोगनिरोधारम्भात् प्रभृति ध्यायत्यसौ सूक्ष्मक्रियानिवृत्तिध्यानम् , सर्वनिरोधं कृत्वा शैलेशीकाले व्यवच्छिन्नक्रियमप्रतिपाति ध्यानं ध्यायति ॥ ३६६७ ॥

**[२४१–द्वि०] झाणं मणोविसेसो तदभावे तस्स संभवो कत्तो ? ।**
**भण्णति भणितं झाणं समए तिविधे वि करणम्मि ॥३६६८॥**

**झाणं मणोविसेसो** । "ध्यै चिन्तायाम्" इति । तस्य ध्यानमिति भवति, स च विशिष्टो मनोव्यापार एव । मनसश्च निरोधादभावे कृते कथमिव ध्यानशब्द इति ? जीवस्य ध्यानं नास्ति, शैलेश्यवस्थायागयं(स्य) गतमनस्त्वात् । यत्रामनस्त्वं तत्र ध्यानाभावः असंज्ञिजीववत् । अत्र भण्यते–आगमविरोधिनी प्रतिज्ञा, अमनस्कस्य केवलिनः शुक्लध्यानसमाम्नायात् । नन्वेतदेव प्रतिषिध्यते–अमनस्कस्य ध्यानं केवलिनोऽपि मा भूत(त्), 'ध्यै चिन्तायाम्' इति [6]अविद्यमानध्यानार्थत्वात् असंज्ञिजीववदिति । अत्राप्यागमविरोधः–अर्हत्प्रवचने त्रिविधकरणेऽपि ध्यानस्य वर्णितत्वात् "भंगियसुयं गुणेंतो वट्टइ तिविहे वि करणम्मि" [ ] । ततोऽपगतेऽपि मनसि वाग्योग-काययोग-

१ °व° को हे । २ °त्था को हे त । ३ 'सीलं च समाहाण इत्यादि' इति त प्रतौ । ४ अयं धातुः चौरादिकः । ५ कोपयोगनि° इति त प्रतौ । ६ 'ध्यै'धातोः अनेकार्थत्वात् करणनिरोधार्थेऽपि वर्तनादिति" म० हे० मु० वृ० पृ० ११९३, गा० ३०७२ ।

निश्चलावस्थानं तस्य प्ररूप्यत इति । ॥ ३६६८ ॥

अथवा 'अविद्यमानध्यानार्थत्वम्' असिद्धो हेतुः, यत एवं परिभाषा—

**सुदढप्पयत्तवावारणं णिरोधो व विज्जमाणाणं ।**
**झाणं करणाण मतं ण तु चित्तणिरोधमेत्ता यं ॥३६६९॥**

**सुदढप्पयत्तवावारणं** इत्यादि । यतः सुदृढप्रयत्नव्यापारणं ध्यानमुच्यते, विद्यमानानां वा योगानां निरोधो ध्यानमिति । स चैवंप्रकारो ध्यानार्थोऽस्ति इत्यसिद्धो हेतुः । चित्तनिरोधमात्रं ध्यानार्थ एव न भवति, अनेकार्थत्वाद्धातूनाम् । एवमपि जिनस्य ध्यानं न सम्भवत्येव, अभूतमनो-वाग्योगत्वात्, एकेन्द्रियस्येव । उच्यते, एवंविषयं सिद्धसाधनमेव ॥ ३६६९ ॥

यतः —

**होज्ज ण मणोमयं वायियं वं झाणं जिणस्स तदभावे ।**
**कायणिरोधपयत्तस्सं भावमिह को णिवारेति? ॥३६७०॥**

[4]**होज्ज ण मणोमय**मित्यादि । यदि नाम निरोद्धव्याभावात् तन्निरोधात्मकं ध्यानं नास्तीति, उच्यते, ततो मनसो वाचश्च अम(स)त्त्वाद् वि(नि)रोधात्मकं ध्यानं मा भूदिति सिद्धसाधनम् । कायनिरोधप्रयत्नजं तु काययोगसम्भव [इ]त्यस्य ध्यानं केन निवार्यते? उपप(प)त्त्यभावात् अभूतकाययोगत्वादित्यसिद्धत्वं भवति, दृष्टान्तस्य चाभावाद्धर्म्यसिद्धिर्दृष्टान्तः ॥ ३६७० ॥

अपि च त्वन्मतेन—

**जति छतुमत्थस्स मणोणिरोधमेत्तप्पयत्तजं झाणं ।**
**किध कायजोगरोधप्पयत्तजं होति ण जिणस्स ॥३६७१॥**

**जति छतुमत्थस्स** इत्यादि । यदि छद्मस्थस्य त्वया मनोनिरोधाद् ध्यानमिष्यते, केवलिनोऽपि कायनिरोधात्मकं ध्यानं भवतु, निरोधात्मकत्वात्, छद्मस्थमनोनिरोधध्यानवत् ॥ ३६७१ ॥

अथ कदाचिच्चोदकः—

**आहाऽभावे मणसो छतुमत्थस्सेव तं ण झाणं से ।**
**अध तदभावे वि मतं झाणं तो किण्ण सुत्तस्स ॥३६७२॥**

१ मिं त । २ च को हे । ३ °त्तस° त । ४ होज्ज मणो° इति त प्रतौ । ५ तं को हे । ६ सु° त ।

**आहाऽभावे मणसो** इत्यादि । तदेव(वं) केवलिनो ध्यानं कायनिरोधात्मकं न युक्तं प्रतिपत्तुम्, मनसोऽभावे अभूतध्यानार्थत्वात्, असंज्ञिजीवस्येव । अथवा ध्यानार्थाभावेऽपि केवलिनः कायनिरोधात्मकध्यानमिष्यते, एवं तर्हि सुप्तस्यापि ध्यानं भवतु, अभूतध्यानार्थत्वात् केवलिन इवेति ॥ ३६७२ ॥

**अध व मती सुत्तस्स हि ण कायरोधप्पयत्तसब्भावो ।**
**एवं चित्ताभावे कत्तो वे तओ जिणस्सावि ? ॥३६७३॥**

**अध व मती** इत्यादि । अथ मतिरेवं स्यात्–सुप्तस्य मनोव्यापाराभावात् कायनिरोधप्रयत्नाभावः, ततश्च कायनिरोधप्रयत्नजध्यानाभावः सुप्तस्य, अविमनस्कत्वात्, शोकार्त्तजीवत् । एवमप्यनिष्टमापद्यते भवतः–जिनस्यापि कायनिरोधात्मकध्यानाभावः प्राप्तः, विमनस्कत्वात्, सुप्तवत् ॥ ३६७३ ॥

अपि च—

**होज्ज व किंचिम्मत्तं चित्तं सुत्तस्स सव्वधा ण जिणे ।**
**जति सुत्तस्स ण झाणं जिणस्स तं दूरतरएणं ॥३६७४॥**

**होज्ज व किंचिम्मत्तं** । सुप्तस्य किञ्चिन्मात्रं चित्तमप्यव्यक्तं भवेत्, जिनस्य तु सर्वथा चित्ताभावः । ततः सुतरां तस्य ध्यानाभावेन भवितव्यम्, अचित्तत्वात्, घटवत् ॥३६७४॥

**जुत्तं जं छतुमत्थस्स[२४२–प्र०]करणमेत्ताऽणुसारिणाणस्स ।**
**तदभावम्मि पयत्ताभावो ण जिणस्स सो जुत्तो ॥३६७५॥**
**छतुमत्थस्स मणोमेत्तविहितजत्तस्स जति मतं झाणं ।**
**किध तं ण जिणस्स मतं केवलविहितप्पयत्तस्स ॥३६७६॥**

**जुत्तं जं छतुमत्थस्स** । युक्तम्, यत् छद्मस्थस्य करणमात्रानुसारिविज्ञानस्य तदधीनक्षयोपशमत्वात् मनसो भावात् प्रयत्नाभावः, ततश्च कायनिरोधकरणाशक्तत्वात् तदात्मकध्यानाभावः । केवलिनस्तु करणनिरपेक्षज्ञानस्य सर्वदोपयोगसद्भावात् कायनिरोधप्रयत्नाभावो न युक्तः प्रतिपत्तुम्, अनन्तवीर्यत्वात् । ततश्च केवलिनः कायनिरोधप्रयत्नजं ध्यानं प्रतिपत्तव्यम्, स्वानुरूपज्ञानविहितप्रयत्नत्वात्, छद्मस्थस्य ज्ञानप्रयत्ननिरुद्धमनोविषयध्यानवत् ॥ ३६७५–७६ ॥

१ य हे त । २ °रपर° जे ।

पुव्वप्पयोगतो वि य कम्मविणिज्जरहेतुतो [1]आवि ।
सद्दत्थबहुत्तातो तध जिणयंदागमातो य ॥३६७७॥
चित्ताभावे वि सता सुहुमोवरतकिरियाइं भण्णंति ।
जीवोवयोगसब्भावतो भवत्थस्स झाणाइं ॥३६७८॥

**पुव्वप्पयोगतो वि य । चित्ताभावे वि सता ।** अधुना केवलिनो योगनिरोधकाले चोपरतव्यापारस्यापि ध्यानानुवृत्तिरस्तीति प्रतिपत्तव्यम्, [2]पूर्वप्रयोगसंस्कारान्वितत्वात्, कुम्भकारप्रयुक्तचक्रभ्रमणव्यापारो[3]परमेऽपि चक्रभ्रमणानुवृत्तिवत् । अथवा अन्यथा प्रतिज्ञा—यो वा निरोधोऽपि ध्यानमेव, कर्मविनिर्जरणहेतुत्वात्, उभयसिद्धः(द्ध)- छद्मस्थध्यानवत् । अथवा 'ध्यै चिन्तायाम्' इति अर्थपाव(ठ)स्योपलक्षणमात्रत्वात् अनेकार्थत्वाद्धातूनाम् '[4]ध्यै'धातुर्योगनिरोधेऽपि शिष्टप्रयोगादवसातव्यः, सर्वशब्दानां वा सर्वार्थत्वात् सर्वार्थानां च प्रत्येकं सर्वशब्दाभिधेयत्वात् ध्यानशब्दो योगनिरोधेऽपि द्रष्टव्यः । सर्वत्र च शब्दार्थसम्बन्धे शिष्टप्रयोग एव शरणमिति । सर्वशिष्टेभ्योऽपि गरीयस्सर्वज्ञानदर्शनात् ज्योत्स्नाविततमूर्त्तेजि(र्जि)नचन्द्रात् किरणसमूह इवायमागमो विनिःसृत इति प्रमाणम् । चिन्ता(त्ता)भावेऽपि निरुद्धयोगत्रयस्य सूक्ष्मक्रिया[5]प्रति[पाति] व्युपरतक्रियानिवृत्तिवद् द्वितयमपि ध्यानमिति सत्यं वचः, सर्वज्ञजिनाभिहितत्वात् '[6]उपयोगलक्षणो जीवः" इति वचनात् ॥ ३६७७–७८ ॥

जति अमणस्स वि झाणं केवलिणो कीस तं ण सिद्धस्स ।
भणति जं ण पयत्तो तस्स जतो ण य णिरोद्धव्वं ॥३६७९॥

**जति अमणस्स वि झाणं ।** एवं तर्हि अन्यदनिष्टं प्राप्तम् । सिद्धस्यापि ध्यानं प्राप्नोति, अमनस्कत्वात्, शैलेशीजिनस्येव । उच्यते, नाऽयमविशेषण एव हेतुः केवलिनो ध्यानसद्भावे भण्यते, अनैकान्तिकत्वभयात् । तथा च ध्यानरहितेष्वेकेन्द्रियादिषु निर्विशे-[7][षणः'अमनस्कत्व']हेतुर्वर्त्तत इति विपक्षेऽपि भावादनैकान्तिकः । अतो विशेष्यते— 'अनन्तवीर्यप्रयत्नवत्त्वे सति योगत्रयसम्बन्धे च सति अमनस्कत्वात्' इति । सविशेषणश्च सिद्धस्य पक्षधर्मो न भवति, न चैकेन्द्रियादौ विपक्षे सम्भवति । तस्मात् सिद्धस्य ध्यानसाधनाभावाद् ध्यानाभावः । एवं शैलेशीप्राप्तस्य परमशुक्लं(क्ल) ध्यानयोगाद्यथा कर्मनिर्जरणं भवति, यस्मिंश्च प्रतिविशिष्टे समये यावत् कर्म निर्जीर्यते तदन्ते च यथा सर्वक्षय इति ॥ ३६७९ ॥

---

१ वावि को हे त । २ पूर्वोपयोगसंस्कारा° इति तप्रतौ । ३ व्यापारोपरमे इत्यर्थः । ४ ध्यै शब्दो धा०इति त प्रतौ । ५° क्रियाप्रतिव्युपरतक्रियानिवृत्ति° इति त प्रतौ । ६ "उपयोगो लक्षणम्" [तत्त्वार्थ २, सू० ८] इति वचनम् । ७ °षेणोपगमस्कन्धहेतुर्व° इति त प्रतौ ।

तदिदानीमुच्यते—

**तदऽसंखेज्जगुणाए गुणसेढीय रइतं पुराकम्मं ।**
**समए समए खवियं कमसो से[२४२-द्वि०] लेसिकालेणं ॥३६८०॥**
**सव्वं खवेति तं पुण णिल्लेवं किंचि दुचरिमे समये ।**
**किंचिच्च होति चरिमे सेलेसीए तयं वोच्छं ॥३६८१॥**

**तदऽसंखेज्जगुणाए** इत्यादि । **सव्वं खवेति** इत्यादि । शैलेशीसमयेषु गुणश्रेण्या पूर्वपूर्वसंख्यातउत्तरोत्तरासंख्येयगुणोत्तरया पूर्वरचितं कर्म शैलेशीनिरूपितकालेन सर्वं क्षपयति—यद् यस्मिन् समये विरचितं तद् निःशेषं तस्मिन्नेव समये करोति ॥ ३६८०-८१ ॥

एवमनिर्दिष्टं सामान्यकर्म द्विचरमसये च प्रतिविशिष्टभेदमेव यत् क्षप्यते, तस्य संग्रहार्थम्—

**मणुअगतिजातितसबादरं च पज्जत्तसुभयमातेज्जं ।**
**अण्णतरवेदणिज्जं णरायुमुच्चं जसो णामं ॥३६८२॥**

**मणुअगतिजाति०** इत्यादि । नामकर्मणो भेदा गति-जाति-शरीराङ्गोपाङ्गादयः, तेषां चरमसमये यावतां क्षयस्त इमे—गतिं प्राप्य मनुजगतिनाम, जातिं प्राप्य पञ्चेन्द्रियजातिनाम, एतद्द्वयाविनाभाविनश्च नामभेदाः त्रस-बादर-पर्याप्त-शुभाऽऽदेयानि नामकर्मप्रत्ययानि, द्वयोश्च वेदनीययोरन्यतरत् तत्कालोदयप्राप्तम् ततो द्वितीयसत्कर्मरूपमारात् क्षयं गतमिति, आयुष्कस्य भेदं प्राप्य नरायुष्कम्, वेद्यमानं गोत्रं प्रति उच्चैर्गोत्रम्, तथाऽन्यो नामकर्मभेदः यशःकीर्त्तिनाम ॥ ३६८२ ॥

**संभवतो जिणणामं णराणुपुव्वी य चरिमसमयम्मि ।**
**सेसा जिणसंताओ दु चरिमसमयम्मि णिट्ठेन्ति ॥३६८३॥**

**संभवतो जिणणामं।** इह शैलेशी तीर्थकरश्चातीर्थकरश्च केवली प्रतिपद्यत इति । सम्भवग्रहणाद्यदि तीर्थकरः प्रतिपन्नस्ततस्तीर्थकरनामकर्म चरमसमये क्षयमुपगच्छति, तच्च 'जिननाम' इति भण्यते । यः पुनरतीर्थकरः प्रतिपन्नः तेन तन्निबद्धमेव । किमिति क्षप्यते ? तस्य शेषाण्युक्तान्येव । तथा अन्यत् नरानुपूर्वीनाम पूर्वभावबद्धम्, तदपि चरमसमय एव क्षयं याति । शेषाः केवलिनस्तस्य याः सत्कर्मतयाऽवस्थिताः नोदितास्तास्तस्य चरमसमयस्य पश्चादनन्तरस्य द्विचरमसमयशब्दवाच्यस्य निष्ठानेन तिष्ठन्ति—निःशेषक्षयं यान्तीत्यर्थः । 'चरम' इत्यन्तोऽभिधीयते-मुख्यः-पश्चिमः । द्वितीयश्चासौ

---

१ °खवं जे त । २ °चिदुव° को हे । ३ य तं को हे । ४ °त्तमु° जे । °त्तसुभगमा° त । ५ पन्नः स्तैनैस्तन्नवद्ध० इति त प्रतौ ।

चरमश्चेति पूरणप्रत्ययलोपं कृत्वा द्विचरमः । एकस्मिन् मुख्ये चरमे प्रसिद्धे द्वितीय औपचारिको भवति–चरम इव चरमः, चरमसहचारित्वात्, अनन्तरत्वात्। स चौपचारिको मुख्यस्य द्वितीयो भवति, गौणमुख्यस्य द्वयविकल्पनात् तृतीयविकल्पाऽसम्भवात् ॥ ३६८३ ॥

**ओरालियादि[1] सव्वाहि जहति विप्पजहणाहि जं भणितं ।**
**णिस्सेसतया ण जधा देसच्चाएण सो पुव्वं ॥३६८४॥**

**ओरालियादि सव्वाहि** इत्यादि । औदारिकादीनि शरीराणि चरमसमये त्यजति । **सव्वाहि विप्पजहणाहि** । 'ओहाके(कृ) त्यागे' 'वि'शब्द–'प्र'शब्दोपपदस्य जहातेस्त्यागार्थस्य करणे 'ल्युट्'भावे विशेषेण त्रिविधम् प्रकर्षतश्च हीयते अनेनेति शुक्लध्यानं करणम् विप्रहायण(हाण)म्, भावो वा हानम्-त्यागक्रिया तदुपयोगः केवलज्ञानाख्यः सर्वविप्रहाणं निःशेषतः, न यथा पूर्वं संघात-परिशाटाभ्यां देशत्यागतः। अथवा स्त्रीलिङ्गे भावे 'क्तिन्' सर्वात्मना विप्रहाणिः–सर्वत्यागः–तया सर्वविप्रहान्या(ण्या) त्यजति जातिनिर्देशात् अथवा भेदापेक्षया व्यक्तिविशेषनिर्देशः सर्वाभिर्विप्रहाणी(णि)भिरिति ॥ ३६८४ ॥

**तस्सोदइयातीया भव्वत्तं च विणिवत्तते समयं[2] ।**
**सम्मत्तणाणदंसणसुहसिद्धत्ताइं मोत्तूण ॥३६८५॥**

**तस्सोदइयातीया** इत्यादि । तस्येदानीं चरमसमयक्षये पारभविकाः संयोगजाः परिणामा औदयिका भावाः, भव्यत्वं चानादिपारिणामिकभाव(वो) युगपद् व(वि)निवर्तन्ते, औदयिकाद्वि(दि)भावग्रहणा(णे) आदिशब्दस्तव(सूच)नात् क्षायिकभावस्यापि विनिवृत्तिः प्रसक्ता स्वाभाविकपरिणामत्वादपवादेन निवर्त्यते । मुक्त्वा स्वाभाविकानि सम्यक्त्व-ज्ञान-दर्शनाद्या[नि] याव(वत्)सिद्धत्वानि शेषभावानां सापेक्षपरिणामत्वाद् विगम इति स्थितम् ॥ ३६८५ ॥

अथेदानीं चोद्यते—

**ण[4]णु संताणोऽणादी परोप्परं हेतुहेउभावातो ।**
**देहस्स य कम्मस्स य भणितो बीयंकुराणं व ॥३६८६॥**

---

१ °याई त । २ चयइ को हे त । ३ °मग° त । ४ 'णणु संताणो' इत्यादि ३६८६ गाथातः 'किं पुण जा' इत्यादिकाः ३७०७ पर्यन्ता द्वाविंशतिर्गाथाः त प्रतौ न सन्ति । एतद्विषये मलधारिवृत्तौ (पृ० ११९७ गा० ३०८७ अनन्तरम्) अयं निर्देशः–"ननु संताणोऽणाई इत्यादिद्वाविंशतिगाथाः, एताश्च पूर्वं षष्ठगणधरे प्रायो लिखिताः व्याख्याताश्चेति नेह लिख्यन्ते ।"

**णणु संताणोऽणादी** इत्यादिः । देह-कर्मणोः परस्परं हेतुहेतुस(म)द्भावसंतानो न विरस्ये(विच्छे)त्स्यति, अनादित्वात्, बीजाङ्कुरसंतानवत् ॥ ३६८६ ॥

अनादित्वाऽसिद्धाऽऽशङ्कापरिहारार्थम्—

**अत्थि स देहो जो कम्मकारणं जो य कज्जे कम्मस्स ।**
**कम्मं च देहकारणमत्थि य जं कज्जमण्णस्स ॥३६८७॥**
**[२४३–प्र०]ते[2] णाणातित्तणतो ण चरिमकम्मं ण वा चरिमदेहो ।**
**जातो णभदेसो इव कालविसेसोऽहवा चरिमो ॥३६८८॥**

**अत्थि स देहो** इत्यादि । अनादौ संसारे आद्याभिमतो देहः कर्मणः कारणम्, देहत्वात्, वर्तमानदेहवत् । तथा स एवाऽऽद्याभिमतो देहः विद्यमानस्य कर्मणः कार्यम्, देहत्वात् । अथवाऽऽद्याभिमतं कर्म देहस्य कारणम्, कर्मत्वात्, वर्त्तमानशुभाशुभकर्मवत् । अथवाऽऽद्याभिमतं कर्म देहकारणम्, कर्मत्वात्, वर्त्तमानदेहकारणकर्मवत् । एवमनादित्वे सिद्धे चरमं कर्म देहान्तरानारम्भकम्, चरमो वा देहः यः कर्म[णो] नारम्भकः—तदुभयं नास्त्येवेति वक्तव्यम् । प्रमाणं च— कर्म-देहयोश्चरमत्वव्यपदेशो न युक्तः, अनादित्वात्, नभोदेशवत् कालसमयब(व)द् वा ॥३६८७–८८॥

**अधवा जमणातीओ संजोगो वि किर जीव-कम्माणं ।**
**ते[4] णाणंतो वि मतो धम्माधम्मादिजोगो व्व ॥३६८९॥**

**अधवा जमणातीओ** । अधवा(अथवा) जीव-कर्मणोः संयोगस्यापर्यन्तवत्त्वम्, अनादित्वात्, धर्माधर्मद्रव्यप्रदेशसंयोगस्येव ॥३६८९॥

अत्र दूषणमभिधीयते—अनैकान्तिकत्वम्—

**जमणाती संताणो तेणाणंतो वि णायमेगंतो ।**
**दीसति संतो वि जतो कत्थइ बीयंकुरादीणं ॥३६९०॥**

**जमणाती संताणो** इत्यादि । क्वचिदग्निसंयोगाद् दग्धे बीजे पूर्वस्य सन्तानस्य विच्छेदो दृष्टः, क्वचिदङ्कुरस्यानिष्पन्नस्यैव(वा)विकासात् पूर्वसन्तानविच्छेदो दृष्ट इति पूर्वपक्षबीजाङ्कुरदृष्टान्तविसदृशेन बीजाङ्कुरसन्तानेनैव अनैकान्तिक इति ॥३६९०॥

---

१ °ज्जमणस्स को मु०वृ० ८७१ गा०३७०८ । हे० मु० वृ० पृ० ७६२ गा० १८१४ ।
२ बीयं जह उ विणस्सइ नस्सइ मुत्तस्स तह चरिमदेहो । अहवा णभदेसो इव का० को० मु० वृ० पृ० ८७१ गा० ३७०९ । ३ °कम्मणोऽहिमओ को मु०वृ०पृ०८७१ । ४ सो पारंपरएणं जत्तो कम्मट्ठिई संता ॥ को मु०वृ०पृ०८७१ । ५ जं संताणोऽणाई तेणाणंतो व णा° को मु० वृ० पृ० ८७१ ।

अण्णतरमणिव्वत्तितकज्जं वीयंकुराण जं विहितं ।
तत्थ हतो संताणो कुक्कुडिअण्डातियाईणं[1] ।।३६९१।।
जध वेह कञ्चणोवलसंजोगोऽणातिसंततिगतो वि ।
वोच्छिज्जति सोवायं तध जोगो जीव-कम्माणं ।।३६९२।।

अण्णतरमित्यादि । देह-कर्मणोरनादिकारण-कार्यप्रबन्धेऽप्यन्यतरदनिर्वर्त्तितस्व-कार्यमुपरंस्यते, क्वचित् कदाचित् विहितशक्तित्वात्, बीजाङ्कुर(र) कुकुटयण्डकवत् । जं (यत्) देह-जीवकर्मणोः कारणकार्यरूपसंयोगो व्युत्से(च्छे)त्स्यते, अनादित्वे सति उपा-यान्तरासम्भवात्, काञ्चनोपलसंयोगवत् । अतोऽनैकान्तिकः—धर्माधर्माकाशानामनादिः संयोगः, न च विचंछिते(विच्छिद्यते) अनन्तत्वात् ।।३६९१–९२।।

तो किं धम्मादीण व जोगो अध कंचणोवलाणं व ।
जीवस्स य कम्मस्स य भण्णति दुविधोऽवि ण विरुद्धो ।।३६९३।।

तो किं धम्मादीण व जोगो इत्यादि । अतोऽत्र संशयः- धर्मादिसंयोगवद् अत्यन्ताऽवियोग एव भवतु? आहोस्वित् काञ्चनोपलानामिव वियोगवान् भवतु जीव कर्मणोः संयोगः ? उच्यते, अवियोगस्तावदुभयोरावयोः सिद्ध एव, वियोगो दुस्साधः, सोऽपि प्रतिपन्न एव भवता, उभयोरविरुद्धत्वादुभयसिद्धिः ।।३६९३।।

तत्र—

पढमो व्व अभव्वाणं भव्वाणं कंचणोवलाणं व ।
जीवत्ते सामण्णे भव्वोऽभव्वो त्ति को भेतो ? ।।३६९४।।

पढमो व्व अभव्वाणं इत्यादि । धर्माधर्म(र्मा)काशयोगः प्रथमः, सोऽत्यन्ता-वियोगादभव्यानाम्, द्वितीयः काञ्चनोपलानामिव संयोगः उपायाद् वियोगवान्, स भव्यानामिति । आह जीवत्वे समाने कोऽयं भव्याभव्यकृतो भेदः ? उच्यते, परिणा-मद्वयभेदाद् भेदः ।।३६९४।।

होतु व जति परिणामो को दोसो णारगादिभेतो व्व ।
भणधे[2] य भव्वाऽभव्वा जीवा ण सभावभेतो त्ति ।।३६९५।।

होतु व जति परिणामो । यदि परिणामभेदाद्भेदस्ततो जीवस्यैव परिणाम-विशेषाद् भव्यत्वमभव्यत्वं च भेदमात्रमेव, परिणामत्वात्, नारक–तैर्यग्योनभेदवत् । न चेष्यत एतद् भवद्भिः, भिन्नस्वभावत्वाद् भव्याऽभव्ययोः, जात्यन्तरत्वमेवेति तं(तद्) निषिध्यते ।।३६९५।।

---

१ °णं व्व कोमु० हे० पृ० ८७१ । २ °इ को ।

**भव्वाभव्व[२४३-द्वि०]विसेसो चेतण्णस्स व सभावतो ण मतो ।**
**अण्णो वि जंती दीसति सभावभेतो ण जीवाणं ॥३६९६॥**

**भव्वाभव्वविसेसो** । भव्याभव्यत्वयोः स्वभावकृतो जातिभेदो नास्ति, जीवधर्मत्वात्, तद्गतचैतन्यधर्मवत् । अन्योऽपि च भव्याभव्यत्वे मुक्त्वा जीवधर्मः क्वचिद् जातिभिन्नो नास्तीत्यनैकान्तिकाभावं जीवधर्मस्य दर्शयति ॥३६९६॥

अत्राभिधीयते—

**दव्वातित्ते तुल्ले जीव-णभाणं सभावतो भेतो ।**
**जीवाजीवातिगतो जध तध भव्वेतरविसेसो ॥३६९७॥**

**दव्वातित्ते तुल्ले** । इह जीवस्य नभसश्च स्वभावभेदोऽस्ति चेतनत्वमचेतनत्वम्, आदिग्रहणात् सक्रियत्वमक्रियत्वं चेत्यादि । अथ च सत्त्व-द्रव्यत्वादिधर्मैस्तुल्यता । अतः सामान्यरूपेणैवानैकान्तिकता । जातिभेदेऽपि जीवाकाशादीनां सामान्यधर्मता द्रव्यादिरूपा दृष्टेति कृत्वा जीवत्वे समाने भव्याभव्यकृतो जातिभेदो भविष्यतीति ॥ ॥३६९७॥

**एवं पि भव्वभावो जीवत्तं पि व सभावजातीतो ।**
**पावति णि[२]च्चो तम्मि य तद्दवत्थे णत्थि णेव्वाणं ॥३६९८॥**

**एवं पि भव्वभावो** इत्यादि। एवं तर्हि जीवस्य भव्यत्वं नापैष्यति, स्वाभाविकत्वात्। ततश्च नित्ये भव्यत्वे निर्वाणाभावः प्रसज्यत इति ॥३६९८॥

**जध घडपुव्वाभावोऽणातिसभावो वि सणिधणो एवं ।**
**जति भव्वत्ताभावो हवेज्ज किरियाय को दोसो ॥३६९९॥**

**जध घडपुव्वाभावो** इत्यादि। इह जीवस्य भव्यत्वं कथञ्चिदपयास्यति, अनादित्वे सति विशिष्टक्रियायोगित्वात्, घटप्रागभाववत् ॥३६९९॥

**अणुदाहरणमभावो खरसंगं पिव मती ण तं जम्हा ।**
**भावो च्चिय स विसिट्ठो कुंभाणुप्पत्तिमेत्तेणं ॥३७००॥**

**अणुदाहरणमभावो** इत्यादि। प्रागभावो ह्यभावत्वादेवोदाहरणमयुक्तम्, क्रियायोगित्वाभावात्, खरशृङ्गवत्। आह-न प्रागभावोऽभावः, किं तर्हि ? भाव एव, कुम्भानुत्पत्तिमात्रविशिष्टत्वात्। एवं तर्हि भव्यत्वविगमात् सर्वभव्योच्छेदः प्राप्तः, अपचीयमानत्वात्, धान्यकोष्ठागारवत्। तन्न, प्रतिप्रमाणसद्भावात् ॥३७००॥

ततो गाथा—

---

१ जओ को त । २ नियओ को ।

एवं भव्वुच्छेतो कोट्ठागारस्स वाऽवचयतो त्ति ।
तं णाणंतत्तणतोऽणागतकालंबराणं व ॥३७०१॥

एवं भव्वुच्छेतो इत्यादि । नोच्छेत्स्यते(न्ते) भव्याः, अनन्तत्वात्, अनागतसमयराशी(शि)वत्, आकाशश्रेणीप्रदेशश्रेणिवत् ॥३७०१॥

जं चाँवीताणागतकाला तुल्ला जतो यँ संसिद्धा ।
एक्को अणंतभागो भव्वाणमँतीतकालेणं ॥३७०२॥

एस्सेण तत्तियो च्चिय सिज्झेज्जा तो वि सव्वभव्वाणं ।
ण समुच्छेतो जुत्तो जिणागमातो य सद्धेयं ॥३७०३॥

जं चातीताणागत० इत्यादि । सर्वेणाप्यनागतकालेन सर्वभव्यानाम् अनन्तभाग एव अपहरिष्यते, अनन्तसंख्यातीतं(त)समयराशितुल्यत्वात्, अतीतसमयराशिनेव। "अतीताद्धाऽनागताद्धा च तुल्ये द्वे अपि"[ ] इति वचनम् । अनन्तसंख्यापदान्तर्भावित्वात् अनन्तानि ह्यनन्तकस्य स्था[ना]नि, तत्र यद्यप्यतीतसमयराशिरनन्तस्तथापि तस्य प्रतिविशिष्टमेवानन्तसंख्यापदं निरूपितम्, सर्वसिद्धराशेरनन्तस्यासंख्येयगुणं यत् स्थानं तदप्यनन्तमेव । अनागतसमयास्तु सिद्धराशेरनन्तगुणाः तथाप्यनन्ता एवेत्यनन्तसंख्यया तुल्ये अपि अतीतानागताद्धे कस्मात् सर्वसमुच्छेदो भाव्य(भव्या)नामयुक्तः प्रतिपत्तुम्, भगवदर्हत्प्रणीतागमाच्च जयन्तीप्रश्नसूत्रेऽभिहितत्वात् । "भवियविरहिएणं लोए भविस्सति"

भगवानाह–"णो तिणट्ठे समट्ठे" [व्याख्याप्रज्ञप्तिसूत्र शतक १२, उद्दे० २] अतो भगवद्वचनादेवैतच्छ्रद्धेयम् । उपपत्तिरपि च भगवतैव व्याकृतेति प्रमाणीभवति । अनागताद्धासमयः(याः) आकाशश्रेणीप्रदेशाश्च अनन्तत्वान्नोच्छिद्यते(न्ते) ॥३७०२–३॥

यत् पुनरिदं केनापि मन्दप्रज्ञेन चोद्यते–

भव्वा वि ण सिज्झिस्सन्ति केयि कालेण ज[२४४-प्र०]इ वि सव्वेणं ।
एवं ते वि अभव्वा को व विसेसो भवे तेसिं ? ॥३७०४॥

---

१ व्याख्याप्रज्ञप्तिसूत्रे जयन्तीप्रश्ने ईदृशः मूलसूत्रपाठः–सव्वे वि णं भंते ! भवसिद्धिया जीवा सिज्झिस्संति ! हंता, जयंती ! सव्वे वि णं भवसिद्धिया जीवा सिज्झिस्संति । जइ भंते ! सव्वे भवसिद्धिया जीवा सिज्झिस्संति तम्हा णं भवसिद्धियविरहिए लोए भविस्सइ ? णो तिणट्ठे समट्ठे– व्याख्याप्रज्ञप्तिसूत्र शतक १२ उद्देशक २ । २ वा० को । ३ य सिं सिद्धो को मु०वृ० पृ०८७२ गा० ३७२३ ३ ण य ती० को मु०वृ०पृ०८७२ ।

भव्वा वि ण सिज्झिस्संति केयि कालेण इति । भव्याश्च न सेत्स्यन्ति चेति विरुद्धमेतत् । केन वा प्रतिपन्नम् 'भव्या न सेत्स्यन्ति' ? इति, यतो लक्षणम्—

"सेत्स्यन् भव्यः सिद्धो भव्यत्वमतीत्य वर्त्तते यस्सः ।

नै(व) कदाचित् स्ये(से)त्स्यत(ति) यः सो[1] भव्यो जिनेनोक्तः" [ ] ।

एवंविधे लक्षणे चोद्यमेव नास्ति तथापि तु विशिष्टकालं चोद्यमुत्थाप्य तत्परिहार-गाथा । मा किञ्चिन्नोक्तं भूदिति इतरो ब्रवीति चोद्यावकाशम्—'सर्वे भव्याः सेत्स्यन्ति' इत्यस्मिन् पक्षे भव्यः(व्य)विरहितस्तर्हि लोको भविष्यति । भगवानाह—"णो इणट्ठे समट्ठे" [ व्याख्याप्रज्ञप्तिसूत्र शतक १२ उद्दे० २] ण(न) च शब्द(भव्य)रहितो लोको भविष्यतीति भव्येषु सत्सु सिद्धिमार्गो व्यवच्छिन्न इति । किन्तु येन बहुना कालेन सर्वेणाप्यनागतसमयराशिना न सिद्धाः तेऽप्यभव्या एव, अविद्यमानसिद्धित्वात्, उभय-सिद्धाभव्यवत् । एवमप्ययुक्तं वक्तुम् 'सर्वेण कालेन ये न सेत्स्यन्ति तेऽभव्यतुल्याः' इति । सर्वस्य कालस्य किं व्युच्छेदो भविष्यति येन तस्मात् कालात् परतो भव्याः केचिन्न सेत्स्यन्तीत्याशङ्क्यते—यावता भव्यानुच्छेदे अनागताद्धादृष्टान्तः, तस्या अपर्यन्त-त्वात्, तद्व्यवच्छेदे वा भव्या अभव्या वा कथमवतिष्ठन्ते वर्त्तनारहितानामभावात् ? ततश्चोद्यमेव नास्ति । अथ कालोऽस्ति ततो भव्यानाम्(भव्या) अपि सेत्स्यन्तीत्येव, अनागतकाले सेत्स्य[त्]सद्भावात् । चोदितं चेदम् । तस्मात् कश्चित् पुद्गलपरिवर्त्तादि-मन्तः(मान्) कालोऽतिबाहुल्यात् 'सर्व'शब्देनौपचारिकेण अभिधीयते, 'सर्वं घृतं पीतम्' इति विवक्षितघृतोपयोगवत् । तेनानन्तेन(न्तैः) पुद्गलपरिवर्त्तैः ये भव्या न सिद्धाः— यैर्मोक्षसाधनक्रिया न प्राप्ता— [ते] भव्या अप्यभव्यतुल्या इति भव्याभव्यविशेषापादना-चोद्योत्थानम् ॥३७०४॥

तस्यैवंविधस्य चोद्यस्य परिहारः—

**भणति भव्वो जोग्गो ण य जोग्गो तेण सिज्झते सव्वो ।**
**[2]भध जोग्गम्मि वि दलिए सव्वत्थ ण कीरते पडिमा ॥३७०५॥**

**भणति भव्वो जोग्गो** । सिद्धिक्रियाया योग्यो भव्य उच्यते, स च योग्योऽपि तेन परिभाषितेन सर्वेण कालेन साधनसामग्र्य[भावा]द् नावश्यं सिध्यति, सर्वपुरुषाऽगम्यप्रदेशावस्थितं(त)प्रतिमायोग्यश्रीपर्णिवृक्षवत् ॥३७०५॥

**जध वा स एव पासाणकणगजोगो वियोगजोग्गो[3] वि ।**
**ण विजुज्जति सव्वो च्चिय स विजुज्जति जस्स संपत्ती ॥३७०६॥**

१ 'स भव्यो' इति प्रयोगो व्याकरणानुसारी । २ तं भणइ भ जोग्गो इति त प्रतौ । ३ जोगो त्ति को पृ० ८७२ ।

अथ वा स एवेत्यादि । अथवा कश्चित् कदाचिद् भव्य(व्यः) सर्वकर्मवियोग्योऽपि(गेयोग्योऽपि) तद्वियोगक्रियां नावाप्स्यति, असंप्राप्तयोग्यसाधनसमायोगत्वात्, सर्वपुरुषाऽविषयविषमप्रदेशावस्थितसुवर्णविभागयोग्यकनकपाषाणवत्, यदि नाम सा सम्पत्तिर्भवेत् ततो योग्य एव वस्तुनि, नायोग्ये खरपाषाणे ॥३७०६॥

तत आह—

**किं पुण जा संपत्ती सा जोग्गस्सेव ण तु अजोग्गस्स ।**
**तध जो मोक्खो णियमा सो भव्वाणं ण इतरेसिं ॥३७०७॥**

**किं पुण जा संपत्ती** इत्यादि । अभव्यस्य साधनसम्पत्तिरेव न सम्भवति दर्शनादिका, तदयोग्यत्वात्, एरण्डदारुवत् खरपाषाणवद्वा ॥३७०७॥

एवं गतं प्रासङ्गिकम् । प्रकृतमेवोच्यते—

**रिजुसेढिं पडिवण्णो समयपदेसंतरं अफुसमाणो ।**
**एगसमएण सिज्झति अध सागारोवजुत्तो सो ॥३७०८॥**

**रिजुसेढिं पडिवण्णो ।** योगनिरोधप्रपन्नसंकोचितशरीरान्तर्वृत्तजीवप्रदेशघनदण्डबाहुल्यप्रमाणां ऋज्वीमाकाशश्रेणीमूर्ध्वायतां लोकान्तगामिनीं प्रपन्न ऊर्ध्वाभिमुखां प्रस्थितः "अफुसमाणगईए एगसमये सिज्झइ" [ ] इती(ति)। अस्पृशन्(द्)ज(ग)तेर्व्याख्यानम्—समयान्तरं न स्पृशति—येन समयेन प्रस्थितस्तेनैव समयेन लोकान्तमाप्नोतीत्यर्थः । तथा च तद्भवशरीरत्यागः, ऊर्ध्वगमनम्, भव्यत्वविगमः, सिद्धत्वपर्यायोद्भवः, लोकान्तप्राप्तिरिति । एताः क्रियाः एकसमये निर्वर्त्यन्ते, सिध्यत्काले च साकारोपयोगयुक्तोऽसौ सिध्यतीति ॥३७०८॥

किं कारणम्? यस्मात्—

**सव्वाओ लद्धीओ जं सागारोवयोगलाभाओ ।**
**तेणेह सिद्धलद्धी उप्पज्जति तदुवयुत्तस्स ॥३७०९॥**

**सव्वाओ लद्धीओ** इत्यादिः स्फुटार्था । एवं चानेन वाक्येनान्यदपि सिद्धं सिद्धानाम्—तरतमयोगोपयोगता, अयुगपदुपयोगत्वमिति, युगपदुपयोगे स(सा)कारोपयोगविशेषणानर्थक्यमिति ॥३७०९॥

तत इयं गाथा—

---

१ संशोधितः पाठः मूलपाठानुसारी । २ °ढं° को हे त । ३ अपु० जे । ४ साग° हे । अत्र कोट्या० वृत्तौ एतद्विशेषणविषये अयमुल्लेखः—"अस्माच्च आर्यश्याममप्रणीतात् साकारोपयोगविशेषणात्" मु०पृ० ८७६ । द्रष्टव्यमत्र मलधा० हे०वृ०मु०पृ० ११९७ गा० ३०८९ ।

**एवं च गम्मति धुवं तरतमजोगोवयोगता तस्स ।**
**जुगेयोवयोगभावे सागारविसेसणमजुत्तं ॥३७१०॥**

**एवं च गम्मति धुवं** । गतार्था ॥३७१०॥

**अधव मती सव्वं चिय सागारं से अतो अदोसो त्ति ।**
**णाणं ति दंसणं ति व ण विसेसो तं च णो जम्हा ॥३७११॥**

**अधव मती** इत्यादि । अथ चैवं बुद्धिः—न साकारोपयोगविशेषणानर्थक्यम्, किं तर्हि ? सार्थकत्वमेव । यस्मात् तस्य केवलिनः सर्व एवोपयोगः साकारः, सर्वदा ज्ञान-दर्शनोपयोगात्मकत्वात्, एकस्मिन् समये साकाराऽनाकारविशेषणाभावात् तदुभय-स्वभावत्वाद् विशेषणसार्थकत्वमिति, तच्च लब्धिमध्ये सिद्धत्वस्य प्रक्षेपार्थम् । तत् पुनरुभयोपयोगत्वमुच्यमानं वचनान्तरेण व्याहन्यते इति न घटते[3] ॥३७११॥

यस्मादिदं वचनान्तरमस्ति—

**सागारमणागारं लक्खणमेतं[4] ति भणितमिध चेव ।**
**तध णाण-दंसणाइं वीसुं समए पसिद्धाइं ॥३७१२॥**

**सागारमणागारमित्यादि** । साकारमनाकारं च लक्षणं सिद्धानामुक्तमिहैव । ते च ज्ञान-दर्शने विष्वक् प्रसिद्धे—पृथगित्यर्थः, इतरथा यद्येकमेव ज्ञानं दर्शनं च स्यात्—यथोक्तं स्तुतिकारेण—

"एकं कल्पितभेदमप्रतिहतं सर्वज्ञतालाञ्छनम्
सर्वेषां तमसां [5]निहन्तृ जगतामालोकमं(नं) शाश्वतम् ।
नित्यं पश्यति बुध्यते च युगपन्नानाविधानि प्रभो !
स्थित्युत्पत्तिविनाशवन्ति विमलं द्रव्याणि ते केवलम्" [ ] ॥३७१२॥

तत्रायं दोषः—

**पत्तेयावरणत्तं इधरा बारसविधोवयोगो य ।**
**णाणं पंचविकप्पं चतुव्विधं दंसणं कत्तो ? ॥३७१३॥**

**पत्तेयावरणत्तं** इत्यादि । तदेकत्वे कुत इदं प्रत्येकमावरणं ज्ञानावरणं दर्शना-वरणं च ? इति भिन्ने ज्ञान-दर्शने, भिन्नावरणत्वात्, इन्द्रियपञ्चकवत् । अथ च भिन्ने ज्ञाना(न)-दर्शने, भिन्नविधानत्वात्, जीवाजीवादिवत् । भिन्नविधानत्वमसिद्धमिति चेत्,

---

१ °गवो° को हे त । २ साग° हे । ३ अतः पश्चात् त प्रतौ 'यस्मादिदं वचनान्तरेण व्याहन्यते इति न घटते' इत्येवं वाक्यं विद्यते । तच्च पुनरुक्तमिव प्रतिभासते इति अत्र न स्वीकृतम् । ४ °मेयं को हे त । ५ नियन्तृ ज० त । ६ °वर्ति वि° त ।

तदर्थमष्टविधो ज्ञानोपयोगः, चतुर्विधो दर्शनोपयोगः–द्वादशविधोपयोगता, तथा पञ्चकविकल्पं ज्ञानं मत्यादि, चतुर्विधं दर्शनं चक्षुर्दर्शनादि। एकत्वे कुतोऽयं भेद इति ? ॥३७१३॥

अपिच, इहैव पुनरप्युक्तं व्यापारभेदेन—

**भणितमिधेव य केवलणाणुवयुत्ता मुणंति सव्वं ति ।**
**पासंति सव्वतो च्चिय केवलदिट्ठीहिंणंताहि ॥३७१४॥**

**भणितमिधेव** येत्यादि । केवलज्ञानस्य व्यापारः–सर्वभावात्(न्) केवलज्ञानोपयुक्ताः 'मुणंति' अवबुध्यन्ते । केवलदर्शनस्य पृथग् व्यापारः–केवलदृष्टिभिरनन्ताभिः सर्वभावान् सर्वतः पश्यन्तीति भिन्ने ज्ञान-दर्शने, भिन्नव्यापारत्वात्, चक्षुर्मनोवत् ॥ ॥३७१४॥

**आहऽपिधंभावम्मि वि उवयुत्ता दंसणे य णाणे य ।**
**भणितं तो जुगवं सो णणु भणितंमिणं पि तं सुणसु ॥३७१५॥**

**आहऽपिधब्भावम्मि वि** । अत्रोच्यते, तेन सिद्धान्तखण्डेन प्रतिप्रदेशमधीतेनापि पृथग्भावमात्रमापादितं ज्ञान-दर्शनयोः, न पृथगुपयोगता, यस्मात् पृथग्भावेऽप्यनयोर्वचनान्तरेण युगपदुपयोगता सिद्धैव । "असरीरा जीवघणा उवयुत्ता दंसणे य णाणे य" [ गा० ३८३५ ] उभयत्र 'च'शब्दस्योपादाना[नाद् युगप]दुपयोगत्वं सिद्धमिति ॥३७१५॥

यद्येवमागमः प्रमाणम्, इदमपि वचनमस्ति, श्रूयताम्—

**णाणम्मि दंसणम्मि व एत्तो एक्कतरयम्मि उवयुत्तो ।**
**सव्वस्स केवलिस्सा जुगवं दो णत्थि उवओगा ॥३७१६॥**

**णाणम्मि दंसणम्मि व** इत्यादि । 'वा'शब्दो विकल्पार्थः–ज्ञाने वा दर्शने वा। कदाचिद् 'वा'शब्दोऽपि समुच्चयार्थ इत्येवं व्याख्यायते । ततः स्फुटतरमिदम्–एतस्माद् द्वितयादेकतरस्मिन् उपयुक्ताः न त(द्व)योरिति । यतश्चान्यदपि ज्ञापकम्–सर्वस्य केवलिनः युगपद् द्वौ न स्तः उपयोगाविति ॥३७१६॥

अथात्रापि व्याख्यान्तरं कल्प्येत—

**अध सव्वस्सेव ण केवलिस्स दो किंतु कासइ हवेज्ज ।**
**सो य जिणो सिद्धो वा तं च ण सिद्धाधिकारातो ॥३७१७॥**

---

१ त्ति य को हे त । २ °हिं° को हे त । ३ पिहभा° हे आहापिहभा° त । ४ °णु अं म° को । ५ भणियं पि को । ६ कोटयाचार्यवृत्तौ इयं निर्युक्तिगता गाथा ९७५ मु०पृ० ८९२ । ७ य को हे त । ८ °स्स वि को पृ० ८७३ । ९ °स्स व त ।

**अथ सव्वस्से०** इत्यादि । सर्वस्यैव केवलिनो न द्वयोपयोगता वार्यते, किं तर्हि ? कस्यचिद्वार्यते, कुतः ? यस्मात् 'न' इति प्रतिषेधः यथाविवक्षं सम्बध्यते-यदा 'न'शब्द आदौ प्रयुज्यते-'न सर्वस्यैव केवलिनो द्वावुपयोगौ' तदा सर्वस्वामित्वप्रतिषेधको 'नो'शब्द इति न सर्वस्य केवलज्ञानस्वामिन उपयोगौ द्वौ, किं तर्हि ? कस्यचिदेक इति सिद्धम्। स च केवली जिनो भवस्थः सिद्धो वा स्यात् , तृतीयस्यासम्भवात्, तच्च न भवस्थग्रहणम् , किं तर्हि ? सिद्धावि(धि)कारात् सिद्धस्यैव ग्रहणमिति ॥३७१७॥

**अधवा पुव्वद्धेणे[1]व सिद्धमेको त्ति किं त्थं[2] बितिएण ।**
**एतो च्चिय पच्छद्धे वि गम्मते सव्वपडिसेधो ॥३७१८॥**

**अधवा पुव्वद्धेणे०** इत्यादि । अथवा गाथापूर्वार्द्धेनैव सिद्धम्-एकतरोपयोगावे(गो वा)-एकोपयोगत्वम् । किं पुनरुच्यते ? तस्मात् पुनरभिधानादनुमीयते-एक एवोपयोगो ज्ञान-दर्शनात्मकः, स च युगपदुपयोगो भवति नान्यथेति उच्यते। अत एव गाथापश्चार्द्धे पुनरभिधानात् 'सर्वस्य केवलिनो युगपदुपयोगो द्व्यात्मको नास्ति' इति सर्वप्रतिषेधः-सर्वस्य केवलिनः एककाले उपयोगद्वयं नास्तीत्यनुमीयते ॥३७१८॥

**तो[२४५-प्र०]कधमिधेव भणितं उवयुत्ता दंसणे य णाणे य ।**
**समुदायवयणमेतं उभयणिसेधो तु पत्तेयं ॥३७१९॥**

**तो कधमिधेव** । यद्येवम् 'सर्वस्योपयोगद्वयं नास्ति' इत्यागमः तत् कथमयमन्य आगम उपयोगद्वयाभिधायी अप्रमाणीक्रियते-"**उवयुत्ता दंसणे य णाणे य**" [गा० ३७१५] ? नेदं वचनमेककाले उपयोगद्वयं प्रतिपादयति । यस्मात् समुदायवचनमेतत् । सिद्धानां समुदाये केचिदुपयुक्ता दर्शने, केचिद् ज्ञाने। तथा च भिन्नकालोपयोगतैव सिद्धा। उभये(य)निषेधस्तु उभयोर्ज्ञान-दर्शनयोरेककालोपयोगत्वेन निषेधः, उभयनिषेधः। प्रत्येकमित्येकैकः सिद्धः उभयोर्ज्ञान-दर्शनयोर्युगपन्नोपयुक्त इति ॥३७१९॥

अथैवं ब्रूयाद् युगपदुपयोगवादी—

**जमपज्जन्ताइं केवलाइं तेणोभयोवयो[3]ग त्ति ।**
**भण्णति णायं णियमो संतं तेणोवयोगो त्ति[4] ॥३७२०॥**

**जमपज्जन्ताइं केवलाइं** इत्यादि । इह केवलज्ञान-दर्शने सादी अपर्यवसिते इति सिद्धम्। ततश्चोभयोरप्यविसे(च्छे)देन भवितव्यम्, अपर्यवसितत्वात्, सिद्धत्वपर्या-

१ °ण वद्दे °ण वि त । २ थ को हे च बि° त । ३ य को हे त । ४ °गो त्ति ।

यवत्। अत्र भण्यते—अपर्यवसितत्वं नाम किमुच्यते ? यावान् हि यस्य कालः स तावन्तं स्थितिकार(ल)मनुभवतीति । केवलज्ञान-दर्शनव्यतिरिक्तानां शेषा(ष)ज्ञान-दर्शनानाम् मतिज्ञानादीनां च चक्षुर्दर्शनादीनां च स्वात्मस्थितिकालानां स्थानं षट्षष्टिः सागरोपमाणि सातिरेकाणि लब्धिं प्राप्याऽविच्छेदेनावस्थानम् अपर्यवसितत्वं दृष्टम् । अथवा उपयोगविच्छेदः । सिद्धम् इत्यनैकान्तिक[त्व]म्—न यावत्तं(न्तं) कालं यस्य सत्त्वं तस्य तावन्तमेव कालमुपयोग इति सत्त्वं विद्यमानत्वं लब्धिः उपयोगकारणं न भवतीत्यनैकान्तिकोऽयम् ॥३७२०॥

तत इयं गाथा—

**ठि[1]तिकालं जध सेस[2]दंसण-जाणागमणुवयोगे वि ।**
**दिट्ठमवत्थाणं तध ण होति किं केवलाणं पि ॥३७२१॥**

**ठितिकालं जध सेसदूदंसण-णाणा०** । भावितार्था । तथा चोपयोगविच्छेदो भविष्यति, केवलज्ञान-दर्शनयोः लब्धिं प्रति स्वस्थितिकालं समवस्थानात्, शेषदर्शन-ज्ञानवत् ॥३७२१॥

**णणु सणिधणत्तमेवं मिच्छावरणक्खयो त्ति व जिणस्स ।**
**इतरेतरावरणता अधवा णिक्कारणावरणा[4] ॥३७२२॥**

**णणु सणिधणत्तमेवं** इत्यादि । नन्वेवमिष्टविघातकृद्धर्मविशेषविपरीतसाधनो विरुद्धोऽयं विरुद्ध. । परार्थाश्चक्षुरादयः, संघातत्वात्, शयनासनाद्यङ्गवदिति । यथा शेषज्ञान-दर्शनवत् केवलज्ञान-दर्शनयोरपि सनिधनत्वं प्राप्नोति, अनिष्टं चैतत् । अथैवं ब्रूयाः, उपयोगं प्रति सनिधनत्वं भवत्वेचे(वतु, एतच्चे)ष्टमेव साध्यते । नेष्टविघातकृत्, सिद्धसाधनत्वात् । एवं तर्हि 'सर्वावरणक्षयो जिनस्य' इति, मिथ्यैतद् वचनं प्राप्नोति, ततश्चागमविरोध इति चोदितं भवति । अथ 'सर्वथा ज्ञानावरणप्रक्षयात् केवलज्ञान-दर्शनसंभवः' इत्येतावता प्रतिपन्न एवावरणक्षय इति पुनस्तस्योदयाभावाद्भवतोऽपि सावरणत्वं चोदयतोऽनिष्टमेवेद[म्], स्वघातित्वदोषाच्च नैव चोदनीयम् । ततश्चोदको ब्रवीति—नैवोच्यते केवलज्ञानावरणकर्मण उदय इति, किं तर्हि ? इतरेतरावरणता प्राप्नोतीति—दर्शनं ज्ञानेन व्यवधीयते, ज्ञानं च दर्शनेनेति । अथवा अत्यन्तविशुद्धस्वभावत्वादुभयमपि नावरणम्, प्रकाशवत् । एवं तर्हि निष्कारणमेवावरणं ज्ञानोपयोगविच्छेदाद् दर्शनोपयोगविच्छेदाच्चेति ॥३७२२॥

---

१ तुलनीयमत्र "शेषज्ञान-दर्शनानाम्" इत्यादिकं विवरणम्—मलधा० हे० वृ० मु० पृ० १२०१ गा० ३१०१ । २ नियठिं को । ३ °सदं को हे । ४ °रणं को हे त ।

**एगतराणुवयुत्ते तदसव्वण्णुदरिसित्त[1] ण तं च ।**
**भण्णति छतुमत्थस्स वि समाणमेगंतरं सव्वं ॥३७२३॥**

**एगतराणुवयुत्ते** इत्यादि । एकतरस्मिन्ननुपयुक्ते केवलिजिने असर्वज्ञत्वम्-दर्शनोपयोगकाले ज्ञानानुपयोगात्, असर्वदर्शित्वं च ज्ञानकाले दर्शनानुपयोगात् । तच्च नेष्टम्, सर्वज्ञत्वात् सर्वदर्शित्वाच्च केवलिजिनस्येति । अत्र भण्यते, समानमेतद्भवतोऽपि–छद्मस्थस्य दर्शनोपयुक्तस्य अज्ञानत्वम्, ज्ञानोपयुक्तस्य चाऽदर्शनत्वम् । इष्यते छद्मस्थस्स(श्च) व्यवहारनयात् सम्यग्दृष्टिर्ज्ञानियांश्च निरन्तरम्, नैक(कै)कान्तरितमिति । यश्चोभयोर्दोषः न तमेकश्चोदयेदिति ॥३७२३॥

अथ मन्यसे—

**सव्वक्खीणावरणो अध भण्णसि केवली ण छतुमत्थो ।**
**उभयोवयोगविग्घो तो छतुमत्थस्स ण जिणस्स ॥३७२४॥**

**सव्वक्खीणावरणो** इत्यादि । अथैवं मन्यसे छद्मस्थस्य ज्ञानावरणं दर्शनावरणं च कर्म युगपदुपयोगविघ्नो युक्तः, केवलिनत्(नः) पु[नः] सर्वक्षीणावरणस्य न युक्त उपयोगद्वयविघ्न इति, निरावरणत्वात्, सूर्यप्रकाश-प्रतापवृत्तिद्वयवत् ॥३७२४॥

अत्र प्रतिविधीयते

**देसक्खये अजुत्तं जुगवं कसिणोभयोवओगि[3]त्तं ।**
**देसोभयोवयोगो पुणाइं[4] पडिसिज्झते किं से ॥३७२५॥**

**देसक्खये** इत्यादि । छद्मस्थ[स्य] क्षयोपशमसमुत्थापितज्ञान-दर्शनस्य देशक्षये देशावरणे च कृत्स्नज्ञान कृत्स्नदर्शनात्मक एककाले सावरणत्वात् न युक्तः उपयोगः, यावांस्तु क्षयोपशमस्तस्य ज्ञान-दर्शनयोः तावत्येवैकदेशे ज्ञान-दर्शनयोरुपयोगस्तस्य किमिति निषिध्यते ? नावरणं निवारकं युगपद्भावस्य, सर्वप्रकाशस्य तु निषेधकं भवतु, आवरणस्वभावत्वात् । दृष्टं च छद्मस्थस्य देशविषयं ज्ञानं दर्शनं च क्रमेण सामान्यविशेषाववबद्धस्वरूपत्वात् । तस्मात् क्रमेण ज्ञान-दर्शनत्वं जीवस्य स्वभाव एवेति ॥३७२५॥

**अध जम्मि णोवयुत्तो तं णत्थि ततो ण दंसणादितिए ।**
**अत्थिजुगवो[२४५–द्वि०]वयोगो त्ति होतु साधू कधं विगलो ? ॥३७२६॥**

**अध जम्मि णोवयुत्तो** । अथैवं मन्येथाः, क्रमज्ञान-दर्शनः केवली यस्मिन्नेव नोपयुक्तस्तत् तदानीं नास्त्येव, यस्मिन् पुनरुपयुक्तः तदेवास्तीति । अस्मिन् पक्षे प्रमाणं

१ °रिसणत्तणं न तं च को । °रिसित्तण न तं च हे त० मु० पृ० १२०३ । °रिसत्तण न तं च त । २ °तरे को हे त । ३ °ओग त्ति त । ४ °इ को हे । ५ देशशब्दः अंशसूचकः ।

च– एकस्मिन्नुपयोगकाले द्वितीयं नास्त्येव, तदानीमनुपलभ्यमानत्वात्, खरविषाणवत्। अयमनैकान्तिको हेतुः–सम्यग्दर्शन-ज्ञान-चारित्रत्रयसम्पन्नः साधुरुच्यते, स च छद्मस्थत्वादेकस्मिन्नुपयुज्यते तत् न (ते न) त्रिष्वपि। ततश्चैकोपयोगकाले इतरयोरनुपलभ्यमानत्वमस्ति। अथ च तस्मिन् साधौ ते द्वे अपि विद्येते, तस्य यावज्जीवावधिप्रतिज्ञापूरणादविकलसाधुत्वानुज्ञानादुभयोरावयोरस्यार्थस्य सिद्धत्वादनैकान्तिकः, असाधुत्वं वा विकलत्वात् साधोः प्राप्नोति, अनिष्टं च तदिति ॥३७२६॥

किञ्च, अन्यत्—

**ठितिकालविसंवातो णाणाणं ण वि य ते चतुण्णाणी ।**
**एवं सति छतुमत्थो अत्थि ण य तिदंसणी समए ॥३७२७॥**

ठितिकालविसंवातो इत्यादि । एकस्मिन्नुपयुक्तस्य यदि अत्य(न्या)न्तः, ते वि(पि) ततो ज्ञानानां चतुर्णां षट्षष्टिसागरोपमस्थितिकाल उक्तः, तस्यासंभवात् स्थितिकालविसंवादः प्राप्त इत्यागमविरोधः । अन्यच्च "एकादीनि भाज्यानि युगपदेकस्मिन्ना चतुर्भ्यः (तत्त्वार्थ० १,३१) इति एकज्ञान-द्विज्ञान-वि(त्रि)-ज्ञान-चतुर्ज्ञानानां जीवानां प्रज्ञापना कृता । एवं छद्मस्थश्चतुर्ज्ञानी कश्चिदपि न प्राप्नोति, एकज्ञानोपयोगकाले शेषज्ञानाभावाभ्युपगमात् । न च छद्मस्थस्त्रिदर्शनी कश्चित् प्राप्नोति । एवं च पूर्व एव हेतुस्तदानीमनुपलभ्यमानत्वादित्यनैकान्तिक इति समर्थितं भवति ॥३७२७॥

अथासौ युगपद्ज्ञानदर्शनवादी आगमवाक्येन स्वपक्षसाधनमाविष्करोति—

**आह भणितं णणु सुते "केवलिणो केवलोवयोगेणं ।**
**पढम" त्ति तेण गम्मति सतोवयोगोऽयं तेसिं ॥३७२८॥**

आह भणितमित्यादि । ननु श्रुतैकदेशे वचनमस्ति–"केवलिनः केवलोपयोगेन प्रथमाः नाप्रथमाः :"[ ] इति । यो[2] येन भावेन पूर्वं तथा नासीदिदानीं च जातः स

---

१ व्याख्याप्रज्ञप्तिसूत्रे अष्टादशशतकस्य प्रथमोद्देशके मूलपाठ एवम्—"केवलनाणी जीवे मणुस्से सिद्धे य एगत्त-पुहुत्तेण पढमा नो अपढमा"-मुद्रित पृ०७३२ । श्रीमलधारिहे०वृत्तौ तु अयं पाठः एवं निर्दिष्टः—"केवली णं भंते ! केवलोवओगेणं किं पढमा अपढमा ? गोयमा ! पढमा नोअपढमा"—पृ० १२०४, ३१०८ गाथाया वृत्तौ । २ अस्य लक्षणस्य इयं गाथा व्याख्याप्रज्ञप्तिसूत्रे (पृ०७३२) एवं विद्यते–"इमा लक्खणगाहा–जो जेण पत्तपुव्वो भावो सो तेण अपढमओ होइ । सेसेसु होइ पढमो अपत्तपुव्वेसु भावेसु" ॥ वृत्तिकारश्रीअभयदेवसूरिणा एषा गाथा तत्र वृत्तौ व्याख्याताऽपि ।

तेन भावेन प्रथम उच्यते, तस्य परिणामस्य प्रस्थापकत्वात् । स च केवलयोः ज्ञान-दर्शनयोरुपयोगः केवलोपयोग इति उभयपरिग्रहात् प्रथमप्रवृत्तेः केवलिनो युगपदुपयोगता सिद्धेति ॥३७२८॥

यद्येवं तत इदम्—

**उवयोगग्गहणातो इध केवलणाण-दंसणग्गहणं ।**
**जति तदणत्थंतरतो[1] हवेज्ज सुत्तम्मि को दोसो ? ॥३७२९॥**

**उवयोगग्गहणातो** इत्यादि । उपयोगग्रहणाच्चेदुभयोर्ग्रहणं भवेत्, एवं तर्हि तयोरनर्थान्तरत्वं प्राप्तम्—ज्ञानं च दर्शनं चैकमेव वा स्थि(ऽस्ति इ)ति ॥३७२९॥

इतर आह—भवतु, को दोषः ? दोषकुतूहलं चेद् ब्रूमः—

**तग्गहणे किमिह फलं णणु तदणत्थंतरोवदेसत्थं ।**
**तध वत्थुविसेसत्थं सतसो सुत्ताइं समयम्मि ॥३७३०॥**

**तग्गहणे किमिह फलं** । यद्यनर्थान्तरं ज्ञानं दर्शनं च, नन्वयं सूत्रदोषः—स्थाने स्थाने 'केवलज्ञानं केवलदर्शनं च' इति भेदेन किमिति भण्यते ? तस्या(स्यो)भयस्य ग्रहणे किं फलम् ? पुनरुक्तत्वादफलमेव ग्रहणं प्राप्नोति । ततोऽसौ युगपद्वादी प्रत्याह—नैव निष्फलं तयोरभिधानम्—पर्यायान्तरेण तदनर्थान्तरोपदेशार्थत्वात् **"सिद्धाऽकाइय-णोसंजता०"** [गा० ३७३१]आद्युपदेशवत् । तथा च वस्तुविशेषज्ञापनायैवंप्रकाराणि सूत्राणि शतशः सिद्धान्ते प्रसिद्धानि । 'शतशः' इति बहुत्वाऽऽख्यापनार्थः—'बहुशः' इत्यर्थः ॥३७३०॥

तानि चेमादीनि—

**सिद्धाऽकाइय-णोसंजतादिपज्जायतो स एवेगो ।**
**सुत्तेसु विसेसिज्जति जधेह तह सव्ववत्थूणि ॥३७३१॥**

**सिद्धाऽकाइय-णोसंजता०** इत्यादि । भव्यत्वपर्यायविगमात् सिद्धः, स एव कायवत्त्वपर्यायविगमाद् अकायिकः, असंयतत्व-संयतत्वविगमाच्च स एव नोसंयतः इत्येक एवार्थोऽनेकेन विशेषेणापुनरुक्तेन चोद्यते सफलश्चेति । तथा ज्ञान-दर्शनपर्यायाभ्यामेक एवोपयोगः आख्यायत इति को दोषः सामान्याकारपरिच्छेदाद् विशेषाकारपरिच्छेदाच्चेति ? तस्मादेकमेवेदं वस्तु ज्ञानं दर्शनं चेति ॥३७३१॥

यच्चापि त्वया अत्यन्तभेदवादिना ज्ञापकमुपदर्श्यते **प्रज्ञप्ति-प्रज्ञापनादिषु** ग्रन्थेषु [अ]न्यत्वाऽऽख्यापकं वचनम् "केवली णं भंते ! जं समयं जाणइ णो तं समयं पासइ" । तदपि च न, यत एव तद(द्) व्याख्यात(न)म्—

---

१ 'इदम्'पर्यायः 'इम'शब्दोऽपि वर्तते ।

भणितं पि य पण्णत्ती-पण्णवणादीसु जध जिणो समयं ।
जं जाणति ण वि पासति तं अणु-रतणप्पभादीणि ॥३७३२॥
इवसद्द-मतुप्पच्चयलोवा तं बेन्ति केइ छतुमत्थे[1] ।
अण्णे पुण परतित्थियवत्तव्वमिणं ति जंपंति ॥३७३३॥

भणितं पि य पण्णत्ती० इत्यादि । इवसद्द-मतुप्पच्चयलोवा इत्यादि । एतत् प्रज्ञप्ति[2]-प्रज्ञापनादिवाक्यं विशिष्टज्ञेयविषयम्, परमाणु-रत्नप्रभादि[3]ज्ञेयाधिकारात् पुरुषविशेषापेक्षं च । जिन इवातिशयवत्त्वात् 'इव'शब्दलोपं कृत्वा 'जिन(नः) छद्मस्थः' एवोच्यते, जिनोऽस्य शासिता विद्यत इति जिनत्वान्(नत्ववान्)छद्मस्थः, तस्य मत्व(तुप्)प्रत्ययलोपात् जिन शब्द एव वाचक इति छद्मस्थ(स्थः) परमाण्वादीनि यत् समयं जानाति न तत् सम[यं] पश्यतीति नैष दोषः । परमार्थकेवली तु युगपदेव जानाति पश्यति चेति । अन्ये पुनरस्य प्रज्ञप्तिसूत्रस्य परिहारमाहुः—'परतीर्थ(र्थि)क-वक्तव्यमेतत् प्रसङ्गापतितम्'इति न दोषावहं हेयपक्षत्वात् ॥३७३२–३३॥

अस्य प्रतिविधानं क्रमोपयोगवादिना सूत्र एव दर्श्यते—

जं छतुमत्था[4]ऽधोधियपरमावधिणो विसेसितुं कमसो ।
[२४६–प्र०]णिद्दिसति केवलिं[5] ते[6]ण तस्स छतुमत्थता णत्थि ॥३७३४॥

जं छतुमत्थाऽधोधिय० इत्यादि । यस्माच्छद्मस्थान् अधोवधिक-परमावधीन् विशेष्य क्रमशः तत्पर्यन्ते केवलिग्रहणं करोति तद् ज्ञापयति—'इह(व)'शब्दलोपात् 'मतुप्'प्रत्ययलोपाद्वा ओ(औ)पचारिकः केवली न भवति, किं तर्हि ? परमार्थकेवली, ततस्तस्य छद्मस्थता नास्ति । कदाशङ्का[7]—'अधोवधिक-परमावधिज्ञानिव्यतिरिक्त(क्तः) छद्मस्थो नो भविष्यति' इति, तदपि न, यत एतावेवाधिकृतौ छद्मस्थौ परमाणुदर्शन-विचारसंबन्धात् ॥३७३४॥

---

१ °त्थो को है त । २ व्याख्याप्रज्ञप्तिसूत्रे अष्टादशशतकस्य अष्टमोद्देशके मूलसूत्रपाठ एवम्—"छउमत्थे णं भंते ! मणुस्से परमाणुपोग्गलं किं जाणति पासति उदाहु न जाणति न पासति ? गोयमा ! अत्थेगतिए जाणति न पासति, अत्थेगतिए न जाणति न पासति" इत्यादिकः सविस्तरः पाठः—मु०पृ०७५५सूत्र ६४१ । ३ प्रज्ञापनासूत्रस्य त्रिंशत्तमपदे (मु०पृ०५३१) रत्नप्रभादिविषयकप्रश्नोत्तरस्य मूलसूत्रपाठ एवम्—"केवली णं भंते ! इमं रयणप्पभं पुढविं आगारेहिं हेतूहिं उवमाहिं दिट्ठंतेहिं वण्णेहिं संठाणेहिं पमाणेहिं पडोयारेहिं जं समयं जाणति तं समयं पासति ? जं समयं पासइ तं समयं जाणइ ? इत्यादिकः "एवं सोहम्मकप्पं जाव अच्चुयं, गेविज्जगविमाणा अणुत्तरविमाणा ईसीपब्भारं पुढवीं, परमाणुं पोग्गलं, दुपदेसियं खंधं जाव अणंतपदेसियं खंधं" इतिपर्यन्तः पाठो बोध्यः । ४ °त्थो° को है । ५ °ली को । ६ तो एयस्स है । ७ 'तथा निर्दिश्यमाना कदाशङ्काऽपि न कर्तव्या' इति आशयः ।

ण य पासति अणुमण्णो छतुमत्थो मोत्तुमोधिसंपण्णं[1] ।
तत्थ वि जो परमावधिणाणी तत्तो वे किंचूणो ॥३७३५॥
ते दो वि विसेसेतुं अण्णो छतुमत्थकेवली को सो ।
जो पासति परमाणुं[2] गहणमिंधं[3] जस्स होज्जाहि ॥३७३६॥
तेसिं चिय छतुमत्थादियाण मग्गिज्जते जहिं सुत्ते ।
केवलसंजम[4]-संवर-बम्भातीएहि णेव्वाणं ॥३७३७॥
तिण्णि वि पडिसेधेतुं तीसु वि कालेसु केवली तत्थ ।
सिज्झिसु सिज्झति त्ति य सिज्झिस्सति [5]चावि णिद्दिट्ठो ॥३७३८॥

**ण य पासति अणुमण्णो** इत्यादि । **ते दो वि** इत्यादि । **तेसिं चिय छतुमत्थादियाण** इत्यादि । **तिण्णि वि पडिसेधेतुं** इत्यादि । यतोऽवधिज्ञानिनं मुक्त्वाऽन्यच्छ(श्छ)द्मस्थः परमाणु(णुं) न पश्यतीति परमावधिज्ञानी तत्राधिकृतः । तं च निर्दिश्य केवलिग्रहणं कृतमिति मुख्यस्यैव केवलिनो ग्रहणम्—'यत् समयं[6] जानाति न तत् समयं पश्यति' इति । तौ चाधोवधिकर(क)-परमावधिज्ञानिनौ मुक्त्वा अन्यं(न्यः) केवली छद्मस्थः को नाम स्याद् यस्य तद् ग्रहणं भवेत् ? अपि च, विशेषणान्तरात् परमार्थकेवलिग्रहणमेतत् । यस्मात् तेषां छद्मस्थादीनां केवलिपर्यवसानानां केवलेन संयमेन, संवरणेन, ब्रह्मचर्येण वा सिद्धिः कालत्रयविषया सूत्रे मार्गिता[7], प्रतिवचनं च सूत्रे त्रीनपि छद्मस्थाऽधोवधिक[प]रमावधिज्ञानिनः प्रतिषिध्य केवलिनामेवानुज्ञा 'असिध्यन् सिध्यन्ति सेत्स्यन्ति च' इति । तस्मात् परमार्थकेवल्यसौ ॥३७३५–३८॥

एवं विसेसितम्मि वि परमतमेगंतरोवयोगो त्ति ।
ण पुणरुभयोवयोगो परवत्तव्वन्ति का बुद्धी? ॥३७३९॥

**एवं विसेसितम्मि वि** इत्यादि । यदि चैवमपि विशेषितपरिहारोऽप्यु(बु)ध्यते[8] 'यथा [9]तीर्थिकवक्तव्यमेतत्' इति । ननु तुल्ये सूत्रनिर्देशे उभयोपयोगसूत्रं परतीर्थिकवक्तव्यं न भवतीति कोऽत्र विशेषहेतुः ? ॥३७३९॥

अपि चान्य[त्] स्फुटतरं सूत्रमेकतरोपयोगे स्वसिद्धान्तवक्तव्याधिकारपतितं परतीर्थिकवक्तव्यत्वनिषेध[क]मस्ति, तस्मिन् सति कथमेवं शक्यं वक्तुमिति साहसिकत्वमाचार्यस्तेषां ख्यापयन्नाह—

---

१ य को हे त । २ °णु ग° हे °णू ग° त । ३ °भिणं को हे त । ४ °संवर-संजम° हे त । ५ वा विणि° को हे । ६ 'समय'शब्दः पुंनपुंसकलिङ्गः, अतः 'यत् समयम्' इत्यनेन 'यं समयम्' इति अर्थो बोध्यः । ७ अत्र व्याख्याप्रज्ञप्तिसूत्रस्य प्रथमशतकान्तर्गतचतुर्थस्य उद्देशकस्य सविस्तरो मूलपाठः अनुसंधेयः-मु०पृ०११३, सूत्र ४३ । ८ अपबुध्यते दुर्बुध्यते-दुर्बुद्धिविषयः क्रियते । ९ अन्यतीर्थिक इति ।

उवयोगो एगतरो पणुवीसेतिमे सते सिणातस्स ।
भणितो विगडत्थो च्चिय छट्ठुद्देसे विसेसेतुं ॥३७४०॥

उवयोगो एगतरो इत्यादि । इहार्थसूत्रम् ॥३७४०॥

एवं फुडवियडम्मि वि सुत्ते सव्वण्णुभासिते सिद्धे ।
किध तीरति परतित्थियवत्तव्वमिणं ति [२४६-द्वि०]वोत्तुं जे ॥३७४१॥

एवं फुडवियडम्मि वि इत्यादि । स्फुटमर्थतः सुबोधम्, विकटं शव्दार्थरूढमेव, न बलादक्षरकुट्टिप्राप्नि(पि)तम्, ज्ञापकानीतम्, बालिशादिगम्यं वा, विशि(श)दपदारूढमिति यावत् स्फुटविकटं सर्वज्ञभाषितं श्रुत्वा परतीर्थिकवक्तव्यग्राहोऽपनीयताम् ॥३७४१॥

अपि च—

सव्वत्थ सुत्तमत्थि य फुडमेगतरोवयुत्तसत्ताणं ।
उभयोवयुत्तसत्ता सुत्ते वुत्ता ण कत्थइ वि ॥३७४२॥
कस्सइ वि णाम कत्थयि काले जति होज्ज दो वि उवयोगा ।
उभयोवयुत्तसत्ताण सुत्तमेक्कं पि तो होज्जा ॥३७४३॥
दुविधाणं चिय जीवाण भणितमप्पाबहुं च समयम्मि ।
सागारऽणगाराण य ण भणियमुभयोवयुत्ताणं ॥३७४४॥
जति केवलीण जुगवं उवयोगो होज्ज, होज्ज तो एवं ।
सागारऽणगाराण य मीसाण य तिण्हमप्पबहुं ॥३७४५॥

सव्वत्थ इत्यादि । कस्सइ वि णाम कत्थयि इत्यादि । दुविधाणं चिय इत्यादि । जति केवलीण जुगवं इत्यादि । स्फुटार्थाः ॥३७४२–४५॥

---

१ इह अर्थसूत्ररूपः पाठः व्याख्याप्रज्ञप्तिसूत्रे पञ्चविंशतितमशतकान्तर्गते षष्ठे उद्देशके एवम्—"पुलाए णं भंते ! किं सागारोवउत्ते होज्जा ? अणागारोवउत्ते होज्जा ? गोयमा ! सागारोवउत्ते वा होज्जा, अणागारोवउत्ते वा होज्जा । एवं जाव सिणाए"—नु०पृ०८९९सूत्र७६७। श्रीमलधारिहेमचन्द्रसूरिविशेषा०वृत्तौ तु अयं पाठः एवं सूचितः—"सिणाए णं भंते ! किं सागारोवउत्ते होज्जा ? अण(णा)गारोवउत्ते होज्जा ? गोयमा ! सागारोवउत्ते वि होज्जा, अण(णा)गारोवउत्ते वि होज्जा"—मु०पृ०१२०९-१२१०। अत्र सूचितवृत्तौ एवमपि निर्देशः—"इत्यनेन सूत्रेण विशिष्य नामग्राहं स्नातकस्य केवलिनः, विकटार्थः-प्रकटार्थः" इत्यादि पृ० १२१० । २ सिणा° त । ३ सुए त । ४ सव्वे हे । ५ की° जे । ६ पि हे त । ७ °युत्तं जे ।

अधव मती छतुमत्थे पडुच्च सुत्तमिणमो ण केवलिणो ।
तं पि ण जुज्जति जं सव्वमत्तसंखाहिकारोऽयं ॥३७४६॥

अधव मती इत्यादि । यदि चैवं बुद्धिश्चोदकस्य 'छद्मस्थानेव सर्वान् प्रतीत्याऽल्पबहुत्ववक्तव्यमेतत् सूत्रम्, न केवलिनः प्रतीत्य' इति, तदपि न युज्यते वक्तुम्, यतः सर्वजीवसंख्याधिकारोऽनुवर्त्तते, तथा च गतीन्द्रिय-काय-योगादिमार्गणासु सर्वत्र संसारिप्रतिपक्षः पर्यन्ते सिद्धजीवो वर्ण्यते अगति(तिः) सिद्धः, अनीन्द्रियः सिद्धः, अकायः सिद्ध इत्यर्थः ॥३७४६॥

कातुं सिद्धग्गहणं बहुवत्तव्वयपदेसु सव्वेसु ।
इध केवलमग्गहणं जति तो [२४७-प्र०]तं कारणं वच्चं ॥३७४७॥

कातुं सिद्धग्गहणं इत्यादि । सर्वत्र बहुवक्तव्यपदेषु सिद्धग्रहणं कृत्वा साकारानाकारोपयोगपदे तु केवलमेकस्मिन् सिद्धग्रहणं नास्तीत्यत्र क(का)रणं वक्तव्यम्, वचनमन्तरेणाशक्यप्रतिपत्तेः ॥३७४७॥

अथ चैतदपि शङ्कापदं वचनान्तरेण निवर्त्यते, [2]जीवाभिगमे सिद्धजीवानां विशेष्य जीवमध्योपनिपात्य(ता)स्तित्वात्—

अधवा विसेसितं चिय जीवाभिगमम्मि एतमप्पबहुं ।
दुविध त्ति सव्वजीवा सिद्धासिद्धातिया जत्थ ॥३७४८॥
सिद्धे सइंदिय काए जोगे वेते कसाय लेस्सा यँ ।
णाणुवयोगाहारग भासग संसरीरि चरिमे य ॥३७४९॥

अधवा विसेसितं चिय । सिद्ध सइंदिय इत्यादि ॥३७४८–४९॥

अपि चान्यदपि वचनं क्रमोपयोगित्वस्य—

अंतोमुहुत्तमेव य कालो भणितो तधोवयोगस्स ।
साती अपज्जवसितो त्ति णत्थि कत्थइ विणिद्दिट्ठो ॥३७५०॥

अंतोमुहुत्तमेव य । युगपदुपयोगवादिनां केवलज्ञान-दर्शनयोः सादिरपर्यवसितोप(तः उप)योगकालो नास्ति, सूत्रेऽनुक्तत्वात्, सप्तमद्रव्यवत्, षष्ठास्तिकायवद् वा ।

---

१ °मिणं तो न को हे त । २ जीवाजीवाभिगमसूत्रे नवम्यां प्रतिपत्तौ मूलसूत्रपाठे एवं निर्देशः—"तत्थ जे ते एवमाहंसु–दुविहा सव्वजीवा पण्णत्ता, ते एवमाहंसु–तं जहा–सिद्धा य असिद्धा य" इत्यादि–मु०पृ०४३६–४४४, सूत्र २४४–२४९ । ३ अस्यां मूलगाथायां यानि 'सिद्ध-सइन्द्रिय-काय इत्यादीनि त्रयोदश पदानि निर्दिष्टानि, तानि सर्वाणि जीवाजीवाभिगमसूत्रे नवम्यां प्रतिपत्तौ सूत्र २४४–२४९, पृ० ४३६–४४४ पर्यन्ते मूलपाठे गाथानिर्दिष्टक्रमेण सूचितानि निरूपितानि च । ४ °ए त । ५ °भासा य सरीर च° त । ६ °सरीर च° को हे ।

पश्चात् क्रमोपयोगवादिनां अन्तर्मुहूर्त्तोपयोगकालः। स च सूत्रेऽभिहित इति विपक्षः ॥३७५०॥

**जध सिद्धातीयाणं भणितं सातीअपज्जवसितत्तं।**
**तध जति उवयोगाणं हवेज्ज तो होज्ज ते जुगवं ॥३७५१॥**

**जध सिद्धातीयाणं**। गतार्था। ३७५१॥

**कस्स चे णाणुमतमिणं जिणस्स जति होज्ज[2] दो वि उवयोगा।**
**णूणं ण होन्ति जुगवं जतो णिसिद्धा सुते बहुसो ॥३७५२॥**

**कस्स व णाणुमतमिणं**। यदस्ति भगवतस्तद् अवश्यं सूत्रेऽभिधीयते केवलज्ञान-दर्शनवत्। अतो युगपद् ज्ञान-दर्शनोपयोगो भगवतो नास्ति, सूत्रानुक्तत्वात्, बहुशश्च सूत्रेषु प्रतिषिद्धत्वात् हसित-कण्डूयितादिवत् ॥३७५२॥

**ण वि अभिणिवेसबुद्धी अम्हं एगंतरोवयोगम्मि।**
**तध वि भणिमो ण तीरति जं जिणमतमण्णधा कातुं ॥३७५३॥**

**ण वि अभिणिवेसबुद्धी**। नास्माकमयमभिनिवेश एकान्त[रोपयोगं] स्थापयितुम्, किन्तु परानुवृत्त्या यद्यपि च युगपदुपयोगं जिनस्य ब्रूयात् तथाऽप्यशक्योऽयमर्थ इति तदभिमुखा बुद्धिर्न्न[3] व ध्येत। न हि जिनमतमन्यथाऽस्मादृशैः शक्यं कर्तुम्, प्रतिविशिष्टतरैरन्यैः परिगृहीतत्वात्। अस्मद्विधखद्योतकैर्जिनमतमनभिभवनीयम्, सर्वार्थप्रकाशकत्वात्, सूर्यवत् ॥३७५३॥

**जति णण्णोण्णावरणं णाकारणता कधं तदावरणं।**
**एगंतरोवयोगे जिणस्स तं भण्णति सभावो ॥३७५४॥**

**जति णण्णोण्णावरणं**। एवं सर्वोपपत्तीर्निराकृता विज्ञाय पृच्छति—अन्योन्यावरणं तावत् केवलज्ञान-दर्शनयोः नास्ति, विशुद्धिस्वभावत्वात्, प्रदीपद्वयवत्। न चाऽकारणमावरणं दृष्टम्, चैतन्यस्यै(स्ये)व सर्वात्मना ॥३७५४॥

दृष्टश्चायमेकान्तरोपयोगो भवद्भिरुपवर्ण्यमानः स किमर्थमिति? उच्यते—

**परिणामियभावातो जीवत्तं पिव सभाव एवाऽयं।**
**[२४७-द्वि०]एगंतरोवयोगो जीवाणमणण्णहेतु त्ति ॥३७५५॥**

**परिणामियभावातो** इत्यादि। सर्वजीवानामेकान्तरोपयोगः, स्वाभाविकपारिणामिकभावत्वात्, जीवत्ववत् ॥३७५५॥

---

१ व को हे। २ दो वि होज्ज उ° त। ३ अयं पाठोऽशुद्धः। अत्र अर्थसंगतये इमे पाठाः संभाव्यन्ते—बुद्धिर्नः(नः—अस्माकम्)। बुद्धिरत्र। अथवा बुद्धिन बाध्येत इति ?प्रश्नवाक्यम्।

एवं ज्ञान-दर्शनविचारानन्तरं प्रसङ्गमपहाय प्रकृतमेवोच्यते । यदुक्तम् 'इधं बोन्दि चइत्ताणं तत्थ गंतूण सिज्झति' [गा० ३७७९] त्ति । तद् मृष्यन्नाह—

**गंतूण सिज्झति त्ति य भणिते सुत्तम्मि कधमकम्मस्स ।**
**आह गमणं ति भण्णति सकम्मगमणे व को हेतू ॥३७५६॥**

**गंतूण सिज्झति त्ति य** इत्यादि । शे(शै)लेश्यनन्तरं सर्वकर्मक्षयं कृत्वा शरीरपरित्यागात् तत्रैव निष्क्रियोऽवतिष्ठताम्, अकर्मत्वात्, तदाकाशदेशवत् । तस्मान्न कर्मक्षयं कृत्वा सिध्यति, किं तर्हि ? सकर्मैव तत्र लोकान्ते यात्वा कर्मक्षयं कृत्वा सेत्स्यतीत्यभिप्रायः । आचार्य आह—सकर्मणोऽपि तस्य गमनं नैव प्राप्नोति, अविद्यमानगमनकारणत्वात्, सिद्धस्येव कदाचित् भूयात् कर्मैव तस्य गमनकारणमस्तीत्यसिद्धत्वं हेतोः, तच्च न ॥३७५६॥

यतः—

**कम्मं पोग्गलमइयं णिज्जीवं तस्स णयणसामत्थे ।**
**को हेतू पडिवण्णो जति वि सभावो इध स एव ॥३७५७॥**

**कम्मं पोग्गलमइयं** । न जीवं कर्म कश्चिन्नेष्यति, अचेतनत्वात्, पाषाणवत् । अथाऽचेतनस्यापि तस्य कर्मणो नयनसामर्थ्ये प्रतिपद्यते भवता 'स्वभावः' इति, इहापि चेतनस्य जीवस्य स्वयं गमने स्वभाव एव हेतुर्भविष्यति कर्मवदिति । यदि चेयमाशङ्का—निष्क्रियोऽसौ जीवः, अरूपत्वात्, आकाशवत् ॥३७५७॥

तन्निवर्त्तनार्थम् उच्यते—

**सकिरियं किमरूवं भण्णति सुवि चेतणं व किमरूवं ।**
**जध से विसेसधम्मो चेतण्णं तध मता किरिया ॥३७५८॥**

**सकिरियं किमरूवं** इत्यादि । एवं तद्वनयोपपत्त्या अरूपत्वादाकाशवत् अचेतनत्वमपि विरुद्धधर्मः स्यात्—अचेतनो जीवः, अरूपत्वात्, आकाश-धर्माधर्मादिवत् । ततः स्वजीवत्वहानिरेवेति विशेषधर्मस्तस्य स्वाभाविकश्चेतकत्वं नाम विनोपपत्त्या प्रतिपन्नं तथा विनोपपत्त्या स्वाभाविकमेव सक्रियत्वं प्रतिपत्तव्यम् । न हि स्वभावः पर्यनुयोक्तुं शक्यः । हे जीव ! किं चेतनस्त्वम् ? हे आकाश ! किम् अमूर्त्तत्वम्(स्त्वम्) ? किञ्च, असर्वगतः ? इत्यादि । अग्निर्वा किमुष्णः ? इति सर्वत्र तुल्योपालम्भत्वात् । अथ

---

१ 'अत्र प्रस्तावात् समायातं ज्ञान-दर्शनविचाररूपम् अनन्तरं प्रसङ्गम् अपहाय प्रस्तुतमेव वक्ष्यते इति भावः । २ 'तस्य गमनकारणं कर्मैव अस्ति' इति भूयात् इति अन्वयः । ३ व को हे त । ४ सुविचे० त ।

केनचिदुपपत्तिरुच्यते– 'अग्नेरूर्ध्वज्वलनम् वायोश्च तिर्यक्पवनम् अणु-मनसोस्त्वा (स्त्वाद्यं) कर्मेभ्य(त्य)दृष्टकारिका(ता)नि'' [वैशेषिकसू०पा०२सू०१४] इति । अत्रापि अदृष्टस्य कुत इदं सामर्थ्यं येनैतानि करोति ? अथ ततोऽन्यत् कारणम्, तत्राप्येवमेवेत्यनवस्था। अवश्यं च पर्यन्ते स्वभाव एव शरणं नान्यत् किञ्चिदिति वरमयमेव अभ्युपगन्तुम् किमुत्तरोत्तरक्लेशेन ? इति सर्वत्र तुल्योपालम्भता ॥३७५८॥

अत इयं गाथा –

जं चे[2]ह जेण किरिया कारणमब्भुवगतं तहिं वे[3]सो ।
तुल्लोवालंभो च्चिय जंति ण सभावो सरणमेक्को ॥३७५९॥

जं चेह जेण इत्यादिर्गतार्था ॥३७५९॥

अपि च तस्य निष्क्रियस्यापि गमनकारणानि बहून्युच्यन्ते—

अवि अ असंगत्तणतो बन्धच्छेदपरिणामभावातो ।
पुव्वप्पयोगतो वि[4] य तस्स गती तत्थ दिट्ठंता ॥३७६०॥
लाउअ एरण्डफले अग्गी धूमे उसू धणुविमुक्के ।
गतिपुव्वपयोगेणं एवं सिद्धाण वि गती तु ॥३७६१॥
जध मिल्लेवाऽवगमाद्लाबुणोऽवस्समेव गइभावो ।
उद्धं च णियमतो णण्णधा, ण वा जलतलादुद्धं ॥३७६२॥

अवि अ असंगत्तणतो । लाउअ एरण्डफले । जध मिल्लेवाऽवगमा० इत्यादि । कर्मविमुक्तो जीवो ऊर्ध्वमेव नियमाद् गमिष्यति न च लोकान्तपरतः, असंगतत्वात्, अष्टमृत्तिकालेपलिप्ताधोनिमग्नक्रियापनीतमृत्तिकालेपजलतलमर्यादोर्ध्वगामितथा यथालाबुवत् ॥३७६०–६२॥

तध कम्मलेवविगमे गतिभावोऽ[२४८-प्र०]वस्समेव सिद्धस्स ।
उद्धं च णियमतो णऽण्णधा, ण वा लोगपरतो त्ति ॥३७६३॥

तध कम्मलेव० इत्यादिर्गतार्था ॥३७६३॥

एरंडातिफलं जध बन्धच्छेदेरितं दुतं जाति ।
तध कम्मबंधच्छेदेण ईरितो जाति सिद्धो त्ति ॥३७६४॥

एरंडातिफलं । कर्मबन्धनच्छेदानन्तरम् ऊर्ध्वं सिद्धो गमिष्यति, छिन्नबन्धनत्वात्, एरण्डादितद्विधफलवत् ॥३७६४॥

---

१ वैशेषिकसूत्रपाठे तु 'मनसोश्चाद्यम्' इति पाठः । २ वेह को हे । ३ एसो हे, ऽपेसो को । ४ जं न हे त । ५ च्चिय हे त । ६ अयं शब्दः वकारयुक्तोऽपि उपलभ्यते । ७ °बधच्छेयणेरि° को हे त ।

उद्धगतीपरिणामो जध जलणस्स जध वेह धूमस्स ।
उद्धंगतिपरिणामो सभावतो तध विमुक्कस्स ॥३७६५॥
जध ते सलाभकाले चेव तधा गतिसभावतामेन्ति ।
परिणमति तग्गतिं वा लेवावगमे जधा लावू ॥३७६६॥
तध तग्गतिपरिणामं परिणमति सरूवलाभ एवेह ।
सिद्धो सिद्धत्तं पिव सकम्मपरिणामणिरवेक्खं ॥३७६७॥

उद्धगतीपरिणामो इत्यादि । जध ते सलाभकाले इत्यादि । तध तग्गतिपरिणामं इत्यादि । यथा तौ अग्नी ग्नि)धूमौ स्वात्मलाभकाल एवोर्ध्वगतिपरिणामभावमुपयातः, यथा च लव्या(लेपा)पगमानन्तरं तथोर्ध्वादिगतिपरिणाममापद्यतेऽलाबु, तथा सिद्धोऽपि स्वात्मलाभकाल एवोर्ध्वगतिपरिणाम(नं) स्वाभाविकं प्रतिपद्यते—अलाबुवुद्ध्या(वद् वा) स्वकर्मलेपापगमानन्तरं स्वाभाविकत्वं प्राप्नोति । ऊर्ध्वगतिपरिणाम एव सिद्धः, स्वाभाविकपरिणामत्वात् , अग्नि-धूमवत् ॥३७६५-६७॥

जध धणु-पुरिसपयत्तेरितेसुणो भिण्णदेसगमणं तु ।
गतिकारणविगमम्मि वि सिद्धं पुव्वप्पयोगातो ॥३७६८॥
बन्धच्छेतणकिरियाविरमे वि तधा विमुच्चमाणस्स ।
तस्साऽऽलोगंतातो गमणं पुव्वप्पयोगातो ॥३७६९॥

जध धणु-पुरिसपयत्तेरितेसुणो इत्यादि । बंधणच्छेतण० इत्यादि । कर्मबन्धच्छेदनक्रियाविरामेऽपि सिद्धस्याऽऽलोकान्ताद् देशान्तरगमनं भविष्यति, पूर्वप्रयुक्ततत्क्रियत्वात् , धनुष्-पुरुषप्रयत्नेरितइषुवत्—धनुश्च पुरुषप्रयत्नश्च धनुष्पुरुषप्रयत्नौ ताभ्यामीरितः क्षिप्तः, स चासाविषुश्च ॥३७६८–६९॥

जध वा कुलालचक्कं किरियाहेतुविरमे वि सकिरियं ।
पुव्वप्पयोगतो च्चिय तह किरिया मुच्चमाणस्स ॥३७७०॥
णालाबुकादिसाधम्ममत्थि सिद्धस्स मुत्तिमत्तातो ।
[२४८–द्वि०]तण्णो तग्गतिपरिणामदेससाधम्मतो तेसिं ॥३७७१॥

जध वा कुलालचक्कं इत्यादि । क्रियाहेतुकर्मविगमेऽपि सिद्धस्य गतिपरिणामस्तत्कृत एव भविष्यति, पूर्वप्रयुक्तत्वात् कुलालचक्रस्येव दण्डादिविगमे । णालाबुकादि-

१ उड्ढंग° त । २ उड्ढं° को हे त । ३ °बु जे, °बुं हे त । ४ विरम° जे । ५ तत्थ जे ।

**साधम्ममत्थि ।** एवं तर्ह्यलाब्वेरण्डफलाग्निधूमशरचक्रादिदृष्टान्तसाधर्म्यात् तद्गतिपरिणामवद् मूर्तत्वमपि सिद्धस्य सर्वसाधर्म्या(त्) प्राप्नोतीति इष्टविघातकृद् विरुद्धः, तच्च न, सर्वप्रवादिनामात्मपदार्थस्य जीवस्यामूर्तत्वसिद्धेरभ्युपगमविरोधात् । विरुद्धो ह्यसति बाधने चोद्यते, इह चाभ्युपगमेन बाधाऽस्तीति न विरुद्धः । अपि च, देशसाधर्म्यादेव दृष्टान्तो भवति, अन्यथा सर्वसाधर्म्ये 'स एव सः' इति द्वितीयवस्त्वभावात् दृष्टान्ताभाव एव ॥३७७०-७१॥

अत इयं गाथा—

**जति व ण देसोवणयो दिट्ठंतो तो ण सव्वधा 'जुत्तो ।**
**जं णत्थि वत्थुणो वत्थुणा जए सव्वसाधम्मं ॥३७७२॥**

**जति व ण देसोवणयो ।** गतार्था ॥३७७२॥

**उड्ढगतिहेतुतो च्चिय णाधो-तिरियगमणं ण वाऽचलता ।**
**सविसेसपच्चयाभावतो य सव्वण्णुमततो य ॥३७७३॥**

**उड्ढगतिहेतुतो च्चिय ।** एवं सिद्धः सन्न अधोगमिष्यति, न चा(च) तिर्यक्, न चानत्र(चात्र) स्थापवा(स्थायिता) भवि(भवि)ष्यति, ऊर्ध्वगतित्वात्, पूर्वप्रयुक्तानुपरतसंस्कारत्वात्, अग्न्यादिचक्रादिवत् । अथवा एवमेव गमनं सिद्धस्य सत्यम्, सर्वज्ञार्हत्प्रोक्तत्वात्, उत्पाद-व्यय-ध्रौव्यस्वभावाङ्गुलिद्रव्यवत् अग्न्यौष्ण्यवद् वा ॥३७७३॥

**गतिमत्ततो विणासी केसी गच्चागतीय मणुओ व्व ।**
**होतु गतिपज्जयातो णासी ण तु सव्वधाऽणु व्व ॥३७७४॥**

**गतिमत्ततो विणासी** इत्यादि । विनासी(शी) सिद्धः, गतिमत्त्वात्, मनुष्यवत् । तथा क्लेशी गत्यागमवांश्च, गतिमत्त्वात्, मनुष्यवत् । अत्रोच्यते, अविनाशी—नित्यत्वात्—परमाणुर्गतिमान् दृष्ट इत्यनैकान्तिकः ॥३७७४॥

**केसणिमित्तं कम्मं ण गती तदभावतो तओ कत्तो ।**
**अध गतिरेव णिमित्तं किमजीवाणं तओ णत्थि ॥३७७५॥**

**केसणिमित्तं कम्मं ण गती** इत्यादि । न हि गतिः क्लेशकारणम्, किं तर्हि ? कर्माणि, तानि च तस्यापगमा(ता)नीति न क्लेशवान् । अथ गतिरपि क्लेश एवेति, ततोऽनैकान्तिकः । अजीवाः पुद्गलाः गतिमन्तो दृष्टाः, न च ते क्लेशिन इत्यनैकान्तिकः ॥३७७५॥

अथेयमाशङ्का—

---

१ सिद्धो हे त । २ °गमीय को हे, एस्छागमी य त । ३ होइ को हे त ।

**केसो त्ति जीवधम्मो होज्ज मती होतु कधमजीवस्स ।**
**किध वा भवत्थधम्मो होतु भवातो विमुक्कस्स ॥३७७६॥**

**केसो त्ति जीवधम्मो** । क्लेशो नाम दुःखम्, स जीवधर्मः कथमजीवेषु व्यपदिश्यते ? संभवे व्यपदिश्यते—"संभवे व्यभिचारे च विशेषणं विशेष्यते" [ ] । नन्वेवमेव जीवाः केचित् क्लेशिनः, केचिदक्लेशा इति द्वितयसम्भवे संसारिधर्मः क्लेशित्वं कथं सिद्धेषु संसारित्वं(त्व)विगमाद् भविष्यतीति ? ॥३७७६॥

**जं गतिमतो विघातोऽवस्सं तक्कारणं च जदवस्सं ।**
**विहतस्सावत्थाणं जतो य गमणं ततो पुच्छा ॥३७७७॥**

**जं गतिमतो विघातो** इत्यादि । गतिमान् सिद्धमेतत्, तस्य गतिमतोऽवश्यं विघातेन भवितव्यम्, विघातस्य च कारणेन भवितव्यम्, विहतश्च स्थितिपरिणामः क्वाऽवतिष्ठते ? कस्माच्च स्थानात् तस्य गमनम् इति ? एतदवश्यं वक्तव्यमिति प्रश्नगाथा ॥३७७७॥

**कहिं पडिहता सिद्धा कहिं सिद्धा पइट्ठिता ।**
**कहिं [1]बोंदिं चइत्ताणं कत्थ गंतूण सिज्झति ? ॥६७८॥३७७८॥**

**कहिं पडिहता सिद्धा** ? इत्यादि ॥३७७८॥

अस्य प्रश्नस्य व्याकरणगाथा—

**अलोए पडिहता सिद्धा लोगग्गे य पतिट्ठिता ।**
**इधं बोन्दिं चइत्ताणं तत्थ गंतूण सि[२४९-प्र०]ज्झति ॥६७९॥३७७९॥**

**अलोए पडिहता सिद्धा** इत्यादि । **इधं बोन्दिं चइत्ताणं** । बोन्दिः शरीरम्, तत् त्यक्त्वा लोकान्तं गत्वा सिध्यतीति अनेकक्रियाकलापः कथमेकसमये युक्तः ? पूर्वकालोत्तरकालक्रियाविषयश्च कथं 'क्त्वा'प्रत्ययः ? ॥३७७९॥

उपपत्तिगाथा—

**जमिहं[2] बोन्दिच्चाओ तदेव सिद्धत्तणं ति[3] जं वेहं ।**
**तस्साधणं ति तो पुव्वभावणयतो इधं सिद्धी ॥३७८०॥**

**जमिहं बोन्दिच्चाओ** इत्यादि । इह मनुष्यक्षेत्रे बोन्दित्यागः—शरीरत्यागः—तदेव च तत्समयमेव सिद्धत्वम् यद्वा तस्य सिद्धत्वस्य साधनं सम्यग्दर्शनप्रतिपत्त्यादि शैलेशीपर्यवसानं तदिहैव मनुष्यक्षेत्रे, तस्मात् पूर्वभावप्रज्ञ(ज्ञा)पनीयनयाभि-

१ बुंदिं म । २ त प्रतौ 'भाष्यम्' इति निर्दिश्य गाथायाः प्रारम्भः । ३ च को हे त । ४ चेह को, चेहं हे त ।

प्रायव्यवहारिकादिहैव सिद्धिः यत पुनरिदमुक्तम् 'तत्थ गंतूण सिज्झति'[गा० ३७-७९]त्ति । तं (तत्) निश्चयनयाभिप्रायात् प्रत्युत्पन्नविषयत्वात् ॥३७८०॥

तत्रोपपत्तिः—

जेण तु ण वोन्दिकाले सिद्धो चायसमए य जं गमणं ।
पच्चुप्पण्णणयमतं सिज्झति गंतूण तेणेह ॥३७८१[1]॥

जेण तु ण वोन्दिकाले इत्यादि । यस्मात् सशरीरकाले सिद्धो न भवति, सकर्मत्वात् । शरीरत्यागसमये च पूर्वप्रयोगात्, बन्धच्छेदात् तथागतिपरिणामाच्च गमनमेव संवृत्तम् । तेनैव च समयेन लोकान्तप्राप्तिः, शरीरत्यागः, सिद्धत्वपर्यायसम्भूतिरित्यतस्तत्र लोकान्ते गत्वा सिध्यतीति निश्चयनयवचनम् ॥३७८१॥

किं सिद्धालयपरतो ण गती धम्मत्थिकायविरहातो ।
सो गतिउवग्गहकरो लोगम्मि जमत्थि णालोए ॥३७८२॥
लोगस्सऽत्थि विवक्खो सुद्धत्तणतो घडस्स अघडो व्व[2] ।
स घडाती चेअ मती ण णिसेधातो तदणुरूवो ॥३७८३॥
तम्हा धम्माधम्मा लोगपरिच्छेदकारिणो जुत्ता ।
इधराऽऽगासे तुल्ले लोगाऽलोगो त्ति को भेतो ? ॥३७८४॥

किं सिद्धालयपरतो ण गती धम्मत्थिकायविरहातो इत्यादि । गणधरव[3]क्तव्यतायां यथोपयोगं सर्वा एव गाथा व्याख्याता इति नेह व्याख्यायन्ते यावत् सिद्धनमस्कारोपसंहारः । सर्वोऽप्ययं गतार्थो ग्रन्थः इति ॥३७८२-३७८४॥

लोगविभागाभावे पडिघाताभावतोऽणवत्थातो ।
संववहाराभावो संबंधाभावतो होज्ज ॥३७८५॥
णिरणुग्गहत्तणातो ण[4] गती परतो जलाति व झसस्स ।
जो गमणाणुग्गहिता सो धम्मो लोगपरिमाणो ॥३७८६॥

---

१ अस्याः [३७८१] गाथाया अनन्तरं या इमा 'किं सिद्धालय०' [गा० ३७८२] इत्यतः 'भवतो सिद्धो' [गा० ३७९८] पर्यन्ताः सप्तदश गाथाः त प्रतौ न विद्यन्ते तथा हे मुद्रित-पुस्तकेऽपि न विद्यन्ते । एतद्विषये मल०हे० सूचितं यत् "सप्तदश गाथाः पूर्वं षष्ठगणधरे लिखिता व्याख्याताश्चेति नेह लिख्यन्ते" पृ० १२११ । प्रस्तुतायाम् अस्यां ३७८२ गाथाया वृत्तौ तु वृत्तिकारेण सूचितं यद् अस्या ३७८९ गाथातः अनन्तरम् 'सिद्धाण नमोक्कारो' [गा० ३८९७] पर्यन्ताः शताधिकत्रयोदशगाथा गणधरवक्तव्यतायां व्याख्याता इति नेह व्याख्यायन्ते । २ घडो व्व अघडस्स । को । ३ षष्ठादिगणधरवक्तव्यतायाम् पृ० ४०८ गा० २३०५तः आरभ्य ज्ञातव्यम् । ४ परतो न गती ज° को ।

अत्थि परिमाणद्दारी लोगस्स पमेयभावतोऽवस्सं ।
णाणं पिव णेयस्सा [२४९-द्वि०]लोगत्थित्ते य सोऽवस्सं ॥३७८७॥
पडणं पसत्तमेवं थाणातो तं च णो जतो छड्डी ।
इध कत्तिसाधणेयं कत्तुरणत्थंतरं थाण ॥३७८८॥
णभणिच्चत्तणतो वा थाणविणासपडणं ण जुत्तं से ।
तध कम्माभावातो पुण[1] किरियाऽभावतो यावि ॥३७८९॥
णिच्चत्थाणातो वा वोमातीण पडणं पसज्जेज्ज ।
अध ण मतमणेगंतो थाणातोऽवस्स पडणं ति ॥३७९०॥
कतकातिमत्तणातो मोक्खो णिच्चो ण होति कुम्भो व्व ।
णो पद्धंसाभावो भुवि तद्धम्मा वि जं णिच्चो ॥३७९१॥
अणुदाहरणमभावो एसो त्ति मती ण तं जतो णियतो ।
कुंभविणासविसिट्ठो भावो च्चिय पोग्गलमयो सो ॥३७९२॥
किं वेगंतेण कतं पोग्गलमेत्तविलयम्मि जीवस्स ।
किं णिव्वत्तितमधियं णभसो घडमेत्तविलयम्मि ॥३७९३॥
सोऽणवराधो व्व णरो ण बज्झते वन्धकारणाभावा ।
जोगो य बन्धहेतू ण य सो तस्सासरीरो[2] त्ति ॥३७९४॥
ण पुणो तस्स पसूती बीयाभावा[२५०-प्र०]दिहंकुरस्सेव ।
बीयं च तीय कम्मं ण य तस्स तयं ततो णिच्चो ॥३७९५॥
दव्वामुत्तत्तणतो णभं व णिच्चो मतो स दव्वतया ।
णणु विभुतातिपसंगो एवं सति णाणुमाणातो ॥३७९६॥
को वा णिच्चग्गाहो सव्वं च्चिय वि[3]भवभंगथितिमतियं ।
पज्जायंतरमेत्तप्पणा हि णिच्चादिववदेसो[4] ॥३७९७॥
भवतो सिद्धो त्ति मती तेणादिमसिद्धसंभवो जुत्तो ।
कालाऽणादित्तणतो आतिसरीरं व तदजुत्तं ॥३७९८॥
तंत्थीसिप्पब्भारोवलक्खितं मणुअलोअपरिमाणं ।
लोअग्गणभोभागो सिद्धिक्खेत्तं जिणक्खातं ॥३७९९॥

---

१ °ण क्रिया° को । २ °रीरि को । ३ भवणभंगठिति० को । ४ ३७९७ गाथातः पूर्वं को मुद्रितपुस्तके (पृ० ८८७) इयमधिका गाथा दृश्यते—णाणा जीवा कुंभादयो व्व भुवि लक्खणादिभेदाओ । सुहदुक्खबंधमोक्खाऽभावो य जतो तदेगत्ते ॥३८१७॥ ५ अत्थीसिप० को अच्छीसीप० त ।

ईसीपब्भाराए सीताए जोअणम्मि लोगंतो ।
बारसहिं जोअणेहिं सिद्धी सव्वट्ठसिद्धातो ॥३८००[1]॥
णिम्मलदगरयवण्णा तुसारगोक्खीरहारसरिवण्णा ।
उत्ताणयछत्तयसंठिता तु भणिता जिणवरेहिं ॥३८०१॥
एका जोयणकोडी बातालीसं भवे सतसहस्सा[2] ।
तीसं चेव सहस्सा[२५०-द्वि०]दो चेव सता अउणपण्णा[3] ॥३८०२॥
गाउतधणुसहस्सं[4] सत्तेव सता हवंति छावट्ठा ।
एक्कत्तीसं अंगुल अद्धंगुलमेव परिधीयं[5] ॥३८०३॥
बहुदेसमज्झभाए अट्ठेव तु जोयणाइं बाहल्लं ।
चरिमंतेसु अ तणुई अंगुलंसखेज्जती[6] भागं ॥३८०४॥
गंतूण जोयणं जोयणं तु परिहाति अंगुलपुधत्तं ।
तीसे वि य पेरंता[7] मच्छियपत्ता तु तणुअतरी ॥३८०५॥
ईसीपब्भाराए उवरिं खलु जोयणस्स जो कोसो ।
कोसस्स[10] छब्भाए सिद्धाणोगाहणा भणिता ॥३८०६॥
तिण्णि सता तेत्तीसा धणुत्तिभाओ य कोसछब्भाओ[11] ।
[12]जो परमोगाहो अंतो ते कोसस्स छब्भाए ॥३८०७॥
उत्ताणओ[13] व पासल्लिओ व ठितं[14]गो व सण्णिसण्णो वा ।
जो जध करेति कालं सो तध उववज्जते सिद्धो ॥३८०८॥
इधभवभिण्णागारो कम्मवसातो भवंतरे होति ।
ण य तं सिद्धस्स जतो तम्मिं[15] वि तो सो तदागारो ॥३८०९[16]॥
दीहं वा [२५१-प्र०]हुं[17]स्सं वा जं चरिमभवे हवेज्ज संठाणं ।
तत्तो तिभागहीणा सिद्धाणोगाहणा भणिता ॥३८१०॥

---

१ ३८०० गाथातः ३८१४ गाथाः निर्युक्तिगाथा इति त प्रतौ निर्देशः । हे मुद्रित-पुस्तके (पृ० १२२०) एताः गाथाः "पञ्चदश प्रायो निर्युक्तिगाथाः सुगमाः, मूलावश्यकटीकातश्च बोद्धव्याः" इति निर्देशः । २ °स्साइं दी हा म । ३ °ण्णासा को । ४ °स्से को हा । ५ °रिहरियं को । ६ °लऽसंखि° दी हा °ल संखि° म । ७ रंते म । ८ सोआए हा । ९ °णंमि दी हा । १० य छब्भा° को हा म दी । ११ °ए म । १२ जं को हा म दी । १३ °णया जे त । १४ अहवा निसण्णओ चेव को हा म दी । १५ तंमी तो हा । १६ अस्या ३८०९ गाथाया अनन्तरम् एषा अधिका गाथा–जं संठाणं तु इहं भवं चयंतस्स चरमसमयम्मि । आसी अ पएसघणं, तं संठाणं तहिं तस्स ॥ हा म दी । १७ ह° को हा दी ह° म ।

तिण्णि सता तेत्तीसा धणुत्तिभागो य होंति बोद्धव्वो ।
एसा खलु सिद्धाणं उक्कोसोगाहणा भणिता ॥३८११॥
चत्तारि य रतणीओ रतणितिभागूणिया य बोद्धव्वा ।
एसा खलु सिद्धाणं मज्झिम ओगाहणा भणिया ॥३८१२॥
एगा य होति रतणी साधीया अंगुलाइं अट्ठेव[1] ।
एसा खलु सिद्धाणं जहण्ण ओगाहणा भणिता[2] ॥३८१३॥
ओगाहणाए सिद्धा भवत्तिभारो(गे)ण[3] होन्ति परिहीणा ।
संट्ठाणम[4]णित्थंत्थं जरामरणविप्पमुक्काणं ॥३८१४॥
देहतिभागो[5] सुसिरं तप्पूरणतो [6]तिभागहीणो त्ति ।
सो जोगणिरोधो[7] च्चिय जातो सिद्धो वि तदवत्थो ॥३८१५॥
संघारसंभवातो पदेसमेत्तम्मि किं ण संठाति ।
सामत्थाभावातो सकम्मतातो सभावातो ॥३८१६॥
सिद्धो वि देहरहितो सपयत्ताभावतो ण संहरति ।
[२५१-द्वि०]अपयत्तस्स किध गती णणु भणिताऽसंगतादीहिं ॥३८१७॥
जेट्ठा उ पंचधणुसततणुस्स[8] मज्झा य सत्तहत्थस्स ।
देहतिभागविहीणा[9] जहण्णिया जा विहत्थस्स ॥३८१८॥
किध मरुदेवीमाणं णाभीतो जेण किंचिदूणा सा ।
तो किर पंचसत च्चिय अधवा संकोयतो सिद्धा ॥३८१९॥
सत्तूसितेसु सिद्धी जहण्णतो कधमिहं बिहत्थेसु ।
सा किर तित्थकरेसु[11] सेसाणं सिज्झमाणाणं ॥३८२०॥
ते पुण होज्ज बिहत्था कुम्मापुत्तादयो[12] जहण्णेणं ।
अण्णे संवट्टितसत्तहत्थसिद्धस्स हीण त्ति ॥३८२१॥
[13]बाहुल्लतो य सुत्तम्मि[14] सत्त पंच य जहण्णमुक्कोसं ।
इधरा हीणब्भहियं[15] होज्जंगुल-धणुपुधत्तेहिं ॥३८२२॥
अच्छेरगादि किंचि वि सामण्णसुते ण देसितं सव्वं ।
होज्ज व अणिबद्धं चिय पंचसतादे[16]सवयणं व ॥३८२३॥

---

१ अट्ठेव य अंगुलाइं साहीआ हा म दी । २ °णाय म । ३ °त्ति भागेण को दी हा म । ४ °णित्तत्थं जे । ५ °त्ति° हे । ६ त्ति° त । ७ °रोहे को हे । ८ °हार को हे । ९ °चसयधणुतणु° को, °चसयधणुस्स म° हे । १० °हत्तिभागहीं° को हे त । ११ °सु° त । १२ कुमार° जे । १३ बाहल्लाओ जे । बाहल्लाउ त । १४ सुत्तं पि जे । १५ °तियं जे । १६ °चमता° जे ।

मुसिरपडिपूरणातो पुव्वागारं ण वा वत्थातो ।
संठाणमणित्थंत्थं[3] जं भणितं अणियताकारं ॥३८२४॥
एत्तो च्चिय पडिसिद्धं मिद्धाति[२५२-प्र०]गुणेसु दीहताकारं ।
जमणित्थं[4] त्थं पुव्वाकार वेक्खाय णाभावो ।।३८२५।।
णामुत्तस्सागारो विण्णाणस्सेव ण कुंभगभसो व्व ।
दिट्ठो परिमाणवतो णेयागारं च विण्णाणं ।।३८२६।।
जीवाणण्णं वे जतो देहागारो य से तहा तं पि ।
परिमितवत्थुत्तणतो मुत्तं कुंभादिमागारं ।।३८२७।।
जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का ।
अण्णोण्णसमोगाढा पुट्ठा सव्वे वि लोगंते ।।६८०।।३८२८।।
फुसति अणंते सिद्धे सव्वपदेसेहि णियमसो सिद्धो ।
ते वि असंखेज्जगुणा जे[12] पुट्ठा सव्वफासेहिं ।।६८१।।३८२९।।
ण जरामरणविमुक्का जीवत्तणतो मती मणुस्सो व्व ।
ण हि जीवणविरहातो ण जीवणं कम्मविरहातो ।।३८३०।।
वयसो हाणीह जरा पाणच्चाओ य मरणमीतिट्ठा ।
सति देहम्मि तदुभयं तदभावे तण्ण खस्सेव ।।३८३१।।
एक्कक्खेत्तेऽणंता पतेसपरिवड्ढिआणितो तत्तो ।
होन्ति असंखेज्जगुणाऽसंखपदेसो जमवगाहो ।।३८३२।।
एक्कक्खेत्तेऽणं[२५२-द्वि०]ता किध माता मुत्तिविरहितत्तातो ।
णेयम्मि व णाणाइं दिट्ठी[14] उवओगरूवम्मि ।।३८३३।।
मुत्तिमतामवि य समाणदेसता दीसते पतीवाणं ।
गम्मति परमाणूण य मुत्तिविमुत्तेसु का संका ? ।।३८३४।।[15]
असरीरा जीवघणा उवयुत्ता दंसणे य णाणे य ।
सागारमणागारं लक्खण[16]मेत्तं तु सिद्धाणं ।।६८२।।३८३५।।

---

१ °गारऽवहा व° को हे त । २ °गित्तत्थं जे । ३ °हयाईणं को हे त । ४ °णिच्चत्थं जे । ५ °स्सेव ण हे । ६ °रिणामव° को हे त । ७ व को हे । ८ जु० को हे त । ९ °भो व्व सागा° को त °भो व सागा° हे । १० वि को हे त । ११ सव्वओ म । १२ देसपएसेहिं जे पुट्ठा को हे त हा म दी । १३ °माइट्ठं को हे °मतिट्ठं त । १४ °ट्ठीओ वेग° को हे त । १५ अत्र पुस्तके ३८५५-५६-५७ अङ्काङ्कितं यद् गाथात्रयम् अतः पृष्ठात् पश्चाद् आगमिष्यति तत् को० मुद्रितपुस्तके (पृ० ८९२) अस्याः ३८३४ गाथाया अनन्तरं मुद्रितं विद्यते । १६ °मेयं को हा म दी ।

°वलणाणुवयुत्ता जाणन्ती सव्वभावगुणभावे ।
पासन्ति सव्वतो खलु केवलदिट्ठीहऽणंताहिं ॥६८३॥३८३६[1]॥
णाणम्मि दंसणम्मि[2] य एत्तो एक्कतरयम्मि[3] उवयुत्ता ।
सव्वस्स केवलिस्सा[4] जुगवं दो णत्थि उवयोगा ॥६८४॥३८३७॥
मुत्तो करणाभावादण्णाणी[5] खं व णणु विरुद्धोऽयं ।
जमजीवता वि पावति एत्तो च्चिय भणति तं णाम ॥३८३८॥
दव्वामुत्तत्तसभावजातितो तस्सं दूरविवरीतं ।
ण हि जच्चंतरगमणं जुत्तं णभसो व्व जीवत्तं ॥३८३९॥
मुत्तातिभावतो णोवलद्धिमन्तिंदियाइं कुंभो व्व ।
उवलंभद्दाराणि तु ताइं जीवो तदुव[२५३-प्र०]लद्धा ॥३८४०॥
तदुवरमे वि सरणतो तव्वावारे वि णोवलंभातो ।
इंदियभिण्णो णाता पंचगवक्खोवलद्धा वा ॥३८४१॥
णाणरहितो ण जीवो सभावतोऽणु व्व मुत्तिभावेणं ।
जं तेण विरुद्धमिदं अत्थि य सो णाणरहितो य ॥३८४२॥
किध सो णाणसरूवो णणु पच्चक्खाणुभूतितो णियए ।
परदेहम्मि वि गम्मति स पवित्तिणिवित्तिलिंगातो ॥३८४३॥
सव्वाव[6]णावगमे सो सुद्धतरो हवेज्ज सूरो व्व ।
तम्मयभावातो वा[7] अण्णाणित्तं ण जुत्तं से ॥३८४४॥
एवं पयासमइओ जीवो छिद्दावभासयत्तातो ।
किंचिम्मत्तं भासति छिद्दावरणप्पदीवो व्व ॥३८४५॥
सुबहुयतरं वियाणसि मुत्तो सव्वप्पिधाणविगमातो ।
अवणीतघरो व्व णरो विगतावरणोऽधवा दीवो ॥३८४६॥

---

१ ३८३५ तथा ३८३६ संख्यायुक्तया अनया गाथया सह 'इय सव्वकाल० गा० ३८५३ इत्यादिकगाथा पर्यन्ता एकोनविंशतिर्गाथाः हे मुद्रितपुस्तके (पृ० १२२५) त प्रतौ च न सन्ति। एतत्स्थाने त प्रतौ हे मुद्रितपुस्तके (पृ० १२२५) च एवं सूचितम्-'असरीर' इत्यादिनिर्युक्तिगाथात्रयं सुगमं प्रायो गतार्थं च। 'मुत्तो करणाभावे' इत्यादिकास्तु 'सुबहुतरं' इत्यादि गाथापर्यन्ता नव गाथाः पूर्वमेकादशगणधरे व्याख्याता इति नेह लिख्यन्ते। तथा 'नवि अत्थि माणुसाणं' इत्यादिकास्तु 'इय सव्वकाल०' इत्यादिगाथापर्यन्ताः सप्त गाथाः सुगमा आवश्यके व्याख्याताश्च।
२ °णंमी ए° को। ३ °रगंमि को। ४ °स्स वि को। ५ °स्सहाव वि० को। ६ °भावाभावाइण्णाणि° को मु० पृ० ८९३। ७ वा दण्णा० जे त।

ण वि[1] अत्थि माणुसाणं तं सोक्खं णेव सव्वदेवाणं ।
जं सिद्धाणं सोक्खं अव्वाबाधं उवगताणं ॥६८५॥३८४७॥

सुरगणसुहं समत्तं सव्वद्धापिण्डितं[2] अणंतगुणं ।
ण य पावति [२५३-द्वि०]मुत्तिसुहं णं[3]तेहि वि वग्गवग्गेहिं[4] ॥६८६॥३८४८॥

सिद्धस्स सुहो रासी सव्वद्धापेण्डितो जति हवेज्ज ।
सोऽणंत[5]वग्गभइतो सव्वागासे ण माएज्जा ॥६८७॥३८४९॥

जध णाम कोइ मेच्छो णगरगुणे बहुविधे वियाणंतो ।
ण चएति परिकहेतुं उवमाए तहिं असन्तीए ॥६८८॥३८५०॥

इय सिद्धाणं सोक्खं अणोवमं णत्थि तस्स ओवम्मं ।
किंचि विसेसेणेत्तो[6] सारिक्खमिणं अंतो वोच्छं ॥६८९॥३८५१॥

जध सव्वकामगुणितं पुरिसो भोतूण भोयणं कोयि ।
तण्हाछुधाविमुक्को अच्छेज्ज जधा अमततित्तो ॥६९०॥३८५२॥

इय सव्वकालतित्ता अतुलं णेव्वाणमुवगता सिद्धा ।
सासतमव्वाबाधं चिट्ठंति सुही सुहं[7] पत्ता ॥६९१॥३८५३॥

तेसिं सिद्धत्तं पिव सोक्खमसाधारणं[8]ततोऽणुवमं ।
देसोवणयातो पुण पुरिसोदाहरणमक्खातं ॥३८५४॥

जति वा संसारे च्चिय होज्ज तयं किं त[9]थं मोक्खचिन्ताए ।
तव्विधमच्चंतसुहं जत्थ व[10] सो केण संसारो ? ॥३८५५॥

अतुलं अणण्णसरिसं णेव्वाणं णिव्वुतीपरं सोक्खं ।
[२५४-प्र०]अण्णेसिं णेव्वाणं दीवस्स व सव्वधा णासो ॥३८५६॥

जं च तणुकम्मसंततिणासो बीयंकुराण वा मोक्खो ।
अण्णो ण य संताणी संताणातो ततो णासो ॥३८५७॥

जं णारगातिभावो भेव्वो[11] ण य णारगादितो भिण्णो ।
को[12]ऽयं जीवो तो णारगादिणासम्मि तण्णासो ॥३८५८॥

१ न वि य को म, नेव दी हा । २ °तं जइ हवेज्जा का । ३ °णं ताहि हा म दी । ४ °ग्गूहिं हा म दी । ५ °तभागभ° को । ६ °सेसो णे° जे त, °सेसेणित्तो दी हा । ७ सुणइ यो° को हा म । ८ °रणं तओऽणु° को हे त । ९ व त । १० व सोक्खेण सं° हे मु० पृ० १२२६ । ११ भवो व ण य को हे त । १२ कोई जीवो नो त कोई जी० को हे ।

जध तंतुमयो[1] त्ति पडो तंतुविणासम्मि सव्वधा णत्थि ।
तध णारगादिमइओ जीवो तद्भावतो णत्थि ॥३८५९[2]॥

ण हि णारगातिपज्जायमेत्तणासम्मि सव्वधा णासो ।
जीवद्दव्वस्स मतो मुद्दाणासे व्व हेमस्स ॥३८६०॥

कम्मकतो संसारो तण्णासे तस्स जुज्जते णासो ।
जीवत्तमऽकम्मकतं तण्णासे तस्स को णासो ? ॥३८६१॥

जुत्तं जं तंतुमयस्स तंतुणासे पडस्स णासो त्ति ।
अपडमयतंतुणो ण तु णासो पडमेत्तणासम्मि ॥३८६२॥

तध जीवकम्मसंजोगतो भवो तव्वियोगतो तस्स ।
जुत्तो णासो णात[२५४-द्वि०]म्मयस्स जीवस्स तण्णासो ॥३८६३॥

गम्मति देहातीणं परोप्परं कज्जकरणभावातो ।
कत्ता संताणऽहिओ दण्डघडाणं कुलालो व्व ॥३८६४॥

ण य सव्वधा विणासोऽणलस्स परिणामतो पयस्सेव ।
कुंभस्स कवालाण व तहाविकारोवलंभातो ॥३८६५॥

जति सव्वधा ण णासोऽणलस्स किं दीसते ण सो सक्खं ।
परिणामसुहुमतातो जलद[illegible]जणरयो व्व ॥३८६६॥

होतूणमिन्दियंतरगज्झा [illegible]न्दियंतरग्गहणं ।
खन्धा एन्ति ण एन्ति य पोग्गलपरिणामैतो चित्ता ॥३८६७॥

एगेगेंदियगज्झा[5] जध वायव्वादयो तधग्गेया ।
होतुं चक्खुग्गज्झा घाणातिग्गज्झतामेन्ति ॥३८६८॥

असतो खरसंगस्स व सतो वि दूरातिभावतो जं च ।
अग्गहणमतो णियमौ ण घेप्पते तेण णत्थि त्ति ॥३८६९॥

---

१ °यो पडओ तं° को हे त । २ अस्या ३८५९ गाथाया अनन्तरम् अत्र निर्दिष्टा 'ण हि णारगाति°' (३८६०) गाथातः आरभ्य 'सिद्धाण णमोक्कारो' (३८९४) गाथापर्यन्ताः पञ्चत्रिंशद् गाथाः त प्रतौ न सन्ति 'एतत्स्थाने त प्रतौ एवं सूचितम्—'न हि नारगा°' इत्यादिकाः 'कयगाइभावओ' इत्याद्यन्ता एकोनत्रिंशद् गाथाः पूर्वम् एकादशादिगणधरवादे ज्ञेयाः । 'सिद्ध त्ति य' (गा० ३८८९) इत्यादिकास्तु षड् निर्युक्तिगाथाः । इति सिद्धनमस्कारः समाप्तः ॥ हे मुद्रित वृ० पृ० १२२७ गा० ३१८८ वृत्तौ अपि एवमेव सूचनम् । १ तंणासे को मु० पृ० ८९४ । ४ °मवेचित्ता को । ५ एगिन्दि° जे त । ६ °मो न यऽपत्ते तेण को मु० पृ० ८९४ ।

ण विकारा[२५५-प्र०]णुवलंभादागासं पिव विणासधम्मं सो ।
इह णासिणो विकारो दीसति कुंभस्स वाऽवयवा ॥३८७०॥
असतो णत्थि पसूती होज्ज व जति होतु खरविसाणस्स ।
ण य सव्वधा विणासो सव्वुच्छेतप्पसंगातो ॥३८७१॥
तोऽवत्थितस्स केणइ णासो धम्मेण भवणमण्णेणं ।
वत्थुच्छेतो ण मतो संववहारावरोधातो ॥३८७२॥
कालंतरणासी वा घडो व्व कतकादितो मती होज्ज ।
णो पद्धंसाभावो भुवि तद्धम्मा वि जं णिच्चो ॥३८७३॥
जध दीवो णेव्वाणो परिणामन्तरमितो तधा जीवो ।
भण्णति परिणिव्वाणो पत्तोऽणाबाधपरिणामं ॥३८७४॥
मुत्तस्स परं सोक्खं णाणाऽणाबाधतो जधा मुणिणो ।
तद्धम्मा पुण विरहाद[illegible]बाधहेतूणं ॥३८७५॥
पुण्णापुण्णकताइं जं सुहदुक्खाइं ते[२५५-द्वि०]ण तण्णासे ।
तण्णासातो मुत्तो णिस्सुहदुक्खो जधागासं ॥३८७६॥
अधवा णिस्सुहदु[illegible]ो णभं व देहिन्दियादभावातो ।
आधारो देहो च्चिय जं सुहदुक्खोवलद्धीणं ॥३८७७॥
पुण्णफलं दुक्खं चिय कम्मोदयतो फलं व पावस्स ।
णणु पावफले वि समं पच्चक्खविरोधिता चेवं ॥३८७८॥
जत्तो च्चिय पच्चक्खं सोम्म ! सुहं णत्थि दुक्खमेवेदं ।
तप्पडिगारविसिट्ठं तो पुण्णफलं [3]पि दुक्खं ति ॥३८७९॥
विसयसुहं दुक्खं चिय दुक्खप्पडिगारतो तिगिच्छ व्व ।
तं सुहमुवयारातो ण योवयारो विणा तच्चं ॥३८८०॥
तम्हा जं मुत्तसुहं तं तच्चं दुक्खसंखएऽवस्सं ।
मुणिणोऽणाबाधस्स व णिप्पडिगारप्प[illegible]तीतो ॥३८८१॥
अध वा णाणमयोऽयं जीवो णाणोवघाति चावरणं ।
करणमणु[२५६-प्र०]गहकारिं सव्वावरणक्ख[illegible] [4]सिद्धी ॥३८८२॥
तध [5]मोक्खमयो जीवो पावं तस्सोवघातयं णेयं ।
पुण्ण[illegible]गहकारिं सोक्खं सव्वक्खये सयलं ॥३८८३॥

१ °म्मा सो को । २ °सो तोऽमुत्तो को । ३ ति जे त । ४ सुद्धी को । ५ सो° को । ६ °धा वर्ण को मु० पृ० ८९९ ।

जध वा कम्मक्खयतो सो सिद्धत्तातिपरिणतिं लभति ।
तध संसारातीतं पावति तत्तो च्चिय सुहं पि ॥३८८४॥
सातासातं दुक्खं तव्विरहम्मि य सुहं जतो तेणं ।
देहेन्दिएसु दुक्खं सोक्खं देहेन्दियाभावे ॥३८८५॥
जो वा देहिन्दियजं सुहमिच्छति तं पडुच्च दोसोऽयं ।
संसारातीतमिदं धम्मंतरमेव सिद्धसुहं ॥३८८६॥
कधमणुमेयं ति मती णाणाणाबाधतो त्ति णणु भणितं ।
तदणिच्चं णाणं पि य चेतणधम्मो त्ति रागो व्व ॥३८८७॥
कतकादिऽभावतो वा णावरणा बाधकारणाभावा ।
उप्पातट्ठितिभंगस्स भावतो वा ण दोसोऽयं ॥३८८८॥
सिद्ध त्ति य बुद्ध त्ति य पारगत त्ति य परंपरगत त्ति[1] ।
उम्मुक्ककम्मकवया अजरा अमरा असंगा य ॥६९२॥३८८९॥
णित्[2]थिण्णसव्वदुक्खा जातिजरामरणबंधणविमुक्का ।
अव्वाबाधं सोक्खं अणुहोन्ती सासं[3]तं [4]सिद्धा ॥६९३॥३८९०॥
सिद्धा[२५६-द्वि०]ण णमोक्कारो जीवं मोएति भवसहस्सातो ।
भावेण कीरमाणो होति पुणो बोधिलाभाय ॥६९४॥३८९१॥
सिद्धाण णमोक्कारो धण्णाण भवक्खयं [5]करेन्ताणं ।
[6]हितयं अणुमोयंतो विसोत्तियावारओ होति ॥६९५॥३८९२॥
सिद्धाण णमोक्कारो एवं खलु वण्णितो महत्थो त्ति ।
जो मरणम्मि उवग्गे अभिक्खणं कीरती बहुसो ॥६९६॥३३९३॥
सिद्धाण णमोक्कारो सव्वपावपणासणो ।
मंगलाणं च सव्वेसिं बितियं होति मंगलं ॥६९७॥३८९४॥
णामं ठवणा दविए भावे य चतुव्विधो तु आयरिओ ।
दव्वम्मि एगभवियादि लोइए सिप्पसत्थाति ॥६९८॥३८९५॥
पंचविधं आयारं आयरमाणा तधा[7] य भासेन्ता ।
आयारं [8]देसेन्ता आयरिया तेण वुच्चन्ति ॥६९९॥३८९६॥
आगमदव्वायरियो आयरियविया[9]णओ अणुवयुत्तो ।
णोआगमतो जाणयभव्वसरीरातिरित्[10]तोऽयं[11] ॥३८९७॥

१ वि को । २ त्ति य म । ३ °च्छिण्ण° को दी हा म । ४ °सया म । ५ °कालं म । ५ कुणंता° दी । ६ हरिभद्र वृ० (मु० पृ० ४०७) 'हिअयं अणुम्मुअंतो' अर्थश्च-"हृदयम् अनुमुञ्चन् इति । ७ °धा पभासेंता को हे त । °धा पभासंता दी हा । °धा पगासंता म । ८ दं० को । ९ आयारवि° को हे त । १० °याणाउ हे । ११ °त्तो य को ।

भविओ बद्धाऊ अभिमुहो य मूलातिणिम्मितो वा वि ।
अधवा दव्वब्भूतो दव्वणिमित्तायरणतो वा ॥३८९८॥
आ मज्जातावयणो चरणं चा[२५१-प्रा०]रो ति तीय आयारो ।
सो होति णाणदंसणचरित्ततववीरियवियप्पो ॥३८९९॥
तस्सायरणपभासणदेसणतो देसिता विमोक्खत्थं ।
जे ते भावायरिया भावायारोवयुत्ता य ॥७००॥ [2] ३९००॥
अधवाऽऽयरंति जं सयमायारं ति व जमायरिज्जन्ति [3] ।
मज्जातयाऽभिगम्मंति जमुत्तं तेण वायरिया ॥३९०१ [4]॥

सिद्धनमस्कारानन्तरमाचार्यनमस्कारप्ररूपणा । अत्र यत् सामान्यवक्तव्यं तद् गतमेव, विशेषवक्तव्यार्थ आरम्भः—

**णामं ठवणा दविए** इत्यादि । **पंचविधं आयारं** इत्यादि । नाम-स्थापनाचार्यो(र्यौ) सर्वत्र तुल्यविचारत्वान्न निर्दिष्टो(ष्टौ) ग्रन्थे । द्रव्याचार्योऽपि द्वेधा—आगमतो [नो]आगमतश्च । तत्रागमत आचार्यपदार्थाभिज्ञ(ज्ञः) तच्छब्दोच्चारणमात्रव्यापारोऽनुपयुक्तस्तदर्थे आगमतो द्रव्याचार्यः । नोआगमद्रव्याचार्यास्त्रयः—ज्ञशरीर-भव्यशरीर-तद्व्यतिरिक्ताः । तत्र पूर्वौ सर्वत्र समानप्रपञ्चौ इति सूत्रे न निबद्धौ । भव्यशरीर-तद्व्यतिरिक्तौ विशेषवक्तव्याविति सूत्रे निबद्धौ ॥३८९५-९६॥

**दव्वम्मि एगभवियादि** । लोकोत्तर-लौकिकौ व्यतिरिक्तौ । **'लोइए सिप्पसत्थाति'** । तस्य तु द्रव्याचार्यस्य चतुर्विधस्यापि भाष्यगाथा—

**आगमदव्वायरिओ** इत्यादिः स्फुटार्थाः । योऽसौ व्यतिरिक्तस्तस्य भाष्यं व्याख्यातमेव । अथवा मूलगुणनिर्वर्त्तितो वा एषोऽपि व्याख्यात एव । अथवा द्रव्यभूतः द्रव्यमिव भूतशब्दः उपमावाचीति द्रव्यनिमित्तं वा यस्याचरणम् ॥३८९७-९८॥

**आ मज्जातावयणो** इत्यादि । 'आ' मर्यादायाम् । चरणं चारः । तया मर्यादया चारः आचारं(रः), स च पञ्चधा—ज्ञान-दर्शन-चारित्र-तपो-वीर्यात्मकत्वात् ॥३८९९।

**'तस्सायरण पभासण०'** इत्यादि । तस्याचारस्य आचरणात् प्रभाषणात् देशनाद्वा देशितारो मोक्षार्थप्रवृत्ताः भावाचार्याः । नोआगमभावाचार्यास्तु तदाचारोपयुक्ताः ॥३९००॥

१ °चरणो त । २ को हे प्रत्योः इयं गाथा भाष्यरूपेण गृहीता । अस्या उत्तरार्द्धं दी हा (पृ० ४४८) म प्रतिषु निर्युक्तिरूपम् । अस्याः पूर्वार्द्धस्य स्थाने 'आयारो नाणाई तस्सायरणा पभासणाओ वा' इति पाठः दी हा (पृ० ४४८) म । ३ °णमाय° हे त । ४ इयं गाथा न दृश्यते को० मूलपाठे मु० पृ० ८९८ ।

आयरियणमोक्कारो जीवं मोएति भवसहस्सातो ।
भावेण कीरमाणो होति पुणो बोधिलाभाए ॥३९०२[1]॥
आयरियणमोक्कारो धण्णाण भवक्खयं करेन्ताणं[2]० गाधा ॥३९०३॥
आयरियणमोक्कारो एवं खलु वण्णितो० ॥ गाधा ॥३९०४॥
आयरियणमोक्कारो० ॥३९०५॥
मंगलाणं च० ततियं होति मंगलं ॥३९०६॥

अधवाऽऽयरंति इत्यादि । स्फुटार्थाः । एवमाचार्यनमस्कारोपसंहारः ॥३७०१-५॥

अथोपाध्यायनमस्कारप्ररूपणा—

णामं ठवणा दविए भावे य चतुव्विधो उवज्झाओ ।
दव्वे लोइयसिप्पा[3] धम्मे[4] तध अण्णतित्थीया ॥७०१॥३९०७॥
बारसंगो जिणक्खातो [5]ज्झायोऽयं कधि[6]तो बुधे[7] ।
तं[8] उवइसंति जम्हा उज्झाया[9] तेण वुच्चंति ॥७०२॥३९०८॥
उ त्ति उवयोगकरणे ज्झ त्ति य झाणस्स होति णिद्देसो ।
एतेण उव[२५७-द्वि०]ज्झायो एसो अण्णो वि पज्जाओ[10] ॥७०३॥३९०९॥
उवगम्म जंतोऽ[11]धीते ते जं चोवगतमज्झयावेन्ति ।
जं चोवायज्झाया हितस्स तो ते उवज्झाया ॥३९१०॥
आयारदेसणातो आयरिया विणयतो उवज्झाया ।
अत्थप्पदायगा वा गुरवो सुत्तस्सुवज्झाया ॥३९११॥
उवज्झायणमोक्कारो० गाधा ॥७०४॥३९१२॥
उवज्झायणमोक्कारो धण्णाणं० ॥गाधा ॥७०५॥३९१३॥
उवज्झायणमोक्कारो एवं खलु वण्णितो० ॥गाधा ॥७०६॥३९१४॥

---

१ अस्या ३९०२ गाथाया आरभ्य ३९०५ गाथापर्यन्तानां (३९०२-३-४-५) गाथानां स्थाने 'आयरिय०' इत्यादयः चतस्रो निर्युक्तिगाथाः । इत्याचार्यनमस्कारः समाप्तः" त । २ कुणंताणं दी । ३ °प्पाइ दो हा म । ४ धिण्हगा वा इमे भावे दी हा म । ५ सज्झा° को हे दी हा त । अज्झा° म । ६ देसिओ दी म । ७ बुधेहिं को दी हा म । प्राकृतभाषायां केषांचिद् मते ऐकारोऽपि प्रयुज्यते, अतः अत्र 'बुधै' इति रूपं साधु बोध्यम् । ८ जम्हा उवदिसन्ति झायं जे, जम्हा तं उवइसंति को । ९ उवज्झाया जे त हे दी । १० अस्या गाथाया अनन्तरम् एषा निर्युक्तिगाथा अधिका–उ त्ति उवओगकरणे प त्ति अ पावपरिवज्जणे होइ । झ त्ति झाणस्स कए उ त्ति अ ओसक्कणा कम्मे ॥ दी हा (पृ० ४४९ गा० ९९९) म । ११ ओ को । १२ °हीयए जं त । °हीयइ जं को हे । १३ "उज्झायेत्यादयः (३०१२-१३-१४-१५) चतस्रो निर्युक्तिगाथाः । इत्युपाध्याय नमस्कारः समाप्तः" इति निर्देशः केवलं त प्रतौ ।

उव[illegible]यणमोक्कारो स[illegible]पावपणासणो ।
चतुत्थं होति मंगलं ॥७०७॥३९१५॥

णामं ठवणासाधू दव्वसाधू य भावसाधू य ।
दव्वम्मि लोइयाती भावम्मि य संजतो साधू ॥७०८॥३९१६[1]॥

घडपडरधमादीणि उ साधेन्ता होन्ति दव्वसाधू त्ति ।
अधवा वि दव्वभूता णातव्वा दव्वसाधु त्ति ॥७०९॥३९१७॥

णेव्वाणसाधए जोगे जम्हा साधेन्ति साधुणो ।
समा य सव्वभूतेसु तम्हा ते भावसाधुणो ॥७१०॥३९१८॥

किं पेच्छसि साधूणं तवं व णियमं व संजमगुणे वा ।
तो वंदसि साधूणं एतं मे पुच्छितो साहे ॥७११॥३९१९॥

असहाए सहायत्तं करेन्ति[२५८—प्र०]मे संजमं करेन्तस्स ।
एतेण कारणेणं णमाम हं सव्वसाधूणं ॥७१२॥३९२०॥

साधूण णमोक्कारो जीवं मोएति० ।।गाधा।।७१३।।३९२१[3]।।

[साधूण णमोक्कारो धण्णाणं० गाधा] ॥७१४॥३९२२॥

साधूण णमोक्कारो एवं खलु० ।
जो मरणम्मि उ० ॥७१५॥३९२३॥

सा० सव्वपाव०
पंचमं होति मंगलं ॥७१६॥३९२४॥

एस पंचणमोक्कारो सव्वपावपणासणो ।
मंगलाणं च सव्वेसिं पढमं होति मंगलं ॥३९२५॥

---

१ त प्रतौ ३९१६ तः आरभ्य ३९२५ पर्यन्ता दश गाथा न सन्ति । तत्स्थाने एवं निर्देशः—"साधुनमस्कारे दश निर्युक्तिगाथाः" त । म । २ अस्या (३९१९) गाथाया अनन्तरम् अधिका गाथा एवम्–विसयसुहनियत्ताणं विसुद्धचारित्तनियमयत्ताणं । तच्चगुणसाहयाणं सदाय किच्चुज्जयाण नमो ॥ डी हा म । ३ ३९२१ गाथातः ३९२४ गाथाः मुद्रिते हा पुस्तके न सन्ति । एतासां गाथानां स्थाने "साहूण नमोक्कारो° इत्यादिगाथाविस्तरः...... विशेषस्तु सुबोध्येयः" इति निर्देशः ।

**णामं ठवणा** इत्यादि । अतः परं सर्वमपि स्फुटार्थमेवेति नाभिधीयते यावत् **'एस पंचणमोक्कारो'** [३९२६] इत्यादि । समाप्तः पञ्चनमस्कारः। पञ्चविधस्तु निर्देशात् ॥३९०७–३९२६॥

अथ आक्षेपद्वारम्—

**ण[1] संखेवो ण[2] वित्थारो[3] संखेवो दुविधो[4] सिद्ध-साधूणं ।**
**वित्थ[5]रतोऽणेगविधो [6]पंचविधो ण जुज्ज[7]ती [8]जम्हा ॥७१७॥३९२७॥**

**ण संखेवो ण वित्थारो** इत्यादि । इयं गाथा । तस्याश्चांशक्रमनियमात् छन्दोविधितो लक्षणमनेन पाठेन विरुध्यते 'ण संखेवो ण वित्थारो' अत्र चाद्ये एव पञ्चमात्रोंऽशश्च(कः) इति । अतः अपपाठोऽयमिति । 'अपि'शब्दोऽत्र विद्यमानार्थ एव प्रमादात् कैश्चिन्न पठ्यते । स चायम् **'ण वि' । संखेवो दुविधो सिद्ध-साधूणं'** । यद्यपि सन्ध्यक्षराणि गुरूणि तथापि [9]अर्द्धमात्रिकाणि सन्ध्यक्षराणि **सात्यमुग्रिकाण्ठायनीयानां** पाठे सन्तीति छन्दोऽनुवृत्त्या अर्द्धमातृकाणि पठितव्यानीति गाथांशका(क)लक्षणसम्वादिनो भवन्तीति । एवमन्यत्रापि ॥३९२७॥

यस्या आक्षेपगाथायाः सूत्र एव प्रसिद्धि[द्वार]गाथा—

**अरहंताती णियमा साधू साधू तु[10] तेसिं[11] भइतव्वा ।**
**तम्हा पंचविधो खलु हेतुणिमित्तं भवति सिद्धो ॥७१८॥३९२८॥**

**अरहंताती णियमा** इत्यादि ॥३९२८॥

अनयोः क्रमेण भाष्यगाथा—

**णिव्वुत-संसारिकताऽकतत्थलक्खणविधाणतो जुत्तो ।**
**संखेवणमोक्कारो दुविधो[12] च्चिय[13] सिद्ध-साधूणं ॥३९२९॥**

**णिव्वुतसंसारिकताकतत्थ०** इत्यादि । यदीदं नमस्कारकरणं संक्षेपतः कृतम् ततः एवं संक्षेपो भवति-निर्वृत्ता(ता)नामर्हत्-सिद्धानामेकेनैव 'सिद्ध'शब्देन ग्रहणं पर्याप्तम्, कृतार्थत्वसामान्यलक्षणसङ्ग्रहात्, इतरेषां च आचार्यादीनां संसारस्थानामकृतार्थत्वसामान्यात् 'साधु'शब्देन ग्रहणाद् द्विविध एव संक्षेपनमस्कारः, न पञ्चविधः ॥३९२९॥

---

१ न वि सं° को हे त दी हा म । २ व हा । ३ °रु हा । ४ °विहे ऽह सिं° को (वृ० मु० पृ० ९००) °हु दी हा म । ५ °त्था° दी हा । ६ न जुज्जई पंचहा तम्हा म । ७ °ज्जए को हे त । ८ तम्हा को हे त दी हा । ९ द्रष्टव्यमत्र—"कादिस्थैदोतोरुच्चारलाघवम्" सिद्धहेमे ८।१।४१० । १० य को दी हा म त । ११ तेसु को दी हा म । १२ °धोऽयं सिद्ध-साहूणं को (पृ० ९००) हे त । १३ °य सययं जे ।

अथ चायं विस्तरनमस्कार इति उच्यते, तथाऽप्येवंवक्तव्य इति दर्शयति—

**उसभातीणमणंतरसिद्धादीणं जिणातियाणं च ।**
**वित्थरतो पंचविधो ण वि संखेवो ण वित्थारो ॥३९३०॥**

**उसभातीण०** इत्यादि। **ऋषभाऽजितसम्भवाभिनन्दनसुमतिपद्मप्रभसुपार्श्वचन्द्रप्रभइत्यादिमहावीरवर्धमानस्वामिपर्यन्तेभ्यश्चतुर्विंशतयेऽर्हद्भ्यः** तथा सिद्धेभ्योऽपि विस्तरेण अनन्तरसिद्धेभ्यः, परम्परसिद्धेभ्यः द्वितीयसमय-तृतीयसमयादिसंख्येयाऽनन्तसमयसिद्धेभ्यः, तथा तीर्थ-लिङ्ग-चारित्र-प्रत्येकबुद्धादिविशेषणविशिष्टेभ्यः तीर्थकरसिद्धेभ्यः, अतीर्थकरसिद्धेभ्यः, अतीर्थसिद्धेभ्यः, इत्येवमादिरनन्तशो विस्तरः। तस्मादयं पञ्चविधः नमस्कारः अयुज्यमानक एव, संक्षेप-विस्तरानात्मकत्वात्, वन्ध्यापुत्रनमस्करणवत् ।

अत्र प्रतिविधीयते—न, 'संक्षेप-विस्तरानात्मकत्वात्' इत्यसिद्धः । कथम् ? यस्मात् संक्षेपात्मकोऽयम् । ननु संक्षेपः सिद्ध-साधुमात्रकोऽभिहितः, कारणवशात् कृतार्थाऽकृतार्थपरिग्रहात् साधुमात्रनिर्देशाद्वा । कारणनिरपेक्षतायां कथमयं संक्षेपः ? आचार्य आह—त्वया तावत् कारणवशात् साधुमात्रसंक्षेपं मुक्त्वा सिद्ध-साधुसंक्षेपोऽभ्युपगतः । एवमेवास्माकमपि पंचविह(पञ्चविध)नमस्कारः संक्षेपात्मको भविष्यति, कारणवशात् तथाभ्युपगम्यमानत्वात्, सिद्ध-साधुसंक्षेपवत् । तच्च प्रतिविशिष्टभक्त्युत्पादनादनन्तगुणाभिधानात् सकलनिर्जरानिमित्तं मार्गोपदेशकादिप्ररूपणायाम् (गा० ३९३५) अभिहितं पञ्चविधकारणम् । इति सिद्धः पञ्चविधनमस्कारसंक्षेप इति । तस्मात् अयुज्यमानत्वं साधनम् अप्रमाणम् असिद्धहेतुकत्वात्, चाक्षुषत्वसाध्यशब्दानित्यत्ववत् ।

यच्च साधुग्रहणेनार्हदादयो गृह्यन्ते तत् सत्यम्, यतोऽर्हदादयः प्रत्येकं सर्वेसाधवः, अर्हदादयः साधव एवेत्यवधारणात् । साधवस्तु न सर्वेऽर्हदादयः, केचिदर्हन्तो भवस्थकेवलिनः, केचित् सिद्धाः परिनिर्वृतत्वात्, केचिदाचार्याः, केचिदुपाध्यायाः, केचिदेतच्चतुष्टयस्थानमप्राप्ताः शिष्यमाणत्वात् साधव एव, नार्हदादिचतुष्कमिति एकपदव्यभिचारान्न तुल्याभिधानता, साधुमात्रेण पूजानवाप्तेः ।

प्रमाणमपि—साधुमात्रनमस्कार(रः) विशिष्टार्हदादिगुणनमस्कृतिफलप्रापणसमर्थो न भवति, तत्सामान्याभिधाननमस्कारत्वात्, मनुष्यमात्रनमस्कारवत् जीवमात्रनमस्कारवद्वा ॥३९३०॥

अत एतदर्थानुवाद्ययं गाथाप्रपञ्चः—

**जति वि जतिग्गहणातो होति कतं णमोक्कारतादीणं ।**
**तध वि ण तग्गुणपूआ जातेग्गुणसामण्णयातो ॥३९३१॥**

परिणाम[२५८-द्वि०]मुद्धिहेतुं च पयत्ता सा य वज्झवत्थूतो ।
पायं गुणाधियातो जा सा ण तदूणगुणलंभा ॥३९३२॥
जध मणुआदिग्गहणे होति कतं गहणमरुहतादीणं ।
ण य तव्विसेसवुद्धी तध जतिसामण्णगहणम्मि ॥३९३३॥

जति वि जतिग्गहणातो । परिणामसुद्धिहेतुं । जध मणुआदिग्गहणे इत्यादि । गतार्थाः ॥३९३१–३३॥

जति एवं वित्थरतो जुत्तो तदणंतगुणविधाणातो ।
भण्णति तदसज्झमतो पंचविधो हेतुभेदातो ॥३९३४॥

जति एवं वित्थरतो इत्यादि । एवं तर्हि सर्वत्र सामान्यमभिप्रेतविशेषणम् लं(अलं) [फल]प्रापणा[य], ततः साक्षाद्विशेष एव सर्वत्राभिधेयः इति प्राप्तः अभिप्रेतफलसम्बन्धित्वाद् ऋषभाजितादिसर्वतीर्थकराणामतीताऽनागतवर्त्तमानानाम्, सर्वसिद्धानामतीतकालवृत्तानामनन्तानाम्, सर्वाचार्योपाध्यायसाधूनां च प्रत्येकं विशिष्टजाति-गोत्र-प्रमाणाऽऽकृति-च(व)यः-संयम-श्रुतविशेषविशिष्टानाम् इति । उच्यते, तदसाध्यमस्मद्विशिष्टसर्वातिशयवाङ्मतिशक्तीनामपि गणधरादीनां तीर्थकृतां वा, किमुत अस्मद्विधानाम् भवद्विधानां वा चोदकपक्षग्राहिणाम् ? अतो विरम्यतामसद्ग्राहादस्मात्, मध्यमैव प्रतिपत्तिः—पञ्चविधसंक्षेपग्रहणमेवोक्तमार्गोपदेशनादिविशिष्टपञ्चविधहेतुसंभावितमिति ॥३९३४॥

मग्गोवदेसणाती सोऽभिहितो तप्पभेदतो भेदो ।
जध लावगादिभेतो दिट्ठो लवणातिकिरियातो ॥ दारं ॥ ३९३५ ॥

॥ [पं]सिद्धिदारं गतं ॥

मग्गोवदेसणाती इत्यादि । तेन च मार्गोपदेशादिना क्रियाविशेषेण तेऽर्हदादयः पञ्चापि भिन्नाः, परस्परविशिष्टक्रियत्वात्, लवन-पवनक्रियाविशिष्टलावक-पावकवत् ॥३९३५॥

॥ आक्षेप-प्रसिद्धिद्वारद्वयं युगपदनुवर्णितम् ॥

अथ क्रमद्वारम् ।

स च क्रमः पूर्वानुपूर्वी वा, पश्चानुपूर्वी वा । अनानुपूर्वी तु क्रम एव न भवतीति । क्रमलङ्घने वा कारणं वक्तव्यमिति क्रमभावप्रदर्शनी चोद्यगाथा—

पुव्वाणुपुव्वि ण कमो णेव य पच्छाणुपुव्वि एस भवे ।
सिद्धातीया पढमो[4] [5]बितियाए साधुणो आदी ॥७१९॥३९३६॥

---

१ °तो को हे त । २ °लंभा को । ३ अत्र ३३३५ पृ० ६४८ इति द्वारगाथानुसारेण 'पसिद्धि' शब्दः उचितः । ४ °मो जे । ५ बीया° को हे त वी डा म ।

**पुव्वाणुपुव्वि ण कमो** इत्यादि । पूर्वानुपूर्वी तावदियं न भवति, सिद्धाद्यनभिधानात् । सिद्धाश्च(द्धास्तु) कृतार्थत्वात् प्रधानं(नाः), प्रधानस्य चाभ्यर्हितत्वात् पूर्वाभिधानमिति पूर्वानुपूर्वीक्रमाभावः । अथेयमुत्क्रमतः पश्चानुपूर्वीत्युच्यते, साऽपि चैवं न घटते, सर्वपाश्चात्या अप्रधानत्वात् साधवः, अतस्तानभिधाय सिद्धाः पर्यन्ते यद्यवक्ष्यन्त ततः पश्चादनुपूर्वीति ॥३९३६॥

तमभावयिष्यत्—

**जेण कतत्था सिद्धा ण जिणा सिद्धातितो कमो जुत्तो ।**
**[1]च्छाकमो व जति संजतातिसिद्धावमाणातो ॥३९३७॥**

**जेण कतत्था सिद्धा** इत्यादिर्गतार्था ॥३९३७॥

**जं च जिणाण वि पुज्जा सिद्धा जं [2]तेऽभिणि[3]क्खमणकाले ।**
**कतसिद्धणमोक्कारा करेन्ति सामाइयं सव्वे ॥३९३८॥**

**जं च जिणाण वि पुज्जा** । जिनानामर्हतां निष्क्रमणकाले मङ्गलार्थमादौ सिद्धनमस्कारः । अतोऽवश्यमर्हतां पूज्यतमाः सिद्धाः, तैर्नमस्क्रियमाणत्वात्, आचार्यादीनामिव शेषाणामर्हन्तः । तस्मात् सिद्धादिर्नमस्कारः कर्त्तव्यः, तत्प्रधानत्वात्, परिषत्-राजनमनसम्भवे राजादिनमनवत् ॥३९३८॥

एतदसिद्धत्वोद्भावनायाह—

**अरहंतुवदेसे[२५९-म०]णं सिद्धा णज्जन्ति तेण अरहाती ।**
**ण वि[4] कोइ वि[5] परिसाए पणमित्ता पणमते रण्णो ॥७२०॥३९३९॥**

**अरहंतुवदेसेणं** इत्यादि । सिद्धास्तावदस्मदादिप्रत्यक्षागम्यास्तत एव चानुमानाविषय इत्यागमगम्या एव । स चागम आप्तप्रणीतः शब्दः । आप्ताश्च राग-द्वेषाऽज्ञानपरिक्षयादर्हन्तः, तदुपदेशात् सिद्धास्तित्वबुद्धिरेवेति तावत् प्रकाशनात् प्रधानमर्हन्त एव न सिद्धाः इति 'तत्प्रधानत्वात्' इत्यसिद्धो हेतुरिति । अतः अर्हदादिरेव नमस्कारः, तत्प्रधानत्वात्, परिषत्-राजा(ज्ञां) सन्निधाने राजादिनमस्कारवत् । एवं तर्ह्याचार्यादिर्नमस्कारः प्राप्तः, तत्प्रधानत्वात्, पूर्ववत् ॥३९३९॥

कथं तत्प्रधानत्वमिति चेत् ? अत इयं गाथा—

---

१ °च्छक° को हे, पुब्वो क्क° त । २ तेसिं णि° को हे, तेसि णि° त । ३ निक्कम° को हे । ४ °य दी म । ५ य को, °इ प° हे हा । ६ "नापि कश्चित् परिषदे प्रणम्यनामं कृत्वा-ततः प्रणमति राज्ञे" म० हे० वृ० पृ० १२३४ गाथा ३२१३ ।

जति एवं आयरिओवदेसतो जं जिणादिपडिवत्ती ।
तेणायरियादिकमो जुत्तो णो चेदणेगंतो ॥३९४०॥

**जति एवं आयरिओवदेसतो** इत्यादि । आचार्येभ्योऽर्हन्तः अप्रधानतमाः, तदुपदेशेन ज्ञायमानत्वात्, अर्हद्भ्य इव सिद्धाः । अथ च नैवं प्रधानत्वेऽप्याचार्यादिर्नमस्कारः, ततो नैकान्तिकः, अर्हदादिनमस्कारेऽपि तत्प्रधानस्य सम्भवादिति । अप्रधानमप्यादौ क्रियत एवेति । अथवा यो यदुपदेशेन शेषं जानाति स तस्य प्रधानमिति केषाञ्चिदर्हदादि [1]गणधरादीनां तदुपदेशेन शेषपरिज्ञानात् । शेषसाधूनामाचार्यादिर्भवतु, तदुपदेशेन जिन-सिद्धादिपदार्थपरिज्ञानात् एवम् ॥३९४०॥

जुत्तो व गणधराणं जिणातिओ जं जिणोवदेसेणं ।
जाणंति तेऽवसेसे सेसा यं गुरूवदेसेण ॥३९४१॥

**जुत्तो व गणधराण**मित्यादिर्भावितार्था । अथवा गणधरादीनामप्याचार्यपूर्वक एव नमस्कारो युक्तः, स्वस्य स्वस्योपदेष्टुराचार्यत्वात् । एवं चार्य(र्ह)न्तोऽप्याचार्याः, पञ्चविधाचारदेशनात्, प्रसिद्धाचार्यवत् । अतः सर्वसाधूनां गणधरप्रमुखाना(णा)माचार्यादिरेव नमस्कारः प्राप्तः, तत्प्रधानत्वात् पूर्ववत् ॥३९४१॥

एतदर्थप्रकाशनी गाथा—

अधवा आयरिओ च्चिय सो तेसिं जतो तेतो पसत्तो यं ।
आयरियातीओ च्चिय एवं सति सव्वसाधूणं ॥३९४२॥

**अधवायरिओ च्चिय** इत्यादिर्भावितार्था ॥३९४२॥

पढमोवदेसगहणं तंच्चारुहतो ण सेसएहिंतो ।
गुरवो वि तदुवदिट्ठस्स चेव अणुभासया णवरं ॥३९४३॥

**पढमोवदेसगहण**मित्यादि । इह आचारदेशनाचार्य इति द्विविधमाचारदर्शनम्—प्रथमं स्वप्रत्ययात्, परम्परतश्च परप्रत्ययात् । तत् प्रथमाचारदेशनादर्हन्नेकान्तेनाचार्य एव, स्वयंबुद्धत्वात्, शेषाः पुनः परप्रत्ययोपदेष्टारः । आचार्याश्च स्वशिष्यान् प्रति, आचार्यं प्रति त एव शिष्याः । अतस्तेषूभयसद्भावात् कथमाचार्यादिरिति प्रतिपत्तुं शक्यम्? ननु चाह(र्ह)न् भगवानाचार्य एवेति आचार्यादिरेव युक्तः,

---

१ अर्हदुपदेशेन गणधरादीनां शेषपरिज्ञानम्, अतः तेषाम् अर्हदादिः प्रधानः । २ प्रधानरूपः इति अध्याहार्यम् । ३ वि° को हे । ४ उ को हे, ओ त । ५ °सिं पि को त । ६ मई हे, जइ त । ७ नास्ति तप्रतौ । ८ मे को हे त । ९ °योइउ हे । १० तं चा° को हे ।

उच्यते, तत्ता(नन्वा)चार्यत्वमेव सिद्धम् स्वप्रत्ययार्हत्त्वसद्भावात् ना(नो)पदेष्ट(ष्टृ)त्वसामान्यात् अतो यत्प्रसादादाचार्यत्वम् स एव गुणः कथमुपसर्जनीक्रियते ? इति अर्हदादिरेवासौ, शेषाचार्याश्च गुरुशब्दवाच्यास्तदुपदिष्टस्यैवानुभाषकाः नोपदेष्टारः। अतोऽसौ स्वयंबुद्धत्वात् सर्वपूजार्हत्वादर्हन्, आचारदेशनादाचार्यः, स्वाध्यायोपायादिदेशनादुपाध्यायः, सर्वार्थसाधु(ध)नात् साधुः। ततः सर्वेषामपि गणधरादीनामस्मदादिपर्यन्तानामर्हदादिरेव नमस्कारो युक्तः, सर्वगुणसम्पदाधारत्वात्, ज्ञानादित्रयवत् ॥३९४३॥

एतदर्थं गाथायुगलम्—

**अरहंतगुरूवज्झायभावतो तस्स गणधराणं पि।**
**जुत्तो तदातिओ च्चिय ण गुरु त्ति तओ जिणो ण भवे ॥३९४४॥**
**स जिणो जिणातिसयतो सो चेय गुरू गुरूवदेसातो।**
**करणादिविणयणातो सो चेव मतो उवज्झाओ ॥३९४५॥**

**अरहंतगुरू०। स जिणो जिणा०** इत्यादिर्भावितार्थौ ॥३९४४-४५॥

एवमपि जिननिष्क्रमणकाले जिनस्य सिद्धनमस्कारकरणात् सिद्धप्राधान्यात् सिद्धादिस्तदा प्राप्नोतीति तदवस्थो दोषः—

**जति सिद्धणमोक्कारं छतुमत्थो कुणति ण य तदादीओ।**
**[२५९-द्वि०]तं पति तदा ण दोसो ण हि सो तक्कालमरहंतो ॥३९४६॥**

**जति सिद्धणमोक्कारं** इत्यादि। निष्क्रामणकाले भगवान् छद्मस्थो यदि गुणाधिकानां सिद्धानां प्रणामं करोतीत्यतः को दोषः ? भवतु नाम तं प्रति तेषां प्राधान्यम्, न चासौ नमस्कारः तदादिः—सोऽभिनिष्क्रामन् आदिरस्येति तदादिर्नमस्कारः। तस्य तदानीमर्हत्त्वाभावात् स सिद्धादिमेव नमस्कारं करोति, सिद्धसाधनं सिद्धादिनमस्कारस्तं प्रति, तीर्थकरनिष्क्रम[ण]समये तदा न दोष इत्यर्थः ॥३९४६॥

अथैवमपि चोदकश्चोदयेत्—

**[illegible]काले सिद्धादी होतु भणति तदा वि।**
**अण्णे संतरहंता ततो तदादी तओ णिच्चं ॥३९४७॥ कमो त्ति दारं ॥**

**एवमकतत्थकाले** इत्यादि। अनुत्पन्नकेवलज्ञाने भगवति अकृतार्थे तदानीमन्येषामपि सिद्धादिरेव नमस्कारः प्राप्तः, अविद्यमानार्हत्त्वात्, तीर्थच्छेदकाले इव,

१ मया त। २ °रहंतो को।

सुषमसुषमाकालवद्वा । अत्र भण्यते, अविद्यमानार्हत्त्वस्य हेतोरसिद्धत्वात् । स्वपक्ष-साधनप्रमाणं च—तदानीमप्यर्हदादिरवशेषजनानां नमस्कारः, सदैव विद्यमानार्हत्त्वात्, समयक्षेत्रकर्मभूमयो हि महाविदेहानि पञ्च अर्हद्भिरविरहितानि [इति] सर्वदा अर्हदादिर्नमस्कार इति ॥३९४७॥

॥ पूर्वानुपूर्वीक्रम एवायमिति भावितम् ॥

अथ प्रयोजनद्वारं फलद्वारं च एकयैव गाथया—

**एत्थ य पयोयणमिणं कम्मक्खय-मंगलागमो चेअ[1] ।**
**इधलोगपारलोइयदुविधफलं तत्थ दिट्ठंतो ॥७२१॥३९४८॥**

**एत्थ य पयोयणमिणं** इत्यादि । कः पुनः प्रयोजन-फलयोर्विशेषः ? उच्यते, इहैव प्रतिसमयमेतदुपयोगक्रियागुणलाभः परमनिर्जरा कर्मक्षयः तत्क्षण एव च मङ्गलार्थागमः । कालान्तरप्रतिपत्तिसु(स्तु) वर्त्तमानभवे भवान्तरे वा सर्वजनप्रकाशं फलम् ॥३९४८॥

**इध लोए अत्थ-कामा आरोग्गं अभिरंती[2] य णिंव्वत्ती[3] ।**
**सिद्धी य सग्ग सुकुले पैंच्चायादी[4] व परलोए ॥७२२॥३९४९॥**

**इध लोए अत्थ-कामा** इत्यादि । अर्थ-कामाऽऽरोग्याऽभिरति-निर्वृत्त(त)-यश्चे(श्चै)हलौकिकं फलम्, अत्यन्ततो[ऽ]बाधमोक्षसुख(खम्) अभ्युदयलक्षणं वा स्वर्गसुखम्, मनुष्यलोके वा सुकुलप्रत्यायातिरिति पारलौकिकम् ॥३९४९॥

तत्रोदाहरणानि—

**इहलोगम्मि तिदंडी सा देव्वं मातुलुंगवणमेव ।**
**परलोए चण्डपिंगल[5] हुंडियजक्खो य दिट्ठंता ॥७२३॥३९५०॥**

इहलोगम्मि इत्यादि । गतार्था ॥३९५०॥

**सततोवयोगकिरियागुणलाभो तप्पयोयणमिधेव ।**
**कालंतरणिप्फत्ती फलमिह परलोग-मोक्खेसु ॥३९५१॥**

**सततोवयोग०** इत्यादि । भावितार्था ॥३९५१॥

**कम्मक्खयोऽणुसमयं तल्लाभे चेय तदुवयोगातो ।**
**सव्वत्थेसु य मंगलमविग्घहेतू णमोक्कारो ॥३९५२॥**

---

१ चेव को हे त डी हा म । २ °रुं° त । ३ निप्फ° को हे त डी हा म । ४ पज्जा° हे, पच्चा° त । ५ °लिंग° त डी हा म ।

**सुतमागमो त्ति य तओ सुतोवयोगप्पयोयणं तं च ।**
**आतहितपरिण्णा[२६०-प्र०]भावसंवरादी बहुविकप्पं ॥३९५३॥**

कम्मक्खयो० । सुतमागमो त्ति य । स्फुटार्थौ ॥३९५२-५३॥

एकेभ्यः फलमित्यत्राक्षेपः—

**पूआफलप्पदा ण हि णभं व कोवप्पसादविरहातो ।**
**जिणसिद्धा दिट्ठंतो वेधम्मेणं णिवातीया ॥३९५४॥**

पूआफलप्पदा इत्यादि। नमस्कार-पूजाफलप्रदाः जिन-सिद्धा न भवन्ति, कोप-प्रसादवियुक्तत्वात्, आकाशवत्। ये न[मस्कार]पूजाफलप्रदास्ते कोप-प्रसादवियुता न भवन्ति, यथा नृपादय इति वैधर्म्यदृष्टान्तः ॥३९५४॥

**पूयाणुवकारातोऽपरिग्गहातो विमुत्तिभावातो ।**
**दूरातिभावतो वि[1] य विफला सिद्धादिपूय त्ति ॥३९५५॥**

पूयाणुवकारातो इत्यादि । विफला सिद्धादिपूजा इति कोऽभिप्रायः ? सिद्धाः कृतायामपि पूजायां फलं न प्रयच्छन्तीति पूजयाऽनुपक्रियमाणत्वात्, पूजाया अपरिग्राहित्वात्, विमुक्तत्वात् विगतमूर्त्तित्वात्, आदिग्रहणाद् दूरत्वात्, आकाशवत्। दूरत्वहेतोराकाशेऽन्वयो नास्तीति पृथिवीपर्यन्तजातवृक्षवत् दूरत्वात् फलं न प्रयच्छन्तीति सिद्धोऽन्वयः ॥३९५५॥

अत्र प्रतिविधीयते—

**जिण-सिद्धा देन्ति फलं पूआए केण वा पव्वणमिणं ।**
**धम्माधम्मणिमित्तं फलमिह जं सव्वजीवाणं ॥३९५६॥**

जिण-सिद्धा देन्ति फलमित्यादि । केनैतत् प्रतिपन्नम् 'जिन-सिद्धाः पूजाफलप्रदाः' इति । अनर्थकः प्रतिषेधः—सिद्धसाधनमेतदित्यभिप्रायः । नन्वेतदैहलौकिकमेदनमस्कारफलमुपवर्णितम्, सत्यमेतदुपवर्णितम् । न पुनर्जिन-सिद्धादिभिरेतद् दीयते कस्मैचित्, न वा कस्यचिदपह्रि(ह्रि)यते । यतश्च कृतधर्माधर्मनिमित्तमेतदुभयमपि फलं सर्वजीवानाम् ॥३९५६॥

**ते य जतो जीवगुणा ततो ण देया ण वा समादेया ।**
**कतणासाऽकतसंभोगसंकरेगत्तदोसातो ॥३९५७॥**

ते य जतो जीवगुणा। तौ च धर्माऽधर्मौ पुण्य-पापाख्यौ, तन्निमित्तं सुख-दुःखं

---

1 °यणो को हे त । 2 वइधं हे त । 3 वा विफ° हे त ।

च फलम्, तौ च न कस्मैचिद् दीयेत(ते), नापि ह्रियेते, न च कश्चिद् दाता, नाप्य-पहर्त्ता, कृतनाशाऽकृतसम्भोगः(ग)संकरैकत्वदोषेभ्यः ॥३९५७॥

पूजायाश्च फलमभिमतम्—

**णाणाऽणाबाधसुहं मोक्खो पूयाफलं जतोऽभिमतं ।**
**तं णाऽऽतपज्जयातो देयं जीवादिभावो व्व ॥३९५८॥**

**णाणाऽणाबाध०** इत्यादि । ज्ञानाऽनाबाधरूपं मोक्षसुखं पूजाफलं न दीयते केनचित् कस्मैचित्, जीवादिभाववत् ॥३९५८॥

**भत्तादि होज्ज देयं ण तदत्थो पूयणप्पयत्तो यं ।**
**तं पि सकतोदयं चिय बज्झणिमित्तं परो णवरं ।३९५९॥**

**भत्तादि होज्जे**त्यादि । ननु भक्तादि वस्तु शयनीयादि च फलं देयमस्ति, किमुच्यते फलमदेयमिति ? उच्यते, न तदर्थः पूजाप्रयत्नः, किं तर्हि ? मोक्षार्थः, स च फलम् । ततो भक्तादौ फलत्वमेव नास्तीत्यभिप्रायः । यस्य वा तदपि धर्मफलत्वात् फलमेव तं प्रत्युच्यते—तदपि स्वकृतकर्मजनितोदयमिति आत्मपर्याय एव स्वकृतकर्मफलत्वात् न कश्चित् परः प्रयच्छति, परस्तु बाह्यनिमित्तमात्रम् ॥३९५९॥

यतः—

**कम्मं सुहादिहेतू[2] बज्झतरं कारणं जधा[3] देहो ।**
**सद्दादिबज्झतरयं जति दायारे कधा का णु ? ॥३९६०॥**
**तम्हा सकारणं चिय सुहादिबज्झं णिमित्तमेत्तायं ।**
**को कस्स दे[२६०-द्वि०]ति हरति व णिच्छयतो का कधा सिद्धे ॥३९६१॥**

**कम्मं सुहादिहेतू । तम्हा सकारणं चिय ।** स्वकृतं कर्म सुखादिहेतुः । देहेन कर्म क्रियत इति बाह्ये(ह्य)तरं कारणं देहः । तेन च देहेन नमस्कारशब्दः क्रियते, स च ततोऽपि बाह्यतमः, ततः स्वयमस्य नमस्कारः सिद्धादेः प्रयुज्यते । स कथं दाता भविष्यति ? इति दूरनष्टेयं कथा । तस्मात् स्वयमेव परिणामान्तरं कर्माख्यं सुखादेः कारणम्, न बाह्य(ह्यः) कश्चिन्नमस्करणीयोऽर्थः फलदानहेतुः, किन्तु निमित्तमात्रमेवासौ पटस्य तुरि-वेमादिवत् । ततश्च कः कस्मै ददाति, कः कस्याऽप्यपहरति निश्चयात् ? लोकप्रसिद्धदानाऽपहारे(रौ) प्रत्यक्षे(क्षौ), सिद्धे त्वत्यन्तपरोक्षे कोप-प्रसादरहिते निष्क्रिये का कथा दातृत्वं प्रतीति ? ॥३९६०-६१॥

---

१ °भव्वो त । २ हेउं को । ३ जभो को, जया हे त ।

**जति सव्वं सकतं चिय ण दाणहरणातिफलमिहाऽऽवण्णं ।**
**णणु जत्तो च्चिय सकतं तत्तो च्चिय तं फलं जुत्तं ॥३९६२॥**

**जति सव्वं सकतं चिय** इत्यादि। यदि सर्वफलं स्वकृतमेव न तर्हि दान–हरणादिक्रियाजनितं पुण्यं पापं चापरप्रत्ययं कस्यचित् प्राप्नोति। उच्यते, नन्वेतदपि स्वकृतमेवेति एतस्मादेव कारणात् तदुभयमपि फलं पुण्यपापाख्यं युक्तम् ॥३९६२॥

यस्मात्—

**दाणादिपराणुग्गहपरिणामविसेसतो सतो चेय ।**
**पुण्णं हरणादिपरोवघातपरिणामतो पावं ॥३९६३॥**

**दाणादिपराणुग्गह०**। दानादिक्रियापुण्यं स्वात्मफलदम्, परानुग्रहपरिणामविशेषात्मकत्वात्, अहिंसा–सत्यभाषणक्रियावत्। परस्वहरणादिक्रिया च पापम्(यापापं च) आत्मन एव तदुः(तद्दुः)खफलदम्, परोपघातपरिणामात्मकत्वात्, हिंसानृतभाषणक्रियावत् ॥३९६३॥

**तं पुण्णं पावं वा ठितमऽत्तणि बज्झपच्चयावेक्खं ।**
**[illegible]तो देति फलं ण परतो लब्भं ॥३९६४॥**

**तं पुण्णं पावं वा**। तदेतदेवंप्रकारं पुण्यं पापं वा स्वपरिणामजनितमात्मन्यवस्थितम् किन्तु तद् बाह्यप्रत्ययमवेक्ष्य(मपेक्ष)ते अनुग्राह्यमुपघात्यं वा, तेन विना तन्नाभिव्यज्यत इति। तदिदानीं कृतं तीव्र-मध्यमं दान(नानु)भावापेक्षं कालान्तरफलपाकं भवतीति पाककाले तस्य तद्विध एव परस्माल्लाभो जायत इति परकृतं फलं भवतीति व्यपदेशमात्रम्, परमार्थतस्तत् पूर्वमेवात्मना कृतमिति न परतो लभ्यमस्ति किञ्चित् ॥३९६४॥

यदि वाऽयं कस्यचिदभिप्रायः यद्यस्योपकृतमपकृतं वा तत् तत एव दानग्रहणसौस्नातिकवत् प्रतिलभते नान्यत इति। तदयुक्तत्वमाख्यायते—

**जति वा पडिलभितव्वं तत्तो च्चिय जेण तं[2] परिग्गहितं[3] ।**
**तो तम्मि सिवं पत्ते कुगतिगते वा कुतो लब्भं ॥३९६५॥**
**लभतु[4] अदेंता[5] वें[6] कतो साधू जं देज्ज पुव्वदाइस्स ।**
**कत्तोऽवहारिणो तं जं [illegible] वाँ[7] धणिणा[8] ॥३९६६॥**
**अधव मई जं तेण वि दिण्णं अण्णस्स तं ततो लेद्धुं ।**
**पडिदेति तधा हारी हारीतो अण्णतो लद्धुं ॥३९६७॥**

---

१ परल° हे त। २ तण्णं हे। ३ पर° त। ४ लहइ को हे त। ५ °तो को °दितो हे। ६ वा हे। ७ से ध° को हे त। ८ °णो को हे।

एवं होतणवत्था दाण-ग्गहणाणमऽपरिभोगो ये ।
जति परतो लद्धव्वं दिण्णं वा वेस्स तं चेअ ॥३९६८॥

जति वा पडिलभितव्वं इत्यादि गाथाचतुष्टयम्। यदि यस्मै दत्तं दात्रा तस्मादेव तेन प्रतिलब्धव्यं नान्यत इति मोक्षप्राप्ते तस्मिन्, कृम्यादिकुगतिगते वा तत्प्रतिदानाऽसामर्थ्यात् तत्कृतकर्मफलनाशः। अथवा साधूपग्राह्यो गृहीत्वा दानं जन्मान्तरे निःसङ्गसाधुः संवृत्तः, तस्य च देयासम्भवाद्वा तमदत्त्वा मृतस्या(स्य) कुतो लाभस्तपश्चरणकृते यमा(येना)सौ पूर्वतरदायिनो दानग्रहणं प्रतिदद्यात्? एवमेव परस्य धनमपहृत्य साधुनां प्राप्तः स्वयमदत्त्वा तत्कृतफलाभावात् निस्वः, तस्येदानीं निःस्वस्य किमसौ प्रतिहरेत् यद् यस्य तेनापहृतं हर्त्तव्याभावात्? अथैवमपि कल्प्येत बहुशस्तेन दत्तम्, तेन सर्वे तस्य प्रति प्रयच्छन्तीति अन्यतो लब्ध्वा अस्य दानग्रहणवत् विशुद्धिं करिष्यति। एवमन्यस्मादपहृत्य प्रतिलभ्यान्यस्मै दास्यति यस्यानेनापहृतमिति। एवं न विच्छेदः फलस्येति। एवमनवस्थानदोषः प्रसज्यते, स्वपरिभोगाभावश्च तुल्यायव्ययविशुद्धेः शून्यफलत्वात्॥३९६५–६८॥

तम्हा स-पराणुग्गहपरिणामातो सुपत्तविणियोगो ।
दाता [२६१–प्र०] पुण्णं पावति जं तत्तो से फलं होति ॥३९६९॥

तम्हा स-पराणुग्गहपरिणामातो। तस्मात् स(स्व)-परानुग्रहपरिणामादात्मनः सुकृतफलं सुपात्रविनियोगाच्च अनन्तगुणमपि विपच्यते यदन्येभ्यः प्रतिददाति तदभ्यधिकं स्वयमुपभोक्ष्यते ॥३९६९॥

जध सो पत्ताणुग्गहपरिणामातो फलं सतं लभति ।
तध गेण्हंतो वि फलं तदणुग्गहतो सतो लभति ॥३९७०॥

जध सो पत्ताणुग्गह०। तथा असौ पात्रानुग्रहपरिणामादनन्तगुणफलं स्वत एव लभते, न तस्मात् पात्रसकाशात्। एव(वं) ग्रहीता विशुद्धपरिणामात् तदनुग्रहबुद्धिपरिणामात् स्वत एव पुण्यफलमवाप्नोति ॥३९७०॥

हारी वि हरणपरिणामदूसितो वज्झपच्चयावेक्खं ।
पात्रो पावं पावति जं तत्तो से फलं होति ॥३९७१॥

---

१ °ये त। २ देयं को। ३ तं को हे त। ४ °गा त। ५ °णामो। सटीक त प्रतौ। ६ सओ को हे त।

हारी त्ति हरणपरिणा० । अपहर्त्ताऽपि परस्वहरणदुष्टं(ष्ट)परिणामदूषितः स्वप्रत्ययमेव पापफलं लम्य(भ)ते । यद्यप्यसौ धनी परोक्षत्वान्न जानाति, न चास्य मनसि दुःखं प्रभूतधनत्वात्, तथाऽप्यसौ धनहारी दुष्टचित्तात् स्वस्मादेव पापमुपचिनोति ॥३९७१॥

**जध सायत्तं दाणे परिणामातो फलं तधेहावि ।**
**णिययपरिणामतो च्चिय [1]सुद्धं जिणसिद्धपूआए ॥३९७२॥**

जध सायत्तं इत्यादि । एवं जिन-सिद्धपूजातः पूजयिता स्वपरिणामविशुद्धिकृतफलभाक् न परतः, दातृवान्(त्वात्), विशुद्धपरिणामसाधुदातृवत् ॥३९७२॥

**कज्जा जिणादिपूया परिणामविसुद्धिहेतुतो णिच्चं ।**
**दाणादयो [2]व्व मग्गप्पभावणातो य कधणं व ॥३९७३॥**

कज्जा जिणादिपूया । तस्मात् कार्या जिन-सिद्धपूजा, स्वपरिणामविशुद्धिहेतुत्वात्, दानादिक्रियावत् । अथवा कार्या जिन-सिद्धपूजा, मार्गप्रभावनात्मकत्वात् धर्मकथावत् ॥३९७३॥

**कोवप्पसातरहितं पि दीसते फलयमण्णपाणादि ।**
**कोवप्पसादरहि[4]तं च्चि णिप्फ[5]लं तो अणेगंतो ॥३९७४॥**

यच्चोक्तम् 'जिन-सिद्धाः तत्पूजाफलदा न भवन्नि(न्ति), कोप-प्रसादरहितत्वात् आकाशवत्' तदनैकान्तिकत्वख्यापनायेयं गाथा—'कोवप्पसातरहितं' इत्यादि—गतार्था ॥३९७४॥

अथवा आकाशमपि कोप-प्रसादरहितमवगाहितमनुग्रहकरम् प्रणम्य[6] सुचिर-(व्रणस्य शुषिर)मुपजायमानमुपघातकं भवतीति सपक्षाभावात् विपक्षे च भावात् विरुद्धमिति । एतदर्थमियं गाथा—

**कोवादिविरहितं चिय सव्वं जमणुग्गहोवघाता य ।**
**दीसंति तेण विरुद्धं फलमिह कोवप्पसातातो ॥३९७५॥**

कोवादिविरहितं । भावितार्था ॥३९७५॥

अथैवं मन्येत परः—

---

१ सि° को हे त । २ व्व को हे त । ३ °णाइं को हे त । ४ °हियं ति को हे । ५ °लं को हे त । ६ अनेन वाक्येन तुलनीयमेतत्—'तथा च व्रणे आकाशम् उपघाताख्यफलम्''–कोट्या० वृ० मु० पृ० ९१४ । "कोपादिरहिताद् एव आकाशादेर्व्रणे उपघातः"–हे० वृ० मु० पृ० १२४४ ।

**हरण-प्पदाणहेतू हवेज्ज कोवादयो मती तं पि ।**
**णणु सकतं चिय भणितं णिमित्तमेत्तं परो णवरं ॥३९७६॥**

**हरण-प्पदाणहेतू** इत्यादि । हरणनिमित्तं कोपः, प्रदाननिमित्तं च प्रसादः । तस्मात् कोपप्रसादकः पर एव हर्त्ता दाता चेति परनिमित्तमेव । नन्वेतदभिहितम् 'सर्वस्य स्वकृतमेव फलं शुभाशुभं वा परस्तत्र निमित्तमात्रमेव' इति ॥३९७६॥

**जति [२६१-द्वि०] वा ण सकतहेतुं तं तो कोवप्पसादत्वं राया ।**
**सो सव्वसेवयाणं समाणफलदो कधं ण भवे ? ॥३९७७॥**

**जति वा ण सकतहेतुं** इत्यादि । यदि वा परकृतमेव शुभाशुभफलं कोप-प्रसादजनितं भवेत् न स्वकृतहेतुकम् , ततः प्रसन्नो राजा बहूनामेककार्यसेविनां सेवकानां किमिति समानफलदो न भवेत् ? रुषितो वा बहूनां किमिति सर्वेषां समान-दण्डकारी न भवेत् ? दृष्टश्च विशेषः–समानमीहमानानां च केचिदर्थैर्युज्यते(न्ते) परे च नेति न तत्र कोप-प्रसादावेव कारणम् । किं तर्हि ? स्वकृतधर्माधर्मौ तत्रान्तरगतकारणम्, राजा नु(तु) निमित्तमात्रमेव, तथा च लोके श्रुतिः—सुकृतपुण्योऽयं यदस्य राजा प्रसन्न इति ॥३९७७॥

**दीसति य विसमफलदो विफलो य समाणसेवयाणं पि ।**
**भण्णति य सुकतपुण्णो तो से रायप्पसादो त्ति ॥३९७८॥**

**दीसति य विसमफलदो** इत्यादिर्गतार्था ॥३९७८॥

**कोव-प्पसातहेतुं च जं फलं ण हि तदत्थमारंभो ।**
**ण परप्पसादणत्थं च किंतु णिययप्पसातत्थं ॥३९७९॥**

**कोव-प्पसातहेतुं च जं फलं** इत्यादि । कोप-प्रसादौ न निष्फलावेव, अवश्यं हि तयोः फलेन भवितव्यम्, न तु तेन फलेनास्माकं परितोषः, नैतदर्थोऽय-मारम्भः, किं तर्हि ? मोक्षार्थः । स चात्मप्रसादादेव–पारम्पर्येण यथोक्तम् अभ्यर्चना-दर्हताम् मनःप्रसादः, ततः समाधिश्च, तस्मादपि निःश्रेयसम् । अतो हि तत्पूजनं न्याय्यमिति । अतो न परप्रसादा(द)नार्थमारम्भः ॥३९७९॥

यस्मात्—

**धम्माऽधम्मा ण परप्पसादकोवाणुवत्तिणो जम्हा ।**
**तो ण परो त्ति पसण्णो धम्मो कुवितो त्ति वाऽधम्मो ॥३९८०॥**

---

१ 'कयं को । २ पमा' त । ३ अपि च, दं।° त । ४ °त्थं किन्तु हे । ५ 'यथोक्तम्–यथा शास्त्रे यतनापूर्वकम् अर्हताम् अभ्यर्चनं सूचितं तथाकरणेन पूजकस्य पारंपर्येण मनःप्रसादः' इति आशयः ।

तस्साधणमुण्णस्स वि जति वा धम्मो परप्पसादातो ।
तो जो जस्स पसण्णो स तस्स देज्जा जगद्धम्मं ॥३९८१॥
कुवितो हरेज्ज सव्वं देज्जा धम्मं व तध य पावन्ति ।
अकतागमकतणासा मोक्खगताणं पि वा पडणं ॥३९८२॥

धम्माधम्मा ण परप्पसाद० इत्यादि । न हि [2]परप्रसादाद्धर्मस्य साधनशून्यस्यापि धर्म(र्मः) सर्वगतधर्मदानप्राप्तेरकृ(रक्ष)तागमदोषात् । नापि परप्रकोपाय धर्मः सर्वलोकाऽधर्मदानप्राप्तेः कृतनाशात् । मोक्षगतानामपि च पुनः प्रपतनं स्यात् तदीयधर्मस्यान्यत्र केनचित् प्रयत्नेन सञ्चरितत्वात् ॥३९८०-८२

जति वीतरागदोसं मुणि अक्कोसेज्ज कोयि दुट्ठप्पा ।
कोवप्पसातरहितो मुणि त्ति किं तस्स णाधम्मो ॥३९८३॥
सवतो तस्साऽधम्मो जति[२६२-प्र०]वंदन्तस्स तो धुवं धम्मो ।
कोवप्पसातरहिते तध जिणसिद्धे वि को दोसो ॥३९८४॥

जति वीतरागदोसं इत्यादि । यदि परप्रत्ययकोप-प्रसादाभ्यां पुण्याऽपुण्यसम्भवस्ततो वीतरागाक्रोशे कस्यचिदधर्मो न स्यात् कोपरहितत्वात् । यदि पुनः भवतः तस्मा(तस्मै) शपतः—तं वीतरागमाक्रोशतः—अवश्यमेवाधर्मः स्वपरिणामदोषात् । एवं तर्हि वीतरागं वन्दमानस्यापि ध्रुवं धर्मा:(र्मः) स्वपरिणामशुद्धेः । एवं कोपप्रसादरहितजिन-सिद्धपूजायामपि धर्म एवेति ॥३९८३-८४॥

हिंसामि मुसं भासे हरामि परदारमाविसामि त्ति ।
चिंतेज्ज को वि ण वि चिंतिताण कोवादिसंभूती ॥३९८५॥
तध त्ति अ [3]धम्मोऽधम्मो दयादिसंकप्पतो तधेहावि ।
वीतकसाए सवतोऽधम्मो धम्मो य संथुणतो ॥३९८६॥

हिंसामि मुसं भासे इत्यादि । हिनस्मि भूतानि, मृषा भाषे, वदं(एवम्) परद्रव्यं हरामि, परदारं गच्छामि इत्येवं चिन्तयतो विनापि हिंसादिविषयकोपेन दुष्टाशयपरिणामादधर्मः । तथैव तद्विपर्ययपरिणामाद् धर्मः दयादिचिन्तनया परप्रसादविरहेऽपि दृष्ट इति । एवं वीतरागशपन-स्तवाभ्यां पुण्यं पापं चेति ॥३९८५-८६॥

---

१ देज्जो जे । २ अस्य आशयस्य विशदीकरणाय कोट्या० वृ० मु० पृ० ९१५ गतं वाक्यमेतत् तुलनीयम्-‘यदि वा धम्मो परप्पसायाओ तो तस्साधणरहितस्स वि जो जस्स पसण्णो स तस्मै जगद्धर्मं दद्यात् । कुपितस्तु सर्वं धर्मं हरेत् अधर्मं वा दद्यात् । तथा च एकस्य अकृतागमः सर्वजगद्धर्मलाभात्, शेषस्य तु धर्मनाशात् कृतनाशः’’ इत्यादि । इममेव आशयं श्रीमलधारी हेमचन्द्रसूरिः गाथात्रयेण स्पष्टितवान्-वृ० पृ० १२४५-४६ गा० ३२५४-५६ । ३ धम्माऽधम्मो हे, धम्मेऽध° त ।

**तम्हा धम्माधम्मा जुत्ता णिययप्पसादकोवातो ।**
**धम्मत्थिणा पयत्तो [1]कज्जो तो सप्पसादम्मि ॥३९८७॥**

**तम्हा धम्मा०** इत्यादि । तस्माद्धर्माऽधर्मौ निजप्रसाद-कोपाभ्यामेव युक्तौ, धर्मार्थिता(ना) चातः स्वप्रसादोत्पादे एव यत्नः कर्त्तव्यः ॥३९८७॥

**सो य णिययप्पसादोऽवस्सं जिण-सिद्धपूयणातो त्ति ।**
**जस्स फलमप्पमेयं तेण तदत्थो पयत्तो त्ति[3] ॥३९८८॥**

**सो य णियय०** इत्यादिः स्फुटार्था । तस्माज्जिन-सिद्धाः सततमेव पूज्याः, ज्ञाता(ना)द्यात्मकत्वे सति निजप्रसादहेतुत्वात्, ज्ञानादित्रिकवत् ॥३९८८॥

**णाणातिमयत्ते सति पुज्जा कोवप्पसातविरहातो ।**
**णिययप्पसादहेतुं णाणादितियं व जिण-सिद्धा ॥३९८९॥**

**णाणातिमयत्ते** इत्यादिर्गतार्था ॥३९८९॥

**पुज्जा जिणादिवज्जा ण हि मोक्खत्थं सरागदोस त्ति ।**
**अकतत्थभावतो [4]वि य दव्वत्थाए दरिद्दो व्व ॥३९९०॥**
**कलुसफलेण ण जुज्जति किं चित्तं तत्थ जं विगतरागो ।**
**संते वि जो कसाए [5]णिग्गिण्हति सो वि तत्तुल्लो ॥३९९१[6]॥**

**पुज्जा जिणादिवज्जा** इत्यादि । एवं तर्हि जिन-सिद्धान् मुक्त्वा आचार्योपाध्याय-साधवो मोक्षार्थिना न पूजनीयाः, सराग-दोषत्वात्, अकृतार्थत्वात्, द्रव्यार्थिना दरिद्रवत् । इह दरिद्रः किमिति न पूज्यते द्रव्यार्थिना ? तस्य द्रव्यं नास्तीति उपकाराऽसमर्थत्वात् । यद्यनेसा(ना)भिप्रायेण प्रमाणमिदम् ततः साध्यसाधनधर्मशून्यता दृष्टान्तस्य ॥३९९०–९१॥

**ण परोवकारतो च्चिय धम्मो ण परोवकारहेदुं च ।**
**पूयारंभो णणु सपरिणामसुद्धत्थमक्खातो ॥३९९२॥**

**ण परोवकारतो च्चिय धम्मो** इत्यादि । न ह्याचार्यादीनामुपकारः कर्त्तव्यः इति पूजा, न[7] वा पूजय(यि)तुरु[प]कारसमर्था इति । किं तर्हि ? स्वपरिणामशुद्ध्यर्थः । ततो दरिद्रेऽप्येवं दृष्टान्ते भावना–द्रव्यं तस्य तु भवतु वा मा भूत् साधोरिव, तथापि तस्य गुरोः सतः स्वपरिणामशुद्ध्यर्थं गुणाभिष्टवपूर्वकं पूजनं क्रियत एव । स

१ जं त । २ ज्जा त । ३ यं को हे त । ४ च्चिय त । ५ न गिण्हइ हे । ६ "इयं च गाथा केषुचिदादर्शेषु न दृश्यते, पूर्वटीकाकारैरपि न व्याख्याता; अस्माभिस्तु बहुष्वादर्शेषु दर्शनात् सोपयोगत्वाच्च लिखितेति" हे० मु० पृ० १२४८ । ७ 'न वा न' इति सटीक त प्रतौ ।

च पूजयिता धर्मफलमवाप्नोति गुरुविनयप्रयोगात् न पुनर्द्रव्यं लभते, न च तदर्थोऽत्र यत्न इति, साध्यसाधनधर्मशून्यतादि अनेन प्रकारेणेति तथाख्यातमेव ॥३९९२॥

यत:--

**पूया परोवकाराभावे वि सिवाय जिणवरादीणं ।**
**परिणामसुद्धिहेतो सुभकिरियातो य वंभं व[1] ॥३९९३॥**

**पूया परोवकाराभावेवी**त्यादिर्गतार्था ॥३९९३॥

**परहितयगता मेत्ती करेति भूताण कमुवकारं सा ।**
**अवकारं दूरत्थो [२६२-द्वि०] कं वा हिंसादिसंकप्पो ॥३९९४॥**

**परहितयगता** । परिणामविशुद्धिरेवाभिप्रेतफलसाधिका, परिणामविषयार्थानुपकारित्वात्, हृदयगतमैत्रीभावनावत् । अशुद्धपरिणाम एव च पापकारणम्, परानुपकारित्वात्, हिंसासंकल्पवत् ॥३९९४॥

**[3]धम्माधम्मणिमित्तं तधा वि तध [4]चेव णिरुवकारो वि ।**
**पूया सुभसंकप्पो धम्मणिमित्तं जिणादीणं ॥३९९५॥**

**धम्माधम्मणिमित्त**मित्यादि । आचार्यादिनमस्कारोऽपि अभिप्रेतफल(ले)न फलवान् शुभसंकल्पात्, जिन-सिद्धनमस्कारवत् । मैत्रीसंकल्पवद्वा । दानवद्वा ॥३९९५।

यत:—

**दाणे वि पराणुग्गहलक्खणसंकप्पमेत्ततो चेअ ।**
**फलमिह ण तु पच्छा तक्कतोवकाराऽवकारातो ॥३९९६॥**

**दाणे** इत्यादि । यस्माद् दानेऽपि परानुग्रहलक्षणसंकल्पमात्रादेव फलम्, न नु (तु)पश्चात् तत्कृतौ(तो)पकारो(रा)ऽपकाराभ्यामिति ॥३९९६॥

**इधरोवयुत्तभत्ताजिण्णादि वधम्मि दक्खिणेयस्स ।**
**देन्तस्स वधावत्ती तेणादाणप्पसंगोऽयं[5] ॥३९९७॥**

**इधरोवयुत्त०** इत्यादि । इतरथा अनुग्रहसंकल्पमात्रं मुक्त्वा यदि दक्षणी(दाक्षिणे)यानुग्रहोपघातापेक्षं शुभाशुभं कर्म स्यात्, ततः परिणामविशुद्धिपूर्वकप्रदानेऽपि दातुः अ(प्र)तिग्रहीतृविषयोपयुक्तभक्ताऽजीर्णादिविसू(षू)चिका-सू(शू)लादिनिमित्तवद्धे(वधे) दक्षणी(दाक्षिणे)यस्योपजाते तद्भक्तं प्रयच्छतो दातुः तेन च सम्बन्धिना पापेन भवितव्यम्, अनिष्टं च विशुद्धभावत्वात् तस्य । स्तन्याऽजीर्णाद् बालवधि(धे)न मातुरिव पापस-

१ °वेवं को हे त । २ ॥दारं॥ को । ३ धम्मो त । ४ वेह हे । ५ य को ।

म्बन्धः । यस्य पुनरेवंविधेनापि वधेन पापसम्बन्धस्तं प्रति तेन प्र(अ)दानप्रसङ्गोऽयमेवं प्राप्नोतीत्यनिष्टापादनं तस्मात् ॥३९९७॥

**ण परपरिग्गहतो च्चिय धम्मो किंतु परिणामसुद्धीतो ।**
**पूयाऽपरिग्गहम्मि वि सा य धुवा तो तदारंभो ॥३९९८॥**

ण [पर०] । [न] परपरिग्रहेण एतदवधारणम्—परेण परिग्रहे कृते धर्मः, अपरिग्रहे त्वधर्म इति, किन्तु परिणामशुद्धित एव धर्मो भवतीत्यवधारणम् । परः परिगृह्णातु वा, मा वा परिगृ(ग्र)हीत् । पूजाया[ः] प्रतिमादिभिरपरिग्रहेऽपि सा परिणामशुद्धिर्ध्रुवा । तस्मात् पूजारम्भो युक्तः, परिणामविशुद्धिहेतुत्वात् ॥३९९८॥

**इध चोतगमऽणुमोदगमऽणिसेधगमेव संपदाणं ति ।**
**बडु-मुणि-पडिमादि जतो ण दाणमपरिग्गहं तेणं ॥३९९९॥**

**इध चोतगमऽणुमोदग०** इत्यादि । इह सत्कृत्य प्रदानं सम्प्रदानं त्रिविधं संम्भवतः—स्वयं प्रार्थना—चोदना—चोदकं वदु(बटु)प्रभृतीनाम्, अप्रार्थितप्रदाने तु स्वयमनुमतेस्तत्परिभोगादनुमोदकम्—मुनिप्रभृतीनाम्, यत् पुनरचेतनानां प्रतिमादीना(नां) पुष्पादि उपह्र(ह्रि)यते तद् अनिषेधक(कम्) । सर्वत्र सम्प्रदानार्थत्वात् दानमपरिग्रहं नैवास्ति किञ्चित् । अत एव च लक्षणम्—"परस्वत्वापादनं दानम्"[ ]तथा "अनुग्रहार्थं स्वस्यातिसर्गो दानम्" [तत्त्वार्थ० ७, सू० ३३] । तस्मादवश्यं सपरिग्रहं दानम् ॥३९९९॥

जिनादिपूजा तु अपरिग्रहेति आचार्य आह—

**दाणऽपरिग्गहणम्मि वि धम्मो णिययपरिणामसुद्धीतो ।**
**अपरिग्गहे वि जति सा को णाम परिग्गहग्गाहो ॥४०००॥**

**दाणऽपरिग्गहणम्मि वि** इत्यादि । अपरिग्रहपूजाजनिता परिणामशुद्धिर्धर्माय, परिणामशुद्धित्वात्, दानपरिणामशुद्धिवत् । अथवा जिनादिपूजा सम्यक् प्रयुक्ता धर्महेतुः, विशुद्धि(द्ध)परिणामत्वे सन्ति(ति) अपरिगृहीतत्वात्, सर्वभूतविषयमैत्रीवत् । सैव चासम्यक् प्रयुक्ता अधर्माय, अशुद्धपरिणामत्वे सति अपरिगृहीतत्वात्, भूतविषयहिंसासंकल्पवत् ॥४०००॥

१ मूलगाथायाम् "तेणाऽदाणप्पसंगोऽयं" इति वचनात् अत्र 'अदान' पदमेव समुचितम् । तुलनीयम्—"तेन च हिंसादिदोषेण अदानप्रसंङ्गोऽयम्"—हे०वृ०मु०पृ०१२५० । २ सा परिणामशुद्धिः पूजानिमित्ततो जाता । ३ गाथायाः उत्तरार्धं नास्ति त । ४ "सत्कृत्य प्रदानम् । तच्च संभवतस्त्रेधा—तद्यथा—प्रार्थना—चोदना—दीयतां मे इति, अप्रार्थितप्रदाने तु स्वयम् अनुमते तत्परिभोगाद् अनुमोदकम्, अनिषेधकम्—अप्रतिषेधमात्रम्"—कोटया० वृ० मु०पृ० ९१६ । हे० वृ०पृ०१२५०गा०३२७३ । ५ °णमप° हे । ६ गाथायाः पूर्वार्धं नास्ति त ।

एतत्प्रमाणद्वयप्रतिपादनी गाथा—

**किंच परहितयणिहिता मेत्ती भूतेहि संपरिग्गहिता।**
**हिंसासंकप्पो[2] वा जं धम्माधम्महेतु त्ति ॥४००१॥**

**किंच परहितयणिहिता** इत्यादिर्गतार्था ॥४००१॥

**एवं जि[२६३-प्र०]णादिपूया सद्धा-संवेगसुद्धिहेऊतो।**
**अपरिग्गहा वि धम्माय होति सीलव्वताइं[4] व्व ॥४००२॥**

**एवं जिणादिपूया** इत्यादि। अपरिगृ(ग्र)हाऽपि जिनादिपूजा धर्माय, श्रद्धा-संवेगशुद्धिहेतुत्वात्, शीलव्रतादिवत् ॥४००२॥

यच्चोक्तम् 'मुक्ता न पूजनीयाः अमूर्त्तत्वादाकाशवत्' एतदनैकान्तिकाख्यानाय—

**जं चिय मुत्तिविमुत्ता मुत्ता गुणरासयो विसेसेणं।**
**तेणं चिय ते पुज्जा णाणातितियं व मोक्खत्थं ॥४००३॥**

**जं चिय [मुत्तिविमुत्ता] मुत्ता** इत्यादि। ज्ञान-दर्शन-चारित्राणि अमूर्त्तानि मोक्षार्थिभिः पूज्यानि दृष्टानीति अनैकान्तिकत्वम्, अथवा प्रतिप्रमाणम्-मुक्ता विशेषेण पूज्याः, गुणराशित्वात्, ज्ञान-दर्शन-चारित्रत्रयवत्। इतश्च गुणा एव पूज्याः न मूर्त्तिः ॥४००३॥

यस्मात्—

**मुत्तिमतो वि ण मुत्ती पूतिज्जति किंतु जे गुणा तस्स।**
**ते मुत्तिविमुत्त च्चिय णणु सिद्धगुणा विसेसेणं ॥४००४॥**

**मुत्तिमतो** वीत्यादि। मूर्त्तिमतो मूर्त्तिर्न पूज्यते किन्तु गुणा एव पूज्यन्ते, ते च मूर्त्तिविमुक्ताः—अमूर्त्ताः—इत्यर्थः। तैरप्यनैकान्तिकः। सिद्धगुणास्तु विशेषेणामूर्त्ताः। कोऽभिप्रायः? मूर्त्तिमतो गुणाः कदाचिदभेदोपचाराद् द्रव्यार्थैकत्वादेशात् मूर्त्तिमन्तोऽपि व्यपदिश्येरन्, सिद्धगुणास्त्वमूर्त्ता एव, सिद्धस्यापि गुणिनो मूर्त्तिविरहितत्वात्। अथैवं भवतो बुद्धिः स्यात्—मूर्त्तिपूजया तत्सम्बन्धित्वादमूर्त्तानामपि गुणानां पूजा स्यात्, तिलवासनया तैलवासवत्। सिद्धगुणानां तु पूजा न प्राप्नोति, मूर्त्तिपूजा-(मूर्ति)रहितत्वात्, आकाशगुणानामिवेति ॥४००४॥

एतत्प्रदर्शनीयं गाथा—

**अधव मती [म]ुत्तिमतो गुणपूया होतु मुत्तिपूयातो।**
**तग्गुणसंबंधातो सिद्धगुणाणं तु सा णत्थि ॥४००५॥**

---

१ °नियया को हे। २ °प्पा त। ३ सव्वा त। ४ व हे। ५ °विउ° हे त, °विमुक्का·-को·।

अधव मती इत्यादिर्भावितार्था ॥४००५॥

पूया-मुत्ति-गुणाणं संबंधे फलमितीह को हेतू ।
अण्णो परिणामातो तस्स य को केण संबंधो ॥४००६॥

पूया-मुत्ति-गुणाणं इत्यादि । पूजायाः मूर्त्तस्तद्गुणानां च सम्बन्धे फलं भवतीत्यत्र को हेतुरन्यः स्वपरिणामं मुक्त्वा ? स च स्थापितः, तस्य च परिणामस्य कः सम्बन्धः ? केनचिद्वाऽन्येन ? तस्मान्न किञ्चित् सम्बन्धान्वेषणे फलमिति ॥४००६॥

यस्मात्—

णिययत्थो[1] परिणामो बज्झालंबणणिमित्तमेत्तातो[2] [3] ।
देति फलं सव्वो च्चिय सिद्धगुणालंबणो चेव ॥४००७॥

णिययत्थो परिणामो इत्यादि । निजे एव आत्मनि स्थितः परिणामः, स बाह्यालम्बननिमित्तमात्रात् फलं प्रयच्छतीति तत् तुल्यं सिद्धगुणेषु । आलम्बनत्वं दूरमासन्नं चेत्यकारण(रण)मेतत् व्यभिचारित्वात् ॥४००७॥

जइ[4] दूरत्थे वि धिती बंधुम्मि सरीरपुट्ठिफलहेतू[5] ।
तणुदोब्बल्लादिफलो[6] कत्थइ सोकातिसंकप्पो ॥४००८॥
तध परिणामो सुद्धो सद्धम्मफलो[7] त्ति दूरसंत्थे[8] वि ।
अविसुद्धो पावफलो दूरासण्णं ति को भेतो ? ॥४००९॥

जइ दूरत्थे वि धिती इत्यादि । तध परिणामो सुद्धो इत्यादिः स्फुटार्थो ॥४००८–९॥

[२६३–द्वि०]अधवाऽऽतसभावोऽयं परिणामो तेण सव्वमेवेह ।
दूरमधालंबणतो तस्सासण्णं ततो[9] सव्वं ॥४०१०॥

अधवाऽऽतसभावो इत्यादि । अथवा आत्मस्वभावः परिणाम इति तस्य सर्वमेव बाह्यमत्यन्तदूरं विप्रकृष्टत्वात् । अथ तस्यालम्बनभावेन सर्वमप्यासन्नम् आ पृथिवीपर्यन्तात् आ लोकमर्यादायाः ज्ञानविषयत्वात् । तस्माद् दूरमप्यासन्नमिति ॥४०१०॥

जति सपरिणामतो च्चिय धम्मोऽधम्मो व्व[10] किं थे[11] बज्झेणं ।
जं बज्झालंबणतो सो होति ततो तदत्थं तं ॥४०११॥

जति सपरिणामतो च्चिय । यदि स्वपरिणामादेव धर्मोऽधर्मश्च किमिति बाह्येनापेक्षितेन ? अवश्यापेक्षणीयं बाह्यालम्बनम्, स्वपरिणामहेतुत्वात् ॥४०११॥

---

१ नियत्थो हे । २ बज्झत्थाल° हे । ३ °त्तागो को हे । ४ °वं को हे । ५ जइ त । ६ °बल° को हे त । ७ धम्म° हे । ८ °लाति दू° जे । ९ तयं त । १० व त । ११ त्थ को हे, व त ।

**परिणामो वज्झालंवणो सता चेयं चित्तधम्मो त्ति ।**
**विण्णाणं पिव तम्हा सुहबज्झालंवणपयत्तो ॥४०१२॥**

**परिणामो बज्झालंवणो** । एवमप्यनर्थक आलम्बनप्रयत्नः, सर्वदैव परिणामस्वालम्बननिमित्तत्वात्, विज्ञानवत् । तस्मात् स्वाभाविकार्थसिद्धौ न यत्नः कर्त्तव्यः, स्वयमेव जायमानत्वात् । उच्यते, सत्यमेतत्, स द्विप्रकारोऽपि परिणामः आलम्बनजः शुभश्चाशुभश्च, अतः शुभ एव सर्वदा स्यादिति शुभबाह्यालम्बनार्थो यत्नोऽस्माकम्, न सामान्यालम्बनार्थ इति ॥४०१२॥

चोदक आह—

**जत्तो तत्तो व सुभो होतु किमालंवणप्पभेदेण ।**
**जध णाऽणालंवणतो विवरीतातो वि सो ण तधा ॥४०१३॥**

**जत्तो तत्तो व** इत्यादि । सर्वथा फलेन प्रयोजनं शुभपरिणामेन, स यस्मात् तस्माद्वा शुभादशुभाद्वा भवतु किमालम्बनविशेषपरिग्रहेण ? अमूर्त्ति(र्तें)न आकाश(शेन) घटाद्वा पतितेनाम्रेण प्रयोजनम् किमाम्रवृक्षगवेषणयेति ? उच्यते, यथाऽसौ नालम्बनतः—आलम्बनमन्तरेण यथा न भवतीत्यालम्बनमन्विष्यते, एवं विपरीतालम्बनोऽप्यसौ शुभपरिणामो नैव भवतीति तदनुगुणशुभालम्बनान्वेषणप्रयत्नः सार्थक इति विपरीतैकारणाकारणानि कार्याणि भवन्ति ॥४०१३॥

**किंतु सुभालंवणतो पाएण सुभो विधम्मओ इतरो ।**
**जं होति तो[4] पयत्तो सुभासुभादाणवोसग्गे ॥४०१४॥**

**किंतु सुभालंवणतो** इत्यादिर्गतार्था ॥४०१४॥

**अण्णाणिणो मुणिम्मि वि ण सुभो दिट्ठो सुभो य णिस्सीले ।**
**जति परिणामातो च्चिय फलमिह किं[5] पत्तचिंताए ? ॥४०१५॥**

**अण्णाणिणो** इत्यादि । अज्ञानिनो मिथ्यादृष्टेः सदालम्बने मुनावपि अशुभपरिणामो दृष्टः, [निः]शीले च शुभपरिणामो दृष्टः, तस्माच्च शुभपरिणामाच्छुभं फलम्, अशुभपरिणामाच्चाशुभमिति स्वपरिणामात् फलं जायते न पात्रविशेषात् । तस्मात् पात्रगवेषणा विफला, नैकान्तिकफलत्वात् ॥४०१५॥

उच्यते—

**सुभपरि[illegible]मेत्तं होज्ज सुभं जति तओ सुभो होज्ज ।**
**उम्मत्तस्स व ण तु सो सुभो किवज्जासभावातो ॥४०१६॥**

---

१ चेव को । २ विपरीतकारणानि कार्याणि भवन्ति तथैव अविपरीतकारणानि कार्याणि भवन्ति इति भावः । ३ °म्मता हं जे । ४ तं को हे । ५ किं ता प° को ।

**सुभपरिणामणिमित्तं** इत्यादि। योऽसौ निःशीले शुभपरिणामो मिथ्यादृष्टे-र्जातः तस्माच्छुभपरिणामाच्छुभं फलं भवेद् यद्यसौ शुभः परिणामः स्यात्, न पुनरसौ शुभस्तद्विपरीतालम्बनत्वात् उन्मत्तकपरिणामवत्। **सदसद्विसेसणातो भवहेतु-जतिच्छियोवलंभातो। णाणफलाभावातो मिच्छद्दिट्ठिस्स अण्णाणं**[गा० ११४ पृ० २९] ॥४०१६॥

**[२६४-म०]णणु मुणिवेसच्छण्णे णिस्सीले वि मुणिवुद्धिए देंतो।**
**पावति मुणिदाणफलं तध किण्ण कुलिंगेदाता वि ॥४०१७॥**

**णणु मुणिवेसच्छण्णे** इत्यादि। एवं तर्हि कुलिङ्गिनि निःशीलेऽपि मिथ्या-दृष्टिर्मुनिबुद्ध्या दानं प्रयच्छन् मुनिदानलाभं प्राप्स्यन्ति(ति),शुभपरिणामत्वात्, निःशील-मुनिवेषच्छन्नप्रदातृसम्यग्दृष्टिवत् ॥४०१७॥

आचार्य आह—

**जं थाणं मुणिलिंगं गुणाण मुण्णं पि तेहिं[2] पडिम व्व।**
**पुज्जं थाणमतीयं[3] वि ण कुलिंगं सव्वधा जुत्तं ॥४०१८॥**

**जं थाणं मुणिलिंगं** इत्यादि। यस्माद् मुनिलिङ्गं मुनिवेषः, तेषां मुनिगुणानाम्, यदा तदाऽस्मिन् मुनिलिङ्गे तेषां गुणानां दृष्टत्वात्, अतस्तैर्गुणैः शून्यमपि मुनिलिङ्गं सदा पूज्यमेव, तद्गुणस्थानत्वात्, अर्हत्प्रतिमावत्। अर्हदाकारस्य तैर्गुणैः सम्बन्धित्वात् तद्गुणाधारः प्रतिमा, कुलिङ्गं तु गुणस्थानबुद्ध्याऽपि परिगृहीतं न गुणस्थानम्, तैर्गुणैरत्यन्तविमुक्तत्वात्, अग्निरिव शील(त)गुणस्य। अतः पूर्वप्रमाणैः कुलिङ्गधर्मिणि शुभपरिणामत्वादित्यसिद्धो हेतुः ॥४०१८॥

**णणु केवलं कुलिंगे वि होतु तं भावलिंगतो ण ततो।**
**मुणिलिंगमंगभावं जाति जतो तेण तं पुज्जं ॥४०१९॥**

**णणु केवलं कुलिङ्गे** वीत्यादि। कुलिङ्गमपि मुनिगुणस्थानं कदाचित्, तद्गुण-णसम्बन्धित्वात् केवलज्ञानोत्पादिकुलिङ्गवत्। उच्यते[5], '**होतु तं भावलिंगतो, ण ततो**' तत् केवलज्ञानं कुलिङ्गसहिते जीवे भवतु, केन निवार्यते? तत् पुनः प्रतिपन्न-भावमुनिलिङ्गात् तस्मिन् जीवे तद् भवति न कुलिङ्गात्। अतः कुलिङ्ग-द्रव्यलिङ्ग-मकारणम्, मुनिलिङ्गं तु द्रव्यभावात्मकं उभयमङ्गभाव(वं) केवलस्य यातीति। तस्माद् मुनिलिङ्गं द्रव्यात्मकमपि पूज्यम्, मुनिगुणस्थानत्वात्, शुभपरिणामहेतुत्वात्, ज्ञाना-दित्रितयवत् ॥४०१९॥

---

१ °लिंगि° त। २ °ण को हे त। ३ °ए त °ए न को। ४ स्थानम्-आश्रयः इति योज्यम्। ५ 'उच्यते' इत्यत आरभ्य 'ण ततो' पर्यन्तं वाक्यं द्विः लिखितं लिपिकारेण सटीक त प्रतौ।

तेण सुभालंबणतो परिणामविसुद्धिमिच्छता णिच्चं ।
कज्जा जिणातिपूजा भव्वाणं बोधगत्थं च ॥४०२०[1]॥

तेण सुभालंबणतो इत्यादि । इदं सर्वविचारपर्यन्ते परिनिष्पन्नपक्षार्थस्थापनार्थं निगमनम्—सर्वेणापि शुभालम्बनात् परिणामविशुद्धिमिच्छता अर्हदादिपञ्चमङ्गलपूजा कार्या, परिणामविशुद्धिहेतुत्वात्, भव्यप्रतिबोधनार्थत्वात्, धर्मकथादिवदिति ॥४०२०॥

॥ नमस्कारनिर्युक्तिभाष्यव्याख्यानं समाप्तम् ॥

*

# अथ सामायिकनिर्युक्तिः ।

अथ सूत्रस्पर्शिकनिर्युक्तिः क्रमप्राप्ता । तस्याः सम्बन्धार्थं गाथा—

कयपंचणमोक्कारो करेति सामाइयं ति सोऽभिहितो ।
सामाइयंगमेव य जं सो सेसं ततो वोच्छं ॥४०२१[2]॥

कयपंचणमोक्कारो इत्यादि । कृतपञ्चनमस्कारः शिष्यः सामायिकं करोतीत्यागमः । स च पञ्चनमस्कारोऽभिहितः, सामायिकाङ्गत्वात् । यदन्यदवशेषवक्तव्यं तद् वक्ष्यामि ॥४०२१॥

एत्थ य सुत्ताणुगमो सुत्तालावयकतो य णिक्खेवो ।
सुत्तप्फासियनिज्जुत्ति[3] णया य पतिसुत्तमाओज्जा ॥४०२२॥

एत्थ य सुत्ताणुगमो इत्यादि । अत्र च शास्त्रे सूत्रानुगमः सूत्रालापकगतो निक्षेपः सूत्रस्पर्शनिर्युक्तिर्नयाश्च प्रतिसूत्रं श्रोतारमपेक्ष्याऽऽयोज्याः ॥४०२२॥

अणुगंतव्वं सुत्तं सुत्ताणुगमाणुसारतो तं च ।
सुत्तं करेमि भंते! सामाइयमेवमादीयं ॥४०२३॥

---

१ इति नमस्कारनिर्युक्तिः समाप्ता त । तदेवमवसितः पञ्चनमस्कारः । तदवसाने च नमस्कारनिर्युक्तिः समाप्ता । हे मु० वृ० पृ० १२५६ । २ एषा ४०२१ गाथा हे० मु० वृ० १२५६ गतेन निर्देशेन निर्युक्तिगाथा । अस्या ४०२१ गाथातः पूर्वम् हा० (मु० वृ० पृ० ४५४) म (मु० वृ० पृ० ५५५) दी (लि० पृ० ९६ द्वि०) पुस्तकेषु निम्नसमुद्धृता गाथा अधिका लभ्यते—

नंदि-अणुओगदारं विहिवदुग्घाइयं च नाऊणं । काऊण पंचमंगलमारंभो होइ सुत्तस्स ॥ आचार्यो हरिभद्रः, आचार्यो मलयगिरिश्च एतां गाथाम् "परमार्थेन सूत्रस्पर्शिकनिर्युक्तिगतामेव गाथाम्" इति निर्दिश्य निर्युक्तिगतां स्वीकरोति । दीपिकाकारोऽपि एवमेव सूचयति । ३ °यज्जुत्ती जे । °यनिज्जुत्ती हे त ।

अणुगंतव्वं सुत्तं इत्यादि । अभिहितमूत्रानुसारतः सूत्रमनुगन्तव्यमित्युक्तम् । तच्च सूत्रम्—

'करेमि भंते ! सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि' इत्यादि ॥४०२३॥

**तस्स कतपयण्णासो सुत्तप्फासं भणामि तत्थेव ।**
**सुत्तालावगणासं णए[२६४-द्वि०]य वोच्छामि संभवतो ॥४०२४॥**

**तस्स कतपयण्णासो** इत्यादि । तस्य मूत्रस्य पदन्यासपूर्वकं सूत्रस्पर्शं भणामि । तत्रैव च सूत्रस्पर्शे सूत्रालापन्यासं नामाद(द्य)नुयोगद्वारैः नयांश्च संभवतो वक्ष्यामि ॥४०२४॥

इति आचार्यः पदानि विच्छ(च्छि)द्य दर्शयति—

**करणे भए य अन्ते सामाइय सव्वए य वज्जे य ।**
**जोए य पच्चक्खाणे जावज्जीवाए तिविधेणं ॥७२४॥४०२५[1]॥**

---

१ अस्या ४०२५ गाथायाः पूर्वं हा (मु० वृ० पृ० ४५६ प्र० म (मु० वृ० पृ० ५५७ द्वि०) दी (लि० पृ० ९७ प्र०) पुस्तकेषु "आह निर्युक्तिकारः" इति निर्दिश्य एषा गाथा अधिका दृश्यते—

अक्खलिअ संहिआई वक्खाणचउक्कए दरिसिअम्मि ।
सुत्तप्फासिअनिज्जुत्तिवित्थरत्थो इमो होई ॥ इमां ४०२५ गाथां "इयं च निर्युक्ति-गाथा" इत्येवं सूचितवान् श्रीमलधारिहेमचन्द्रसूरिः-मु० वृ० पृ० १२५७ । तथा अस्या एव ४०२५ गाथायाः अनन्तरम् एताः सप्त गाथाः हा (मु० वृ० पृ० ४६२ द्वि०तः) म (मु० वृ० पृ० ५६४ द्वि०तः) दी (लि० पृ० १०० द्वि०तः) पुस्तकेषु अधिका लभ्यन्ते । ताश्च गाथा इमाः—

खित्तस्स नत्थि करणं, आगासं जं अकित्तिमो भावो ।
वंजणपरिआवन्नं, तहावि पुण उच्छुकरणाई ॥१०२४॥
काले वि नत्थि करणं, तहावि पुण वंजणप्पमाणेणं ।
बवबालवाइकरणेहिं, णेगहा होइ ववहारो ॥१०२५॥
जीवमजीवे भावे, अजीवकरणं तु तत्थ वन्नाई ।
जीवकरणं तु दुविहं, सुअकरणं नो अ सुअकरणं ॥१०२६॥
बद्धमबद्धं तु सुअं, बद्धं तु दुवालसंग निद्दिट्ठं ।
तव्विवरीअमबद्धं, निसीहमनिसीह बद्धं तु ॥१०२७॥
भूआपरिणयविगए, सद्दकरणं तहेव न निसीहं ।
पच्छन्नं तु निसीहं निसीहनामं जहऽज्झयणं ॥१०२८॥
अग्गेअणीअंमि जहा, दीवायण जत्थ एग तत्थ सयं ।
जत्थ सयं तत्थेगो, हम्मइ वा भुंजए वावि ॥१०२९॥
एवं बद्धमबद्धं, आएसाणं हवंति पंचसया ।
जह एगा मरुदेवी, अच्चंतं थावरा सिद्धा ॥१०३०॥

करणे भए य अन्ते इत्यादि ॥४०२५॥

सुत्तं करेमि भणिते धातू विहितो जओ डुकृञ् करणे।
तेण करेमि वयणतो गम्मति करणं तदत्थो त्ति ॥४०२६॥

सुत्तं करेमि भणिते इत्यादि । करे(रो)मि भदन्त ! सामायिकमिति सूत्रम्। तत्र 'करोमि' इत्युक्ते 'डुकृञ् करणे' धातुरुत्प्रेक्ष्यते, तस्य च धातोरर्थः क्रिया—करणम् इति । अर्थ एव पदं दर्शितं 'करणे' इति ॥४०२५-२६॥

करणं किरिया भावो संभवतो वेह छव्विधं तं च ।
णामं ठवणा दविए खेत्ते काले य भावे य ॥४०२७॥

करणं किरिया भावो इत्यादिर्गतार्था ॥४०२७॥

णामं णामस्स य णामतो व करणं ति णामकरणं ति ।
ठवणा करणं णासो करणागारो व जो जस्स ॥४०२८॥

णामं णामस्स य णामतो वेत्यादि । नामैव करणमिति समानाधिकरणः कर्मधारयः । नाम्नः करणे(णम्) इति षष्ठीतत्पुरुषः, नाम्नः करणमिति पञ्चमी-तत्पुरुषः मयूरव्यंसकादिप्रक्षेपात् । स्थापनाकरणम्—करणन्यास एव, करणाकारो वा यो यस्याभिमतः ॥४०२८॥

तं तेण[3] तस्स तम्मि व संभवतो व[4] किरिया मता करणं ।
दव्वस्स व दव्वेण व दव्वम्मि व दव्वकरणं ति ॥४०२९॥

तं तेण तस्सेत्यादि । तत् क्रियत इति कर्मसाधकः करणशब्दः सर्वकारकनिष्पाद्यत्वाद् धात्वर्थस्य । तेन वा क्रियत इति करणसाधन एव तस्य वा करणमिति भावसाधनः । तस्मिन् वा करणमित्यधिकरणसाधनः । एवं यथासम्भवं करणं क्रियैवोच्यते । सा क्रिया—तत् करणम्—द्रव्यस्य, द्रव्येण तु, द्रव्ये वा सम्भवाद् द्रव्यकरणमुच्यते ॥४०२९॥

दव्वकरणं तु सण्णाकरणं पेलुकरणातियं बहुधा ।
सण्णा णामं ति मती तं णो णामं जमभिधाणं ॥४०३०॥

---

१ धाओ त । 'धाओ' इति पाठान्तरं 'धातोः' इत्येवं पञ्चम्यन्तस्य प्रतिरूपकम् ।
२ डुकिय को । डुकिकं हे त । ३ °ण व° त । ४ वि त । हे त ।

**दव्वकरणं तु सण्णाकरणमित्यादि** । द्रव्यं(व्य)करणं द्विविधम्–संज्ञाकरणम्, नोसंज्ञाकरणं च । तत्र संज्ञाकरणं पेलुकरणादि, लाटविषये रूतप्रा(पू)णिका, [महा]-राष्ट्रविषये सैव पेलुरित्युच्यते, तस्याः करणं निर्वर्त्तनं पेलुकरणम्–काष्ठमयी शलाका, शल्यकाङ्गरुहादिना(दि) । 'पेलुकरणादिकम्' इति आदिग्रहणात् काण्डकरणम्–इक्षुकाण्डच्छेदनम्, व(वा)र्त्ताकरणं गुणनिकायामक्षराङ्कलेखनी शलाका इत्यादि । ननु चैवं नामकरणमध्ये(ध्ये)तत् पर्यायशब्देनोच्यते संज्ञाकरणमिति किं द्रव्यमध्ये क्षिप्यते ? उच्यते, 'संज्ञा नाम' इति या बुद्धिर्भवतः '**तं णो**' नो (तद् नो), यस्माद् नाम अभिधानं वस्तुनः 'करणम्' इति केवल एव शब्दः, इदं पुनः संज्ञया करणं संज्ञाकरणम् [इत्येवं] द्रव्यसंज्ञाया निर्दिश्यमानत्वात् ॥४०३०॥

**जं वा तदत्थविकले कीरति दव्वं तु दैवणपरिणामं ।**
**ँपेलिकरणादि ण हि तं तदत्थसुण्णं ण वा सद्दो ॥४०३१॥**
**जति ण त[२६५-प्र०]दत्थविहीणं तो किं दव्वकरणं जतो तेण ।**
**दव्वं कीरति सण्णा करणं ति य करणरूढीतो ॥४०३२॥**

**जं वा तदत्थविकले** इत्यादि । 'करणम्' इति अन्वर्थसंज्ञयोच्यते, । भावकरणं क्रिया, यत् पुनस्तदर्थं(र्थ)विकलं भाषार्थशून्यं तद् द्रव्यमुच्यते, द्रवणपरिणामत्वात् । इदं पुनः पेलुकरणादि भावार्थः(र्थ)शून्यं न भवति, पेलुद्रव्यक्रियासम्बन्धित्वात् । तस्माद् भावा(व)निक्षेप एव युक्तः पेलुकरणम्, न द्रव्यनिक्षेपः । '**ण वा सद्दो**' न वा शब्दः पेलुकरणमिति तदर्थशून्यः, अन्वर्थत्वात् । **जति ण तदत्थ**विहीणमित्यादि ।

१ "तत्र संज्ञाकरणं कटकरणादि । 'आदि'शब्दात् 'पेलु'करणादिपरिग्रहः । 'पेलु' शब्देन रुतपूणिका उच्यते । अयमत्र भावार्थः–कटनिर्वर्तकम् अयोमयं चित्रसंस्थानं पोल्लकादि (पाइल्लकादिः पाठा०) । तथा रुतपूणिकानिर्वर्तकं शलाका–शल्यकाङ्गरुहादि"—हारि० वृ० मु० पृ० ४५६ गा० १५३ । मलय० वृ० मु० पृ० ५५८ गा० १५३ । २ एतदपि कस्यचित् पदार्थस्य निष्पत्तौ करणम् । अत्र °रुहादिना'स्थाने 'रुहादि' इति समुचितम् । ३ "तत् पेलुकरणादिकं बहुभेदम् । तत्र लाटदेशे रूतसम्बन्धिनी या 'पूणिका' इति प्रसिद्धा सैव महाराष्ट्रकविषये 'पेलुः' इति उच्यते" इत्यादि तुलनीयम् । —हे० वृ० मु० पृ० १२५९ गा० ३३०५ तथा "वंशादिमयी शलाका पेलुकरणम् । आदिशब्दात् कटकरणं पाइल्लकादि–तथा वार्ताकरणं बालानाम् अधीयानानाम् वर्तनकम् । (भाषायां 'वतरणुं' इति प्रसिद्धम् । एतदेव ललितविस्तरे लिपिशालासंदर्शपरिवर्ते पृ० ८८) 'तिरक' शब्देन सूचितम् ।) तथा काण्डकरणम् उपकरणविशेषरूपम् काण्डकरणं परिगृह्यते ।.......'पेलु'करणादिकं पूणिकावलनकशलाकादि द्रव्यम्" इत्यादि च—हे० वृ० १२५९ पृष्ठगतं तुलनीयम् । ४ दव्वण° हे त । ५ पेलुक° हे त । ६ किह को ।

यदि तत् पेलुकरणमर्थात्मकं भावार्थशून्यं न भवति शब्दा[त्म]कं वा पेलुकरणं तदर्थशून्यं न भवति ततो द्रव्यकरणमिति किमुच्यते ननु भावकरणमित्युदाहर्त्तव्यम् ? उच्यते, रूढितः—यस्मात् तेन द्रव्यं पेल्वादिकं क्रियते तस्मात् तत् द्रव्यकरणत्वेऽपि संज्ञाकरणमित्युच्यते, करणशब्दरूढिता न संज्ञामात्रेण, संज्ञा च सा करणं च तदिति कर्मधारयः समास आश्रीयते ॥४०३१-३२॥

**णोसण्णाकरणं पुण द[illegible]स्सारूढकरणसण्णं पि ।**
**तक्किरियाभावातो पयोगतो वीससातो य ॥४०३३॥**

**णोसण्णाकरणं पुण** इत्यादि । एतद्विपर्ययेण द्रव्यकरणव्यापारादरूढकरणशब्दमपि तदर्थकारित्वात् द्रव्याधिकरणशक्तिसम्बन्धाद् नोसंज्ञाकरणं द्रव्यकरणम्—तच्च द्वेधा—प्रयोगतः विस्रसातश्चेति ॥४०३३॥

तत्र विस्रस्य(सा)करणम्—

**सादियमणातियं वा अजीवदव्वाण वीससाकरणं ।**
**धम्माऽधम्म-णभाणं अणादि संघादणाकरणं ॥४०३४॥**

**सादियमणातियं वा** । स्फुटार्था ॥४०३४॥

**णणु करणमणादीयं च विरुद्धं भण्णते ण दोसोऽयं ।**
**अण्णोण्णसमाधाणं जमिधं करणं ण णिव्वत्ती ॥४०३५॥**

**णणु करणमणादीयं** चेत्यादि । 'डुकृञ् करणे' अपूर्वप्रादुर्भावे वर्त्तते । तत् 'करणं च अनादि च' इति विरुद्धं तत् । प्रतिविधीयते, नायं दोषः, यतो नावश्यं करणमपूर्वप्रादुर्भावे एव, किं तर्हि ? अन्योन्यसमाधानेऽपि करणशब्दो वर्तते एव, न निर्वृत्तावेवेत्यर्थः ॥४०३५॥

**अधव परपच्चयातो संजोगादिकरणं णभादीणं ।**
**सातियमुवयारातो पज्जायादेसदो आवि ॥४०३६॥**

**अधव परपच्चयातो** इत्यादि । अथवा परवस्तुप्रत्ययाद् आकाशादीनां योग्यताकरणमाद्यमुपचारात् तत्पर्यायादेशाद्वा सादित्वम् । सर्व एव पर्यायमयमा(मयः सा)दिरिति, प्रतिक्षणध्वंसित्वात् ॥४०३६॥

एवं तावद् अरूपिद्रव्यविषयमाद्यमनाद्यं च विस्रसाकरणं स्वाभाविकमुक्तम् । अथ रूपिद्रव्यविषयं विस्रसाकरणम्—

**चक्खुसमचक्खुसं पि य सातीयं रूवि वीससाकरणं ।**
**अब्भाऽणुप्पभितीणं बहुधा संघातभेतकत ॥४०३७॥**

चक्खुसमचक्खुसं पि य । स्थूलसंघातपरिणतं पुद्गलद्रव्यं चाक्षुषम्, सूक्ष्मसंघातपरिणतं च परमाणुद्रव्यमचाक्षुषम् । अत्र सूक्ष्मसंघातप्रभृतीनां परमाणुप्रभृतीनां च संघातकरणाद्भेदकरणाच्च वैस्रसिकं करणम् ॥ ४०३७॥

होति पयोगो जीवव्वावारो तेण जं विणिम्माणं ।
सज्जीवमजीवं वा पयोगकरणं तयं बहुधा ॥४०३८॥

होति पयोगो जीवव्वावारो इत्यादिः स्फुटार्था ॥४०३८॥

सज्जीवं[२६५-द्वि०] मूलुत्तरकरणं मूलकरणं जमादीयं ।
पंचण्ह देहाणं उत्तरमादिल्लियस्सेव ॥४०३९॥

सज्जीवं मूलुत्तरकरणं इत्यादि । सजीवं प्रयोगकरणं मूलकरणमुत्तरकरणं च । तत्र पञ्च(ञ्चा)नामौदारिकादिदेहानामादी(दौ) संघातकरणं मूलकरणमुच्यते, उत्तरकरणं तु औदारिक-वैक्रियाऽऽहारकाणामेवाङ्गोपाङ्गादिसम्भवाद् नोत्तरयोर्द्वयोस्तैजस-कार्मणयोः ॥४०३९॥

तत्र—

मूलकरणं सिरोरेसपट्ठीबाहूदरोरुणिम्माणं ।
उत्तरमवसेसाणं करणं केसादि[1]करणं च ॥४०४०॥

मूलकरणं सिरोरस०इत्यादिर्गतार्था ॥४०४०॥

संठवणमणेगविधं दोण्हं पढमस्स भेसजेहिं पि ।
वण्णादीणं करणं परिकम्मं ततियये णत्थि ॥४०४१॥

संठवणमणेगविधं इत्यादि । द्वयोरौदारिक-वैक्रिययोः [3]संस्करणमनेकविधं परिकर्म—प्रथमस्यौदारिकस्य वर्णादिकरणं बहुधा भेषजैरपि जीवप्रयोगाच्च । तृतीये आहारके परिकर्मैच(मैंव) नास्ति ॥४०४१॥

अथवा अन्यत् करणं प्रायोगिकम्—

संघातण-परिसाडणमुभयं करणमधवा सरीराणं ।
आताण-मुयणसमयो तदन्तरालं च कालो सिं ॥४०४२॥

संघातण-परिसाडणमुभयमित्यादि । अथवा पञ्चानामपि शरीराणां संघातनम् परिशाटनम् संघात-परिशाटौ उभयाना(मेषा)मुभयम् एतत् त्रिविधं करणम् ।

---

१ °रपिट्ठो त । २ कम्मं च को हे त । ३ "संस्थापनम्"–हे० बृ० मु० पृ०१२६३ गा० ३२१५ । मूले तु 'संठवण'शब्दः अतः 'संस्थापनम्' समुचितम् । "संस्करणम्" कोट्या० वृ० मु० पृ० ९२५ गा० ४०५८ । ४ °रीरी° त । ५ °मए त ।

तत्र संघातकरणं(ण)कालः आदानसमय एकः, परिशाटकालः शरीरमोक्षसमयः, एतयोरादान-मोचनसमययोरन्तरालकालः स्वायुष्कंद्विसमयोनः संघात-परिशाटकाल इति। एषां संघात-परिशाटोभयानां(येषाम्) एष कालस्त्रिप्रकारोऽभिहितः। तत्र संघात-परिशाटकालावेकसमयिकाविति नाल्पबहुत्वं स्वविषयकृतम्। उभयकालस्तु बहुविकल्प इति समासतस्त्रेधा–जघन्यः उत्कृष्टः जघन्योत्कृष्ट इति ॥४०४२॥

तत्र सर्वजघन्यः—

**खुड्डागभवग्गहणं तिसमयहीणं जहण्णमुभयस्स।**
**पल्लतियं समऊणं उक्कोसोरालकालोऽयं ॥४०४३॥**
**दो विग्गहम्मि समया समयो संघातणाय तेहूणं।**
**खुड्डागभवग्गहणं सव्वजहण्णट्ठिती कालो ॥४०४४॥**
**उक्कोसो समऊणो जो सो संघातणासमयहीणो।**
**किध ण दुसमयविहीणो साडणसमएऽवणीतम्मि ॥४०४५॥**

**खुड्डागभवग्गहण**मित्यादि। औदारिकशरीरस्योभयात्मकः कालः सर्वनिकृष्टक्षुल्ला(ल्ल)कभवग्रहणं त्रिसमयोनम्—अतीतशरीरमोचनं परिशाटकालमनुभूय विग्रहगतिसमापन्नस्य शरीरान्तराऽग्रहणाद् द्वौ समयौ चक्रे, तृतीयसमयेन शरीरदेशप्राप्ते शरीरसंघातनसमयः एभिस्त्रिभिः समयैरूनं सर्वजघन्यमायुष्कं क्षुल्ला(ल्ल)कभवग्रहणं परिभाषितं प्राणापानकालस्यैकस्य सप्तदशभागम्–"खुड्डागभवग्गहणा सत्तरस हवंति आणुपाणम्मि" [ ]। एष जघन्य उभयकालः। अथौदारिकस्यैव उभयकालः-उत्कृष्टः पल्योपमत्रयं समयोनम्—उत्कृष्टत्वादयमविग्रहसमापन्न इहभवात् परभवं गच्छति, इहभवशरीरशाटं कृत्वा परभवायुषः त्रिपल्योपमकालस्य प्रथमसमयेन शरीरसंघातं करोति, ततो द्वितीयसमयादारभ्य संघात-परिशाटोभयकाल इति। तेन संघातनासमयेन ऊनं पल्योपमत्रितयमिति भावना ॥४०४३–४५॥

यद्येवं शाटनसमयोऽपि उभयकालविजातीय इति पर्यन्तसमयः शाटनसमयो व्यपनेतव्यः, तस्मिन्नपनीयमाने द्विसमयोनं पल्योपमत्रयं भवति, भवतु, किमेकसमयोनमुच्यते सिद्धान्ते ?–

**भण्णति भवचरिमम्मि वि [२६६–प्र०] समए संघाय-साडणा चेअ**
**परभवपढमे साडणमतो तदूणो ण कालो त्ति ॥४०४६॥**

१ °सोन्तरा° को। २ °डणे को हे, °डणं त।

**भणति भवचरिमम्मि वि** इत्यादि । उच्यते, भवचरिमे स्वायुष्कपर्यन्तसमये शरीरसंघात-परिशाटावेवोभयम् नैकः परिशाट एव, क तर्हि परिशाटः ? उच्यते, **'परभवपढमे'** इहभवाद्वर्त्तमानादेष्यः परभवः, तस्य प्रथमसमये परभवायुष्कस्याद्ये समये परभवशरीरसर्वसंघातश्च इहभवशरीरसर्वशाटश्चेति एक एवासौ समय इति । स च संघातनासमयोऽपनीत एव, तस्मात् परभवायुष्कमिति शाटनसमयस्यान्यस्याभावात् द्वितीयो नापनीयते । तस्मान्न द्विसमयोनं पल्योपमत्रयमिति युक्तिसिद्ध आगमः ॥४०४६॥

एवमप्यन्यो दोषस्तत्प्रकाशनायाह—

**जति परपढमे साडो णिव्विग्गहतो य तम्मि संघातो ।**
**णणु सव्वसाड-संघादणाओ समए विरुद्धाओ ॥४०४७॥**

**जति परपढमे साडो** इत्यादि । यदि एष्यतः परभवस्य प्रथमसमये इहभवसर्वशाटः, निर्विग्रहया च गत्या उपपद्यमानस्य परभवप्रथमसमये तस्मिन्नेव परभवशरीरं संघातः, ते एते द्वे अपि क्रिये सर्वशाट-सर्वसंघातात्मिके एकस्मिन् परमसूक्ष्मे युगपद् विरुध्येते, परस्परविलक्षणत्वात्, स्थान-गमनवत् ॥४०४७॥

**जम्हा विगच्छमाणं विगतं उप्पज्जमाणमुप्पण्णं ।**
**तो परभवादिसमए मोक्खाऽऽदाणाण ण विरोधो ॥४०४८॥**

**जम्हा विगच्छमाणं** इत्यादि । विगच्छद् विगतम्, उत्पद्यमाह(न)मुत्पन्नमिति ऋजुसूत्रनयदर्शना निश्चयतः, तस्मात् परभवस्यादिसमये इहभवस्यादिशरीर(रं) मुच्यमानं मुक्तम्, परभवशरीरं च गृह्यमानं(णं) गृहीतम्, संघात्यमानं संघातितम्। तस्माद् भिन्नशरीरविषययोर्मोक्षादानयोरेककाले विरोधाभाव(वः), भिन्नयोस्तुलान्तयोर्नमनोन्नमनवत् ॥४०४८॥

**चुतिसमए णेह भवो इहदेहविमोक्खतो जधाऽतीते ।**
**जति ण परभवो वि तहिं तो सो को होतु संसारी ॥४०४९॥**

**चुतिसमए** इत्यादि । च्युतिसमये मरणसमये इहभवो नास्ति, इहभवशरीरमुक्तत्वात्, [1]अतीतभव[वत्] । यदि [2]पुनस्त(स्त्व)न्मत्या तत्र परभवोऽपि न भवेत् ततः उभयपरिगत्यै[3]ा(रित्यागा)दन्तरालवर्ती कोऽसौ भवेत् ? किमिहभवसंसारी ? [4]किं

१ मूले 'जधाऽतीते' इति वचनाद् 'अतीतभववत्' इति समुचितम् । २ "भवन्मत्या" को० मु० वृ० पृ० ९२६ गा०४०६६ । ३ इहभव–परभवयोः उभयोः त्यागात् इति आशयः । तुलनीयम् को० मु० वृ० पृ० ९२६ गा० ४०६६ । तथा हे० मु० वृ० पृ० १२६६ गा० ३३२३ । ४ किमिहभवसंसारी ? आहोश्वित् परभवसंसारी ? इति निर्व्यपदेश्योऽसौ"–को० मु० वृ० पृ० ९२६ गा० ४०६६ । तथा हे० मु० वृ० पृ० १२६६ गा० ३३२३ ।

तत्र संघातकरणं(ण)कालः आदानसमय एकः, परिशाटकालः शरीरमोक्षसमयः, एतयोरादान-मोचनसमययोरन्तरालकालः स्वायुष्कं द्विसमयोनः संघात-परिशाटकाल इति । एषां संघात-परिशाटोभयानां(येषाम्) एष कालस्त्रिप्रकारोऽभिहितः । तत्र संघात-परिशाटकालावेकसमयिकाविति नाल्पबहुत्वं स्वविषयकृतम् । उभयकालस्तु बहुविकल्प इति समासतस्त्रेधा–जघन्यः उत्कृष्टः जघन्योत्कृष्ट इति ॥४०४२॥

तत्र सर्वजघन्यः—

**खुड्डागभवग्गहणं तिसमयहीणं जहण्णमुभयस्स ।**
**पल्लतियं समऊणं उक्कोसोरालकालोऽयं ॥४०४३॥**
**दो विग्गहम्मि समया समयो संघातणाय तेहूणं ।**
**खुड्डागभवग्गहणं सव्वजहण्णट्ठिती कालो ॥४०४४॥**
**उक्कोसो समऊणो जो सो संघातणासमयहीणो ।**
**किध ण दुसमयविहीणो साडणसमएऽवणीतम्मि ॥४०४५॥**

**खुड्डागभवग्गहण**मित्यादि । औदारिकशरीरस्योभयात्मकः कालः सर्वनिकृष्टक्षुल्ला(ल्ल)कभवग्रहणं त्रिसमयोनम्—अतीतशरीरमोचनं परिशाटकालमनुभूय विग्रहगतिसमापन्नस्य शरीरान्तराऽग्रहणाद् द्वौ समयौ चक्रे, तृतीयसमयेन शरीरदेशप्राप्ते शरीरसंघातनसमयः एभिस्त्रिभिः समयैरूनं सर्वजघन्यमायुष्कं क्षुल्ला(ल्ल)कभवग्रहणं परिभाषितं प्राणापानकालस्यैकस्य सप्तदशभागम्–"खुड्डागभवग्गहणा सत्तरस हवंति आणुपाणम्मि" [ ] । एष जघन्य उभयकालः । अथौदारिकस्यैव उभयकालः–उत्कृष्टः पल्योपमत्रयं समयोनम्—उत्कृष्टत्वादयमविग्रहसमापन्न इहभवात् परभवं गच्छति, इहभवशरीरशाटं कृत्वा परभवायुषः त्रिपल्योपमकालस्य प्रथमसमयेन शरीरसंघातं करोति, ततो द्वितीयसमयादारभ्य संघात-परिशाटोभयकाल इति । तेन संघातनासमयेन ऊनं पल्योपमत्रितयमिति भावना ॥४०४३–४५॥

यद्येवं शाटनसमयोऽपि उभयकालविजातीय इति पर्यन्तसमयः शाटनसमयो व्यपनेतव्यः, तस्मिन्नपनीयमाने द्विसमयोनं पल्योपमत्रयं भवति, भवतु, किमेकसमयोनमुच्यते सिद्धान्ते ?–

**भण्णति भवचरिमम्मि वि [२६६–प्र०] समए संघाय-साडणा चेअ**
**परभवपढमे साडणमतो तदूणो ण कालो त्ति ॥४०४६॥**

१ °सोन्तरा° को । २ °डणे को हे, °डणं त ।

**भण्णति भवचरिमम्मि वि** इत्यादि । उच्यते, भवचरिमे स्वायुष्कपर्यन्तसमये शरीरसंघात-परिशाटावेवोभयम् नैकः परिशाट एव, क्व तर्हि परिशाटः ? उच्यते, **'परभवपढमे'** इहभवाद्वर्त्तमानादेष्यः परभवः, तस्य प्रथमसमये परभवायुष्कस्याद्ये समये परभवशरीरसर्वसंघातश्च इहभवशरीरसर्वशाटश्चेति एक एवासौ समय इति । स च संघातनासमयोऽपनीत एव, तस्मात् परभवायुष्कमिति शाटनसमयस्यान्यस्याभावात् द्वितीयो नापनीयते । तस्मान्न द्विसमयोनं पल्योपमत्रयमिति युक्तिसिद्ध आगमः ॥४०४६॥

एवमप्यन्यो दोषस्तत्प्रकाशनायाह–

**जति परपढमे साडो णिव्विग्गहतो य तम्मि संघातो ।**
**णणु सव्वसाड-संघादणाओ समए विरुद्धाओ ॥४०४७॥**

**जति परपढमे साडो** इत्यादि । यदि एष्यतः परभवस्य प्रथमसमये इहभवसर्वशाटः, निर्विग्रहया च गत्या उपपद्यमानस्य परभवप्रथमसमये तस्मिन्नेव परभवशरीरं संघातः, ते एते द्वे अपि क्रिये सर्वशाट-सर्वसंघातात्मिके एकस्मिन् परमसूक्ष्मे युगपद् विरुध्येते, परस्परविलक्षणत्वात्, स्थान-गमनवत् ॥४०४७॥

**जम्हा विगच्छमाणं विगतं उप्पज्जमाणमुप्पण्णं ।**
**तो परभवादिसमए मोक्खाऽऽदाणाण ण विरोधो ॥४०४८॥**

**जम्हा विगच्छमाणं** इत्यादि । विगच्छद् विगतम् , उत्पद्यमाह(न)मुत्पन्नमिति ऋजुसूत्रनयदर्शना निश्चयतः, तस्मात् परभवस्यादिसमये इहभवस्यादिशरीर(रं) मुच्यमानं मुक्तम्, परभवशरीरं च गृह्यमानं(णं) गृहीतम् , संघात्यमानं संघातितम् । तस्माद् भिन्नशरीरविषययोर्मोक्षादानयोरेककाले विरोधाभाव(वः), भिन्नयोस्तुलान्तयोर्नमनोन्नमनवत् ॥४०४८॥

**चुतिसमए णेह भवो इहदेहविमोक्खतो जधाऽतीते ।**
**जति ण परभवो वि तहिं तो सो को होतु संसारी ॥४०४९॥**

**चुतिसमए** इत्यादि । च्युतिसमये मरणसमये इहभवो नास्ति, इहभवशरीरमुक्तत्वात्, [1]अतीतभव[वत्] । यदि [2]पुनस्त(स्त्व)न्मत्या तत्र परभवोऽपि न भवेत् ततः उभयपरिगत्यां[3](रित्यागा)दन्तरालवर्ती कोऽसौ भवेत् ? किमिहभवसंसारी ? [4]किं

1 मूले 'जधाऽतीते' इति वचनाद् 'अतीतभववत्' इति समुचितम् । २ "भवन्मत्या" को० मु० वृ० पृ० ९२६ गा०४०६६ । ३ इहभव–परभवयोः उभयोः त्यागात् इति आशयः । तुलनीयम् को० मु० वृ० पृ० ९२६ गा० ४०६६ । तथा हे० मु० वृ० पृ० १२६६ गा० ३३२३ । ४ किमिहभवसंसारी ? आहोश्वित् परभवसंसारी ? इति निर्व्यपदेश्योऽसौ"–को० मु० वृ० पृ० ९२६ गा० ४०६६ । तथा हे० मु० वृ० पृ० १२६६ गा० ३३२३ ।

[परभवसंसारी] ? भय(उभय)मभ्युपपत्त्या न घटते । उभयाभावाच्च निर्व्यपदेश एवाभावः स्यात् ॥४०४९॥

चोदक आह–किमिति व्यपदेशः ? उभयव्यपदेशभाग् भवतु—

**णणु जध विग्गहकाले देहाभावे वि परभवग्गहणं ।**
**तध देहाभावम्मि वि होज्जेह भवो वि को दोसो ? ॥४०५०॥**

**णणु जध विग्गहकाले** इत्यादि । च्युतिसमये इहभवः(व)व्यपदेशः प्राप्तः, इहभवे शरीररहितत्वात्, विग्रहकाल इव परभवशरीराभावेऽपि परभवव्यपदेशवत् । ॥४०५०॥

आचार्य आह—

**जं चिय विग्गहकाले देहाभावे वि तो परभवो सो ।**
**चुतिसमए ण तु देहो ण विग्गहो जति स को होतु ॥४०५१॥**

**जं चिय विग्गहकाले** इत्यादि । युक्तं विग्रहे परभवव्यपदेश्यत्वम्, तदीयो विग्रहकालस्तदायुष्कदेश इति । च्युतिसमये तु शरीररहितत्वमेव केवलम्, तद्विग्रह-समयत्वं नास्तीति साधनधर्मरहितत्वात् सविशेषणहेत्वसिद्धत्वमिति नेहभवः(व)व्यपदेशः, तस्मात् परिशेषसिद्धेः परभव एवासौ ॥४०५१॥

प्रथमसमये संघातसमय इति संघातसमयस्य[2] संघातसमयस्य च अविशेषेणा-न्तरं किमिति ? तज्जघन्यमुत्कृष्टं च ? तत्र जघन्यं तावत्—

**संघातंतरकालो जहण्णयं खुड्डयं तिसमऊणं ।**
**दो विग्गहम्मि समया ततिओ संघातणासमयो ॥४०५२॥**

**तेहूणं खुड्डभवं धरितुं परभवमविग्गहेणेव ।**
**गंतूण पढम [२६६–द्वि०] समए संघातयतो स विण्णेयो ॥४०५३॥**

**संघातंतरकालो** इत्यादि गाथाद्वयम् । अतीतभवाद् विग्रहेणायातः इहभवं प्राप्तः सहभवायुषौ द्वौ समयौ, विग्रहेण नीत्या तृतीयसमये शरीरग्रहणं करोतीति स संघातसमयः, एतस्मात् समयात् परतः क्षुल्लकभवग्रहणम्, एति(भि)स्त्रिभिः

---

१ °लो को हे त । २ तुलनीयमेतत्–"इह संघातस्य संघातस्य च" को० बृ० मु० बृ० ९२७ गा० ४०६९ । ३ °घायाओ हे त ।

समयैरूनं आयुष्कं पालयित्वा परभवमविग्रहेण गच्छतः परभवप्रथमसमय एव संघातयतः शरीरम्, स विज्ञेयः संघातान्तरकालो जघन्य इति ॥४०५२-५३॥

उक्कोसं तेत्तीसं समयाधियपुव्वकोडिअधियाइं ।
सो सागरोवमाइं अविग्गहेणेह संघातं ॥४०५४॥

कातूण पुव्वकोडिं धरितुं सुरजेट्ठमाउगं तत्तो ।
भोत्तूण इधं ततिए समए संघातयंतस्स ॥४०५५॥

उभयंतरं जहण्णं समयो णिव्विग्गहेण संघाते ।
परमं सतिसमयाइं तेतीसं उदधिणामाइं ॥४०५६॥

उक्कोसं तेत्तीसं इत्यादि । उत्कृष्टं संघातात् सङ्घातस्यान्तरं भण्यते—योऽतीतभवादविग्रहेणाऽऽगत्य इहभवप्रथमसमये पूर्वकोटयायुः सन् संघातं कृत्वा समयोनां पूर्वकोटिमायुष्कमनुपाल्य सर्वार्थसिद्धोत्कृष्टस्थितिं प्राप्य त्रयस्त्रिंशत् सागरोपमाणि स्थित्वा मनुष्यभवं विग्रहेण गच्छतः परभवप्रथमसमय एव संघातयतः शरीरम्, स विज्ञेयः संघातान्तरकालो जघन्य इति । मनुष्यभवं विग्रहेण प्राप्य द्वौ समयौ अतिवाह्य तृतीयसमये पुनरप्यौदारिकशरीरग्रहणात् संघातं कुर्वतः औदारिकसंघातान्तरसमयाधिकपूर्वकोटयतिरिक्तानि त्रयस्त्रिंशत् सागरोपमाणीति सिद्धम्, यस्मात् पूर्वकोटिः संघातसमयेन [ऊ]ना आसीत्, विग्रहसमयौ च द्वौ तयोरेकेन पूर्वकोटिः पूरिता, द्वितीयोऽतिरिक्तः पूर्वकोटिसमय इति समयाधिका पूर्वकोटिः । अथौदारिकस्यैवोभयान्तरमुच्यते जघन्यमुत्कृष्टं च—तत्र उभयान्तरम्—इहभवायुष्कचरमसमये संघात-परिशाटौ कृत्वा अविग्रहेण परभवप्रथमसमये शरीरसंघातं कृत्वा द्वितीयसमये सङ्घात-परिशाटौ आरभते इति सङ्घातसमय एकः उभयान्तरं जातः । परममन्तरम्—उत्कृष्टम् इत्यर्थः—त्रिसमयाधिकानि त्रयस्त्रिंशत् सागरोपमाणि ॥४०५४-५६॥

एतस्य भावना—

अणुभवितुं देवादिसु तेतीसमिहागतस्स ततियम्मि ।
समए संघातयतो दुविधं साइंतरं वोच्छं ॥४०५७॥

अणुभवितुं देवादिसु इत्यादि । अ[illegible]न्तरं मृग्यते इति वैक्रियमुत्कृष्टमुदाहरणम्, इह औदारिकशरीरी आयुष्कचरमसमये संघातपरिशाटौ कृत्वा अविग्रहेण सर्वार्थसिद्धे उपपन्नस्त्रयस्त्रिंशत् सागरोपमाणि स्थित्वा विग्रहेण मनु-

१ °विस° हे त । २ °णेव त । ३ तुलनीयमेतत्—"पुनश्च एकसमयन्यूनां पूर्वकोटिं धृत्वा"—कोट्या० वृ० मु० पृ० ९२७ गा० ४०७१ ।

ष्येषु तृतीयसमये औदारिकसंघातं कृत्वा चतुर्थसमये संघात-परिशाटारम्भी त्रिसमयाधिकानि त्रयस्त्रिंशत् सागरोपमाण्यन्तरम्। एवमेव द्विविधं जघन्यमुत्कृष्टं च शाटस्यान्तरं वक्ष्यामीति ॥४०५७॥

खुड्डागभवग्गहणं जहण्णमुक्कोसयं च तेत्तीसं।
तं सागरोवमाइं संपुण्णा पुव्वकोडी य ॥४०५८॥

खुड्डागभवग्गहणं इत्यादि। अतीतभवचरमसमये सर्वशाटं कृत्वा इहभवं क्षुल्लकभवग्रहणमनुपाल्य पर्यन्ते सर्वशाट इति क्षुल्लकभवग्रहणं शाटस्यौदारिक विषयस्य जघन्यमन्तरम्। उत्कृष्टं मनुष्य औदारिकसर्वशाटं कृत्वा देवलोके त्रयस्त्रिंशत् सागरोपमाण्यतिवाह्य पुनर्मनुष्येष्वौदारिकसंघातं कृत्वा पूर्वकोटिं पर्यन्ते औदारिकसर्वशाटं करोतीति त्रयस्त्रिंशत् सागरोपमाणि पूर्वकोट्यधिकानि दृष्टमन्तरम्। अथ वैक्रियशरीरस्य सङ्घातोभयशाटानां कालः अन्तराणि च भण्यन्ते। तत्र वैक्रियसङ्घातस्य कालो जघन्यः एकः समयः ॥४०५८॥

यतः—

वेउव्वियसंघातो समयो सो पुण विउव्वणादीयं[1]।
ओरालियाणमधवा देवादीणाऽऽदिगहणम्मि ॥४०५९॥

वेउव्वियसंघातो इत्यादि। औदारिकशरीरिणा (णां) वैक्रियलब्धिमतां विकुर्वणारम्भे समय एको वैक्रियसङ्घाती, ततः परं सङ्घात-शाटौ अथवा देव-नारकाणामादिशरीरग्रहणसमय एको वैक्रियसङ्घाते ॥४०५९॥

उक्कोसो समयदुगं जो समयं[2] विउव्वि[3]उ मओ बितिए।
समए सुरेसु वच्चति णिव्विग्गहतो तयं तस्स ॥४०६०॥

उक्कोसो समयदुगं। उत्कृष्टतः सङ्घातनकालो वैक्रियस्य समयद्वयम्, स पुनरौदारिको वैक्रियलब्धिर्विकुर्वणारम्भो(म्भे) वैक्रियसंघातं समयेन कृत्वा आयुष्कक्षयाद् मृतः अविग्रहया गत्या देवेषूपपद्यमानोऽनन्तर एव समये देवायुष्कस्य प्रथमे वैक्रियं सङ्घातयतीति समयद्वयं वैक्रियसंघातस्य ॥४०६०॥

उभय जहण्णं समओ सो पुण दुसमय वि[२६७-प्र०]उव्वित मयस्स।
परमंतराइं[4] संघातसमय णाइं तेत्तीसं ॥४०६१॥

---

१ °ए को हे त। २ °यं हे। ३ °व्वितो जे। ४ परम् अतराइं इति विभागः। अतराइं—सागरोपमाणि।

**उभय जहण्णं समओ** इत्यादि । वैक्रियस्य संघात-परिशाटकालो जघन्यः समय एकः । स पुनरौदारिकस्य द्विसमयविक्रियागतस्यानन्तरमायुःक्षयाद् मृतस्य प्रथमसमये संघाते द्वितीये उभयमिति जघन्य एकः समयः, परमुत्कृष्टमुभयस्याव-स्थानमिति नपुंसकसम्बन्धः । संघातः(त)परिशाटस्योत्कृष्टः कालः संघातसमयेन हीनानि त्रयस्त्रिंशत् सागरोपमाणि । अतरः सागरः, अतर इवातरं सागरोप-ममुच्यते ॥४०६१॥

अथ वैक्रियसंघातस्यान्तरम्—

**संघातंतरसमयो समय विउव्वितं मतस्स ततियम्मि ।**
**सो दिवि संघातयतो ततिए व मतस्स ततियम्मि ॥४०६२॥**

**संघातंतरसमयो** इत्यादि । समयविकुर्वितमृतस्य विग्रहगत्या दिवि देवलोके विग्रहसमयमेकमनाहारस्यानन्तरं समये पूर्वस्मात् तृतीये शरीरं(र)संघातं कुर्वतः एको विग्रहसमयोऽन्तरमिति जघन्यमन्तरम् । अथवा औदारिकस्यैव द्विसमयविकु-र्वितस्य तृतीये समये मृतस्य तस्मिन्नेव वा विग्रहेण दिवि वैक्रियं संघातं(त)यतस्तृतीय एकः संघात-परिशाटसमयोऽन्तरं जघन्यमुच्यते ॥४०६२॥

**उभयस्स चिर विउव्वित मतस्स देवे[3] सविग्गहगतस्स ।**
**साडस्संतमुहुत्तं तिण्ह वि तरुकालमुक्कोसं ॥४०६३॥ दारं ॥**
**आहारोभयकालो दुविधो अन्तरतियं जहण्णं च ।**
**अंतोमुहुत्तमुक्कोसमद्धपरियट्टदेसूणं ॥४०६४॥**

**उभयस्स** इत्यादि । **आहारो०** इत्यादि । चिरविकुर्वितमृतस्य वैक्रिय-सर्वशाटं देवेष्वविग्रहगतस्य प्रथमसमये वैक्रियसंघातं च कृत्वा तस्मिन्नेव कृत्वा संघातपरिशाटारम्भ इति संघातसमयोऽन्तरं जघन्यम् । अथ शाटस्यान्तरं जघन्यम् अन्तर्मुहूर्त्तम् औदारिकशरीरी वैक्रियं कृत्वोपरतवैक्रियः सर्वशाटानन्तरमन्तर्मुहूर्त्तं स्थित्वा पुनर्वैक्रियमन्तर्मुहूर्त्तेन परिसमाप्य सर्वशाट इति तत्राहारकस्य संघातं(त)कालः शाट-

१ अत्र मूलगाथायाम् 'उभय जहण्णं समओ' इत्येवं पाठः । अत्र 'उभय' पदेन 'उभयम्' इत्येवं नपुंसकलिङ्गि प्रथमान्तं रूपं ग्राह्यम् । 'उभयम्' इति पदेन संघात-परिशाटोभयं ग्राह्यम् । अत एव अत्र वृत्तिकारो निरूपितवान् "'उभयम्' इति जघन्य एकः समयः, परम् उत्कृष्टम् उभयस्य अवस्थानम् इति नपुंसकसंबन्धः"—नपुंसकलिङ्गिरूपसम्बन्धः । अत्र हे० मु० वृ० पृ० १२७१, १३३५ गाथाया वृत्तिस्तुलनीया । २ °व्विय म° को । ३ °वेसु वि° को हे । ४ ति को हे त । ५ °ट्टूणं को हे ।

कालश्च समय एक एवेति सिद्धम् । उभयस्य तु संघातस्य द्विविधः जघन्य उत्कृष्टश्च वक्तव्यः, अन्तराणि च त्रीणि त्रयाणामपि जघन्यानि । संक्षेपेणान्तर्मुहूर्त्तः कालस्तस्य स्थानेमन्तरात्रि[स्थानान्तराणि] बहूनि, त्रयाणामप्युत्कृष्टमन्तरं अर्धपुद्गलपरिवर्त्तः देशोनः ॥४०६३-६४॥

[2]तेया-कम्माणं पुण संताणाणादितो[3] ण संघातो ।
भव्वाण होज्ज साडो सेलेसीचरिमसमयम्मि ॥४०६५॥

**तेया-कम्माणं पुण** इत्यादि । तैजस-कार्मणयोः शरीरयोरनादिसन्तानत्वात् सर्वसंघातो नास्ति । भव्यान् प्रति सर्वशाटो भवेत् । स च शैलेशीचरमसमये द्रष्टव्यः ॥४०६५॥

उभयं अणातिणिधणं संतं भव्वाण होति केसिंचि ।
अंतरमणातिभावाद[4]च्चंतवियोगतो ण य सिं ॥४०६६[5]॥

**उभयं अणातिणिधणं** इत्यादि । उभयं संघात-परिशाटो[भयम्] । तद् उभयमनादिनिधनं च सान्तम् । सनिधनं भव्यानां केषांचित् प्रतिपन्नसिद्धिसाधनानामन्तरं नास्त्येव, अनादित्वात् सदासम्बन्धात् । यस्य च वियोगः तस्यात्यन्तिक एव वियोगो न पुनः सम्बन्ध इति तस्मान्नैषामन्तरम् ॥४०६६॥

एवं तावज्जीवकरणं सप्रपञ्चमभिहितम्, अथ अजीवकरणम्—

अज्जीवाणं करणं णेयं पड-संख-सगड-थूणाणं ।
संघातण-परिसाडणमुभयं तध णोभयं चेव ॥४०६७॥
जं जं णिज्जीवाणं कीरति जीवप्पयोगतो तं तं ।
वण्णाति रूवकम्मादि वा वि तदजीवकरणं ति[२६७--द्वि०]॥४०६८॥दारं॥
॥दव्वकरणं गतं॥

**अज्जीवाणं करणं** इत्यादि । **जं जं णिज्जीवाणं** इत्यादि । गतार्थं द्वारम् ॥४०६७–६८॥

एवं द्रव्यकरणं च क्षेत्रकरणम्—

इह दव्वं चेव णिवासमेत्तपज्जायभावतो खेत्तं ।
भण्णति णभं ण तस्स य करणं णिव्वत्तितोऽभिहितं ॥४०६९॥

---

१ "संक्षेपेण अन्तर्मुहूर्तकालः, तस्य स्थानान्तराणि बहूनि"-कोटया० मु० वृ० पृ० ९२९ ४०८१ । २ केवलं हे मुद्रितमूलस्थूलाक्षरपाठानुसारेण (पृ० १२४३–१२४४) तथा दी मुद्रितमूलस्थूलाक्षरपाठानुसारेण (पृ० २०२) च इदं गाथाद्वयं निर्युक्तिगतम् । परम् अनयोर्गाथयोर्निर्युक्तिगतताविषये हेवृत्तौ दीपिकायां च नास्ति कोऽपि निर्देशः । ३ °णोऽणा° को हे । ४ °वा अच्चं° को हे त दो हा म । ५ संघातपरिशाटोभयवक्तव्यता समाप्ता त ।

इह दव्वं चेव इत्यादि । 'क्षि' नि(नि)वास-गत्योः[1] इति धातोरौणादिके 'त्र' प्रत्य[ये] क्षेत्रं नभोद्रव्यम्—निवासपर्यायमात्रादाधारव्यपदेशं क्षेत्रमुच्यते । तस्य चामूर्त्तस्य नित्यस्य सर्वगतस्य च निर्वृत्तिकरणाभावात् 'क्षेत्रकरणम्' इति न घटते, अथ चोच्यते ॥४०६९॥

ततः—

होज्ज व पज्जायातो पज्जाओ जेण दव्वतो णण्णो ।
उवचारमेत्ततो वा जध लोए सालिकरणादि ॥४०७०॥

होज्ज व पज्जायातो इत्यादि । पर्यायतः पुद्गलद्रव्यपरिक्षेपात् संस्कारमात्रं करणं भवेत्, स च पर्यायः स्वस्मात् द्रव्यादनन्य इति पर्यायद्वारेण क्षेत्रकरणम् , उपचारमात्राद् वा—यथा शालिकरणम् इक्षुकरणं वेत्यादि । अथवा नैवं विग्रहः 'क्षेत्रस्य करणम्' इति, किं तर्हि ? क्षेत्रे करणं क्षेत्रकरणम्, यत्र पुण्यं दानाध्ययनादिना क्रियते तत् पुण्यक्षेत्रम्, पुण्यकरणसम्बन्धमात्रात् ॥४०७०॥

खेत्ते व जत्थ करणं ति खेत्तकरणं तयं जधासिद्धा[2] ।
खेत्तं पुण्णमिणं पुण्णकरणसंबन्धमेत्तेणं[3] ॥४०७१॥

खेत्ते व जत्थ करणं इत्यादिर्गतार्था ॥४०७१॥

अथ कालकरणम्—

जं वत्तणातिरूवो कालो दव्वस्स चेय पज्जाओ ।
तो तेण तस्स तम्मि व ण विरुद्धं सव्वधाकरणं ॥४०७२[4]॥

जं वत्तणातिरूवो इत्यादि ॥४०७२॥

अधवेह कालकरणं ववादि जोतिसियगतिविसेसेणं ।
सत्तविधं तत्थ चरं चतुव्विधं थिरमहक्खातं ॥४०७३॥

ववं च बालवं चेव कोलवं[5] थीविलोयणं ।
गैराति[6] वणियं चेव विट्ठी हवति सत्तमा ॥४०७४॥

---

१ तुदादिगणस्थोऽयं धातुः । २ यथासिद्धा-इयं प्रतीतिः लोकप्रसिद्धा । ३ °बद्धमे° जे । ४ ४०७२–४०७६ एताः पञ्च गाथाः स्थूलाक्षरेण मुद्रयित्वा संपादकेन निर्युक्तिगता मताः परन्तु तद्विषये हे०वृत्तौ न कोऽपि निर्देशः । ५ °वं तीइलो य णं हे । °वं थिविलोयणं को० मु० पृ० ९३० । °वं थीविलोय णं आव० चू० मु० पृ० ५९९ । बं तेत्तिलं तहा । सूत्रकृता० वृ० पृ० ५ । 'स्त्रीविलोचनम् तैतिल' इति अन्याख्यम्-दी० मु० पृ० २०३ गा० १०२५ । ६ गरो हि व० हे ।

पक्खतिथयो दुगुणिता दुरूवरहिता य सुक्कपक्खम्मि ।
सत्तहिते देवसियं तं चिय रूवाहियं रत्ति ॥४०७५॥

सउणि चतुप्पद णागं [1]किंथुग्घं च करणं थिरं चतुधा ।
बहुलचतुद्दसि[२६८-प्र०]रत्तिं सउणिं[2] सेसं तियं कमसो ॥४०७६॥

अथवेह कालकरणं इत्यादि । बवेत्यादि । पक्खेत्यादि । सउणीत्यादि । गाथाचतुष्टयं स्फुटार्थम् ॥४०७३–७६॥

अथ भावकरणम्—

भावस्स व भावेण [3]वं भावे करणं व भावकरणं ति ।
तं जीवाऽजीवाणं पज्जायविसेसतो बहुधा ॥४०७७॥

भावस्स व भावेण व इत्यादि । भावकरणं क्रोधादेः, अजीवभावस्य वा वर्णादेः भावेन करणम् । अध्यवसायविशेषेण भावे वा करणम् औदयिकादौ । एतद् भावकरणं जीवाजीवविषयतया बहुधा ॥४०७७॥

अपरप्पयोगजं जं अजीवरूवातिपज्जयावत्थं ।
तमजीवभावकरणं तप्पज्जायप्पणावेक्खं ॥४०७८॥

अपरप्पयोगजं जं इत्यादि । परप्रयोगमन्तरेण परजीवद्रव्यस्य रूपादि-पर्यायावस्थं तत्पर्यायापेक्षणाद् अजीवभावकरणम् अभ्रादेर्नानावर्णान्तरगमनम् ॥४०७८॥

को दव्ववीससाकरणतो विसेसो इमस्स णणु भणितं ।
इह पज्जायावेक्खा दव्वट्ठियणयमतं तं च ॥४०७९॥

को दव्ववीससाकरणतो इत्यादि । ननु च द्रव्यकरणमपि विस्रसाविषयमिदमेवोक्तम्, को न्वत्र भावकरणविशेष इति ? उच्यते, ननु विशेषितं 'तत्पर्यायार्पणापेक्षम्' इति । यथा इन्द्रधनुर्विचित्रवर्णपर्यायप्राधान्याद् वक्रतापर्यायप्राधान्याच्च तस्यैव विचित्रवर्णपर्यायस्य परिमण्डलपर्यायार्पणापरिवेशत्वं पर्यायापेक्षम्, तथा पर्यायार्पणविशेषात् पूर्वस्मिन् द्रव्यविस्रसाकरणे पुद्गलद्रव्यप्राधान्यम् द्रव्यार्थिकतयार्पणाद् इ[ति] विशेषः । एवमजीवभावकरणम् ॥४०७९॥

इह जीवभावकरणं सुतकरणं णोसुताभिधाणं च ।
सुतकरणं दुविकप्पं लोइयलोउत्तरं चेव ॥४०८०॥

---

१ किंछु° हे त । किञ्छुग्घं आव० चू० मु० पृ० ५९९ । २ °णं त हे °णी को । ३ च को, ति हे त ।

इह जीवभावकरणमित्यादि। जीवभावकरणं श्रुतकरणम्, नोश्रुतकरणं च। श्रुतकरणमपि च द्वेधा—लौकिकम् लोकोत्तरं च ॥४०८०॥

एकैकमपि—

**बद्धाबद्धं च पुणो सत्थासत्थोवदेसभेतातो।**
**एक्केक्कं सद्दणिसीधकरणभेदं मुणेतव्वं ॥४०८१॥**

**बद्धाबद्धं च पुणो** इत्यादि। पद्य-गद्यबन्धनाद्ग्रन्थ(ना)द् बद्धम्, शास्त्रोपदेशवत्। एवमेव मुक्तकमाचार्योपदेशमात्रं कर्मरूपम् अबद्धम् अशास्त्रोपदेशवत्। एकैकं शब्दकरणं प्रकाशपाठात् प्रकाशोपदेशाच्च, निषीच(शीथ)करणं रहस्यपाठाद् रहस्योपदेशाच्च ॥४०८१॥

एतद्व्याख्यानगाथा—

**उत्ती तु सद्दकरणं पगासँपाढं व सरविसेसो वा।**
**गूढत्थं तु णिसीहं रधस्स सुत्तत्थमधवा जं ॥४०८२॥**

**उत्ती तु सद्दकरणं** इत्यादिर्गताथां ॥४०८२॥

एतावद् बद्धं लौकिकं लोकोत्तरं च सुज्ञानम्, अथाबद्धमुपदेशमात्रं भण्यते—

**लोए अणिबद्धाइं अड्डिय-पच्चड्डियाँदिकरणाइं।**
**पंचादेससताइं मरुदेवादीणि उत्तरिए ॥४०८३॥ दारं**

**लोए अणिबद्धाइं** इत्यादि। मल्लानाम् अड्डिकाकरणं प्रत्यन्ति(ड्डि)काकरणं चोपदेशमात्रकमेव न ग्रन्थबद्धम्, लोकोत्तरेऽपि अनिबद्धानि पञ्चादेशग(श)तानि—यथा—'मरुदेवी अनादिवनस्पतिकायादुद्वृत्य तीर्थकरमाता जाता' इत्यादीनि ॥४०८३॥

**भावकरणाधिगारे किमिधं सद्दादिदव्वकरणेणं।**
**[२६८-द्वि०] भण्णति तत्थ वि भावो विवक्खितो तव्विसिट्ठो तु ॥४०८४॥**

**भावकरणाधिकारे** इत्यादि। इह भावकरणाधिकारः प्रकृतः, इदं तु श्रुतकरणं शब्दविषयत्वाद् द्रव्यकरणम्, तद् अप्रस्तुताभिधानम्। युक्तमुच्यते, तत्रापि शब्दकरणे

---

१ °द्धमब° को। २ अत्र 'मुक्तकण्ठम् आचार्यमुखजन्योपदेशमात्रम् कण्ठस्थरूपम् अबद्धम्' ईदृशं वाक्यं समुचितम्। तुलनीयम्—"मुक्तकण्ठश्रवणाद् अबद्धम्"—कोटया० मु० वृ० पृ० ९३२ गा० ४०९८। तथा हे० मु० वृ० पृ० १२७८ गा० ३३५५। ३ °सवा° जे। ४ याइं क° को हे। "मल्लानां करणविशेषरूपाणि अड्डिका-प्रत्यड्डिकादीनि। हे० वृ० पृ० १२७८। एतद्विषये सविस्तरं निरूपणम् (हा वृ० पृ० ४६५ द्वि० तथा म वृ० पृ० ५६७ द्वि०) द्रष्टव्यम्।

तच्छब्दविशिष्टः श्रुतभाव एव विवक्षितो ज्ञानात्मकः न शब्दद्रव्यमात्रमिति न दोषः ॥४०८४॥

**णोसुतकरणं दुविधं गुणकरणं [1]जुंजणाभिधाणं च।**
**गुणकरणं[2] तवसंजमकरणं मूलुत्तरगुणा वा ॥४०८५[4]॥**

**णोसुतकरणं दुविधं** इत्यादिः स्फुटार्थः ॥४०८५॥

**मणवयणकायकिरिया पण्णरसविधा[5] उ जुंजणाकरणं ।**
**सामाइयकरणमिदं[6] कंणामादीण होज्जाहि ॥४०८६॥**

**मणेत्यादिः** सुगमा ॥४०८६॥

एतत् पुनः सामायिकं करणं नामादीनां षण्णां निक्षेपाणां कस्मिन्नवतरेदिति ?

**सव्वं पि जधाजोगं[8] णेयं भावकरणं विसेसेणं ।**
**सुअबद्धसद्दकरणं सुतसामइयं ण चारित्तं ॥४०८७॥**

**सव्वं पि जधाजोगं** इत्यादि । सर्वमपीति चतुर्विधं सामायिकं विशेषेण भावकरणम् इतरत्रापि द्रव्यगुणपर्यायानन्यत्वाद् द्रव्यादिषु सम्भवत्येव, तत्रापि श्रुतसामायिकं श्रुतकरणे–लोकोत्तरबद्धे शब्दकरणे । पुनश्चारित्रसामायिकं चरित्राचरित्रसामायिकं सम्यक्त्वसामायिकं वा एतत् त्रितयमपि नोश्रुतकरणे, तत्रापि गुणकरणे ॥४०८७॥

यस्मात् —

**गुणकरणं चारित्तं तवसंजमगुणमयं ति कादूणं ।**
**संभवतो सुतचरणं[9] सुपसत्थं जुंजणाकरणं ॥४०८८॥ दारं ॥**

**गुणकरणं चारित्तं** इत्यादि । श्रुतसामायिकं चारित्रसामायिकं च सुप्रशस्तयोजनाकरणम् ॥४०८८॥

---

१ तह य जुंजणाकरणं ॥ **दी हा म** । २ °णं पुण दुविहं तवकरणे संजमे अ तहा ॥ **दी हा म** । ३ °णो त । ४ इयं ४०८५ गाथा विशेषाव०संपादकेन तन्मूलपाठमात्रमुद्रणे स्थूलाक्षरैर्मुद्रयित्वा निर्युक्तिगता सूचिता परं एतद्विषये हे० वृत्तिकारः न किमपि सूचितवान् । अस्या गाथाया अनन्तरं निम्नदर्शितं गाथाद्वयं हा म दी पुस्तकेषु अधिकं दृश्यते—
जुंजणकरणं तिविहं मणवयकाए अ मणसि सच्चाई । सट्ठाणि तेसि भेओ चउ चउहा सत्तहा चेव ॥
भावसुअसद्दकरणे, अहिगारो इत्थ होइ नायव्वो । नोसुअकरणे गुणजुंजणे अ, जहसंभवं होइ ॥
५ °धा पडंज° जे । ६ °णं को हे त । ७ किं ना° को हे, किं णा° ल । ८ °गं को त । ९ °करं° त ।

कताकतं केण कतं केसु व दव्वेसु कीरई वावि ।
काधे य कारओ णयतो करणं कतिविहं कधं वा ॥७२५॥४०८९[1]॥

कताकतं इत्यादिः प्रश्नगाथा ॥४०८९॥

अस्या भाष्यम्—

किं कतमकतं कीरति किं चातो भणति सव्वधा दोसो ।
कतमिह सब्भावातो ण कीरते चिरकतघडो व्व ॥४०९०॥

किं कतमित्यादि । सामायिकस्य करणमिति क्रियां श्रुत्वा चोदक आक्षिपति—एतत् सामायिकं अस्याः क्रियायाः प्राक् किं कृतम् ? आहोस्विद् अकृतम् ? किं चातः ? सर्वथाऽपि दोष इति । यदि कृतं ततः कृतत्वात् सद्भावादेव नेदानीं क्रियते, चिरकृतघटवत् ॥४०९०॥

णिच्चकिरियापसंगो किरियावेफल्लमपरिणिट्ठा वा ।
अकत-कत-कज्जमाणव्ववदेसाभावतो[2] णिच्चे ॥४०९१॥

णिच्चकिरियापसंगो इत्यादि । अथ कृतमपि क्रियते, तत्र विशेषान्तरापेक्षया, ततः सततमपिक्रियन्तां (ताम्)एवं नित्यक्रियाप्रसङ्गः, कृतस्य च करणे पुनः कृतत्वमेव भवतीति क्रियावैफल्यम् पुनःक्रियाफलाभावात् । अथ न नाम फलम् तथापि क्रिया प्रयुज्यते एव । एवमपरिनिष्ठा, क्रियोपरमकारणाभावात् । अपि च यन्नित्यं कूटस्थमविचालि तत् अकृतमिति वा कृतमिति वा क्रियमाणमिति वा न व्यपदिश्यते, निष्फलत्वात् ॥४०९१॥

यद्येवं कृतत्वे दोषास्ततः 'अकृतं सामायिकम्' इत्यभ्युपगमः, एवमपि दोषा इति गाथा—

अकतं पि णेव कीरति अच्चन्ताभाव[२६९-प्र०]तो खपुप्फं व ।
णिच्चकिरियादिदोसा सविसेसतरा य[3] सुवर्णम्मि[4] ॥४०९२॥

---

१ एषा गाथा को पुस्तके (पृ० ९३४) भाष्यरूपेण मुद्रिता । हे वृत्तिकारः एतस्याः गाथायाः व्याख्याने प्रसङ्गायातम् एवं निर्दिशति—"इह च 'करणे भए य अंते' इत्यादिगाथायाः समनन्तरं 'णामं ठवणा दविए' इत्यादिका बह्व्यो गाथा निर्युक्तौ दृश्यन्ते, ताश्च भाष्यकारेण प्रक्षेपरूपत्वादिना केनापि कारणेन प्रायो न लिखिताः, केवलं तदर्थ एव भाष्यगाथाभिर्लिखितः, तदत्र कारणं स्वधियाऽभ्यूह्यमिति" । पृ० १२८१ । अयं च वृत्तिकारः 'अस्या भाष्यम्' इति तथा हे० वृत्तिकारः "इति निर्युक्तिगाथासंक्षेपार्थः" इति निर्दिशन् एनां ४०८९ गाथां निर्युक्तिगतां मन्यते । २ वया को हे त । ३ व हे, वि.त.। ४ सुत्तम्मि त ।

**अकतं पि णेव कीरइ** इत्यादि । एवमपि सामायिकं न क्रियते, अकृतत्वात्–कृतं न भवतीति प्रसज्यप्रतिषेधात् अत्यन्ताभावात्–इत्यर्थः–खपुष्पवत् । अथ अकृतकत्वे(कृतत्वे)ऽपि अत्यन्ताभावत्वेऽपि क्रियते, एवं ततो नित्यक्रियादिदोषाः सर्वेऽपि सविशेषतरा वस्तुशून्ये तस्मिन्नभावे ॥४०९२॥

अथैतद्दोषसंस्पर्शपरिहारेण 'क्रियमाणं क्रियते' इत्यभ्युपगम्येत, ततः—

**सदसदुभयदोसातो सव्वं कीरति ण कज्जमाणं पि ।**
**इय सव्वधा ण कीरति सामइयमतो कतो करणं ॥४०९३॥**

**सदसदुभयदोसातो** इत्यादि । तत् क्रियमाणं वस्तु सद् वा, असद् वा परिकल्प्येत ? यदि सत् ततः पूर्वकृतत्वपक्षे(क्ष)दोषाः सर्वे प्रसजन्ति । अथ असं(सत्) ततः अकृतत्वपक्षजा अभावविषया दोषाः प्रसजन्तीति सदसदुभयदोषसम्भवात् सदसदपि न भवतीति सर्वथा सर्वपक्षेष्वपि सामायिकस्य करणं न सम्भवतीति कुतः करणम् ? ततः सर्वथापि न क्रियते सामायिकमिति प्रतिषेध एव स्थितः ॥४०९३॥

अत्र प्रतिविधीयते—

**णणु सव्वधा ण कीरति पडिसिद्धम्मि[1] वि समाणमेवेदं ।**
**पडिसेधस्साभावे पडिसिद्धं[2] केण सामइयं ॥४०९४॥**

**णणु सव्वधा ण कीरती**त्यादि । 'ननु' इति अभ्युपगमे । योऽयं प्रतिषेधः–'सर्वथा सामायिकं न क्रियते' इति, ननु एतस्मिन् प्रतिषेधे समानमेवेदम्, यत् सामायिकं भवता पर्यनुयुक्तं वैतण्डिकपक्षत्वात् । अयं प्रतिषेधः प्राक् प्रतिषेधवचनात् किं कृतः ? आहोस्विद् अकृतः ? यदि कृतः, ततः कृतत्वात् पूर्वमेव सद्भावादिदानीं प्रतिषेधवचनकाले न क्रियते, कृतत्वात् चिरकृतघटवत् । अथ त्वन्मत्या कृतोऽप्ययं विशेषापेक्षया पुनः क्रियते, एवम् , ततः सततमपि । एवं नित्यं क्रियाप्रसङ्गः । कृतस्य च करणे पुनः कृतत्वमेव भवति नान्यदिति क्रियावैफल्यम् , पुनःक्रियाफलाभावात् । अथ न नाम फलं तथापि क्रियत एव, ततश्चो(श्चा)परिनिष्ठा क्रियायाः, क्रियोपरमकारणाभावात् । नित्यं च यत् क्रियते सर्वकालं तत् सर्वदा स्थितं नित्यं कूटस्थमविचालि तस्मिन् 'कृतम्' 'अकृतम्' 'क्रियमाणम्' इति व्यपदेशाभाव एव, निष्फलत्वात् । यद्येवं कृतत्वे प्रतिषेधस्य दोषप्रसङ्गस्ततोऽयम् 'अकृतः प्रतिषेधः' इत्यभ्युपगम्यते, एवमपि पूर्ववत् सामायिकवद्दोषास्तत एव । तद्यथा–नायं प्रतिषेधः क्रियते, अकृतत्वात्–प्रसज्यप्रतिषेधपक्षे नञ्–अत्यन्ताभावश्च, दृष्टान्तः सुकरः खपुष्पवत् । अथैवमकृतत्वेऽपि

---

१ °म्मा° हे त । २ °सेहम्मि त ।

अत्यन्ताभावत्वेऽपि क्रियत एव, ततो नित्यक्रियादिदोषाः सर्वेऽपि सविशेषतरा वा वस्तुशून्ये तस्मिन् प्रतिषेधवचने । अथैतद्दोषसंस्पर्शपरिहारेण क्रियमाणो वर्तमानकाले 'क्रियते' इति कृतः प्रतिषेध उच्यते, तथापि स प्रतिषेधः सत्(न्)वा, असत्(न्)वा, सदसन् वा अभ्युपगम्येत ? चतुर्थपक्षासम्भवात् । सर्वथाऽपि पूर्वदोषप्रसङ्ग इति प्रतिषेधस्य करणं न सम्भवतीति करणाभावात् प्रतिषेध एव नास्ति । ततश्च प्रतिषेधस्याभावे केन प्रतिषिद्धं सामायिकम् ? इति अध्या(ध्य[क्ष])सिद्धसिद्धत्वात् प्रतिष्ठितम् ॥४०९४॥

**अध कतमकतं ण कतं च कज्जमाणं कतं तधा वि कतं ।**
**पडिसेधवयणमेतं तध सामयियं पि को दोसो ॥४०९५॥**

**अध कतमकतं** इत्यादि । अथैवं भवतः प्रतिषेधवादिनोऽभिप्रायः–प्रतिषेधवचनं हि कृतं वा भवतु, अकृतं वा भवतु, क्रियमाणं वा भवतु, तथापि कृतं सर्वथा । तदेवमकृतमपि सम्प्रति प्रतिषेधवचनमस्माभिरुच्चार्यमाणत्वात् कृतमिति । एवं भवदभ्युपगमेनैव यदि सामायिकमपि कृताकृतादिभङ्गसम्भवप्राप्तं क्रियते व्रतोच्चारणादिकाले, ततः को दोषः ? इति तुल्याभ्युपगमतया वैनयिकपक्षहानिः ॥४०९५॥

तमिदानीं कृताकृतादिभङ्गसम्भवमाचार्याः(र्यः) प्रविभागेन दर्शयन्नाह—

**अकतमसुद्धणयाणं णिच्चत्तणतो णभं व सामइयं ।**
**सुद्धाण कतं घड इव कताकतं समयसब्भावो ॥४०९६॥**

**अकतमसुद्धणयाणमित्यादि** । अशुद्धनया द्रव्यार्थप्रधाना नैगम-सङ्ग्रह-व्यवहाराः, तेषां मतेन अकृतं सामायिकम्, नित्यत्वात्, नभोवत्(नभस्वत्). द्रव्यार्थतः सर्वमेव वस्तु नित्यमिति पक्षधर्मत्वम् । शुद्धनयास्तु ऋजुसूत्रादयः । तेषां मतेन कृतं सामायिकम्, अनित्यत्वात्, घटवत् । पर्यायार्थतः सर्वमेवानित्यं कृतकं च वस्त्विति पक्षधर्मत्वम् । एवमेकान्ते भङ्गद्वयम् ॥४०९६॥

अथ कृताकृतत्वमुभयरूपं स्याद्वादसमयसद्भावात् । तत् पुनरुभयरूपत्वं द्रव्यार्थपर्यायार्थनयविवक्षावशाद् भवति । तत्प्रदर्शनार्थमयं गाथाप्रपञ्चः—

**कीरति कतमकतं वा कताकतं वेह कज्जमाणं वा ।**
**कज्जमिह विवक्खाए ण कीरते सव्वधा किंचि ॥४०९७॥**

**कीरति कतमकतं वा** । इह कार्यं कयाचिद् विविक्षसाया(विवक्षया) कृतं निष्पन्नं क्रियते, कदा(या)चिद् विवक्षा(क्षया) वा अकृतमनिष्पन्नं क्रियते, कयाचिद्

१ 'सामायिकम्' इति शेषः ।

विवक्षया कृताकृतम्, कयाचित् क्रियमाणम्। न पुनः सर्वथा सर्वैः प्रकारैः किञ्चित् क्रियते, तादृशस्यासम्भवात् क्रियायोगाभाव एव ॥४०९७॥

एतद्विवक्षाचतुष्टयस्योदाहरणगाथा—

**रूवि त्ति कीरति कतो कुंभो संठाणसत्तितो अकतो ।**
**दोहि मि[1] कताकतो सो तस्समयं कज्जमाणो त्ति ॥४०९८॥**

**रूवि त्ति कीरति कतो** इत्यादि। घटकार्थं क्रियते—रूपित्वेन मृत्पिण्डावस्थायां पूर्वकृत एव कृतः क्रियन्ते(ते)। स एव मृदवस्थायाम् ऊर्ध्वादिसंस्थानेन जलयो(जला)हरणशक्त्या च अनिष्पन्नः अकृतः सतु(न्) क्रियते। द्वाभ्यामपि विवक्षाभ्यां रूपित्व-संस्थानशक्तिभ्यां कृताकृतः सन् क्रियते। तस्मिन्नेव क्रियासमये क्रियमाणः क्रियाविष्ठ(ष्टः) क्रियते ॥४०९८॥

**पुव्वकतो तु घडतया परपज्जाएहिं तदुभएहिं च ।**
**कज्जंतो य पडतया ण कीरते सव्वधा कुंभो ॥४०९९॥**

**पुव्वकतो तु घडतया** इत्यादि। यस्तु पूर्वं कृतः पूर्वनिष्पन्नः स एव घटतया घटस्वपर्यायेण कृतत्वान्न क्रियते, परपर्यायैश्च पटकरणादिगतैरसम्बन्धाव(द)निष्पन्नत्वाद् अकृतः, अकृतत्वाच्च तदात्मभिन्नं क्रियते, तदुभयश्चै स्वपर्यायैः परपर्यायैश्च उभयैर्विवक्षितः कृताकृतः सन्न क्रियते उभयरूपेण निष्पन्नानिष्पन्नत्वात्, तथा क्रियमाणश्च वर्तमानः क्रियाविष्टः पटतया सर्वात्मना न क्रियते। एवं सर्वथा सर्वैः प्रकारैः कुम्भो न क्रियते, कृताकृतादिचतुष्टयेऽपि विवक्षाप्रापितत्वात् ॥४०९९॥

अथवा अन्येन प्रकारेण कृताकृतत्वमुपवर्ण्यते—

**वोमाति णिच्च[२६९-द्वि०]तातो ण कीरते दव्वदाये वा सव्वं ।**
**कीरति य कज्जमाणं समए सव्वं सपज्जयतो ॥४१००॥**

**वोमाति णिच्चतातो** इत्यादि। यस्माद् द्रव्यार्थनयं प्रति सर्वै(र्वं) व्योमादि—आदिग्रहणाद् घट-विद्युत्कर्माद्यपि—नित्यम्, ततश्च न क्रियते। पर्यायनयं प्रति तु सर्व(र्वं) व्योम-परमाणु-घट-विद्युत्कर्माऽपि प्रतिसमयं तथातथोत्पादात् क्रियमाणं क्रियते ॥४१००॥

एवं समयसद्भाव इति प्रदर्शयति—

**उप्पातट्ठितिभंगस्सभावतो इय कताकतं सव्वं ।**
**सामाइयं पि एवं उप्पादादि[2]स्सभावं ति ॥४१०१॥**

1 मि त। 2 °इ त।

उप्पान-ट्ठिति-भंगस्सभावतो इत्यादि। यथा सर्वे वें, पदार्था उत्पाद-स्थिति-भङ्गस्वभावाः कृताकृताः, एवं सामायिकमिति उत्पादादिस्वभावमिति कृत्वा (ता)कृतं मन्तव्यम् ।।४१०१।।

अत्राह चोदकः—

[1]दव्वमणत्थंतरपज्जयंतरविसेसणादि जुज्जेज्ज ।

उप्पातादिसभावं ण तु [3]सामइयं गुणो जम्हा ।।४१०२।।

दव्वमणत्थंतरपज्जयंतर० इत्यादि। द्रव्यं हि 'सर्वपर्यायद्रवणाद् द्रव्यम्' इति अनर्थान्तरभूतपर्यायान्तरगमनात् विगमनाच्च तत्तद्विशेषणान्तरसापेक्षितया युज्येतोत्पादादिस्वभावमिति वक्तुम्, सामायिकं तु द्रव्यस्य गुणः, तस्य गुणान्तराभावात् कथं विशेषणान्तरसम्बन्ध(न्धो) भवेत् येन तद् उत्पादादिस्वभावं भण्येतेति ? ।।४१०२।।

तस्मात्—

सो उप्पण्णो उप्पण्ण एव विगतो य विगत एवेह ।

किं सेमस्स जेणिह कताकतादेसता होज्ज ।।४१०३।।

सो उप्पण्णो उप्पण्ण एवेत्यादि । सामायिकादिगुणः उत्पद्यमान उत्पन्नः उत्पन्न एव भवति नानुत्पन्नः, विगतो वा भवति, स्वरसभङ्गुरत्वाच्च विगतः सन्विगत एव भवति, नाविगतः उत्पन्नो वा, सर्वात्मना तस्योत्पादात्, सर्वात्मना च तस्य विनाशात्, न हि तस्य किञ्चिच्छेषमस्ति यदन्येन विशेषणान्तरेण विशेष्येत । ततश्च तद्विशेषणान्तराभावात् कथमिव कृताकृताद्यादेशं प्राप्नुयात् ? द्रव्यं ननूक्तन्यायेन युज्यते ।।४१०३।।

अत्राचार्येण समाधीयते—

जं चिय दव्वाणण्णो पज्जाओ तं च तिविधसब्भावं ।

तो सो वि तिरूवो च्चिय तत्तो य कताकतसभावो ।।४१०४।।

जं चिय दव्वाणण्णो पज्जाओ इत्यादि। यत एव द्रव्यादनन्यः पर्यायस्त्वया अभ्युपगम्यते, अत एवाऽचोद्यमेतत्, यस्माद् द्रव्यं त्रिविधम(स)द्भाव(वम्) स्थित्युत्पाद व्ययैः, एवं सामायिकपर्यायोऽपि स्थित्युत्पाद-व्ययत्रिविधस्वभावं(वः) । ततश्च कृताकृतादिस्वभावोऽपि ।।४१०४।।

जध वा रूवन्तरतो विगमुप्पाते वि रूवसामण्णं ।

णिच्चं कताकतमतो रूवं परपज्जयातो वा ।।४१०५।।

---

१ णणु दं हे त । २ °सणेहिं त । ३ सामाइं हे ।

अथ वा रूवन्तरतो इत्यादि। यदा रूपपर्यायः श्यामता, तस्याः विगमे रूपान्तरं रक्ततोत्पद्यते, यस्मिन्नेवंविधे विगमोत्पादेऽपि न सर्वथा विगमः, सर्वथोत्पादि(दे)ऽन्वयत्वे भावप्रसङ्गात् पूर्ववद्भावना। किन्तु रूपसामान्यं सर्वदा अनया(पा)यि नित्यमवतिष्ठते, तच्चाकृतं पर्यायान्तरविगमोत्पादाभ्यः कृतमिति पर्यायपक्षेऽपि सामायिकस्य कृताकृतत्वम्—परपर्यायतो वा तेन पररूपेणाभावादकृतत्वम्, स्वपर्यायेण कृतत्वमिति ॥४१०५॥

एवं रूपपर्यायं सामान्य-विशेषाभ्यामुपन्यस्य परपर्यायेण च दार्ष्टान्तिकपर्यायं निगमयति—

**तध परिणामंतरतो वयविभवे वि परिणामसामण्णं।**
**णिच्चं कताकतमतो सामइयं परगुणातो वा ॥४१०६॥**

**तध परिणामंतरतो** इत्यादि। सामायिकपरिणामसामान्यस्य सम्यक्त्वादि[:] चतुर्धा विशेषः। एकैकस्य चाभेदस्य संक्लेश-विशुद्धिभ्यां प्रतिसमयमुत्कर्षाऽपकर्षविशेषादनन्तपरिणामत्वम्। तस्यानेकधा 'व्ययविभवेऽपि' व्ययो विगमः, विभवः—विविधभवनम्—उत्पादः, तस्मिन् व्ययविभवेऽपि सामायिकपरिणामसामान्यमवशिष्ठ(ष्य)ते, 'नित्यम्'—यावज्जीवम् साधुत्वव्यपदेशात्। एवं सामायिकं कृताकृतम्। परगुणाद्वा परपर्यायादुक्तवद्भावना ॥४१०६॥

अथवाऽन्यथापि कृताकृतत्वमुच्यते—

**दव्वातिचतुक्कं वा पडुच्च कतमकतमधव सामइयं।**
**एगपुरिसादितो कतमकतं णाणाणरादीहिं ॥४१०७॥**

**दव्वातिचतुक्कं वा**। द्रव्य-क्षेत्र-काल-भावान् वा प्रतीत्य कृताकृतम्। तत्र द्रव्यतः, एवं क्षेत्र-काल-भावैः पूर्ववर्णितवत्। एवं मूलगाथायां कृताकृतमिति द्वारं व्याख्यातम् ॥४१०७॥

अथ केन कृतम्? इति द्वारमुच्यते—

**केण [२७०-प्र०] कतं ति य ववहारतो जिणिन्देण गणधरेहिं च।**
**तस्सामिणा तु णिच्छयणयस्स तत्तो जतो णण्णं ॥४१०८॥**

---

१ बकारादिरपि श्यामलशब्दः—"कृष्णे तु स्याम-श्यामलौ"—शब्दरत्ना० षष्ठकाण्ड श्लो० १८।

केण कतं ति य इत्यादि । सर्वमेव वचनं व्यवहार-निश्चयात्मकमिति व्यवहारतो जिनेन्द्रैर्गु(ग)णधरैश्च कृतम्। निश्चयतस्तु तत्स्वामिनैव कृतम्, यतस्तस्मात् स्वामिनस्तदनन्यदिति ॥४१०८॥

णणु णिग्गमे गतं चिय केण कतं तं ति का पुणो पुच्छा ?
भण्णति स बज्झकत्ता इधंतरंगो विसेसेणं ॥४१०९॥

णणु णिग्गमे गतं चिय इत्यादि । उपोद्घाते निर्गमे गतमेवेदम् इह पुनरुक्तं 'केन कृतमिति' ? भण्यते आचार्येण, अत्र निर्गमे उपदेष्टा भगवान् गणधराश्च बाह्यकर्त्तारः, इह पुनः सूत्रस्पर्शेऽन्तरङ्गकर्ता–प्रतिपुरुषम् 'सामायिकानुष्ठाता' इत्ययं विशेषः ॥४१०९॥

अधवा सतंतकत्ता तत्थेह पयोज्जकारगोऽभिमतो ।
अधवेह सव्वकारगपरिणामाणण्णरूवो त्ति ॥४११०॥ दारं ॥

अधवा सतंतकत्ता इत्यादि । अथवाऽन्योऽपि विशेषोऽत्र–निर्गमे स्वतन्त्रः कर्ता स्वयमाप्तः, स्वयंबुद्धत्वात् । इह पुनस्तदुपदेशप्रेरितः प्रयोज्यकर्त्ताऽभिमतः । अथवाऽयं निश्चयतः सामायिकपरिणामस्वामी सर्वकारकपरिणामानन्यरूप इति सर्वसंग्रही कर्ताऽभिहित एवम्। 'केण कयं' द्वितीयं द्वारम् ॥४११०॥

अथ तृतीयं द्वारं 'केसु कीरति' इत्युच्यते--

दव्वेसु [4]केसु कीरति सामइयं णेगमो मणुण्णेसुं ।
सयणातिएसु भासति मणुण्णपरिणामकारणतो ॥४१११॥
णेगंतेण मणुण्णं मणुण्णपरिणामकारणं दव्वं ।
वभियारातो सेसा बेन्ति ततो सव्वदव्वेसु ॥४११२॥

दव्वेसु केसु इत्यादि, णेगंतेणेत्यादि गाथाद्वयं नयप्रतिभामे(गे)न कथ्यते–नैगमनयो भाए(ष)ते मनोज्ञपरिणामकारणत्वात् मनोज्ञेष्वेव शयनादिद्रव्येष्विति । शेषनयाः परिणामविशेषात् कस्यचित् किञ्चिन्मनोज्ञमिति व्यभिचारात् सर्वद्रव्येषु स्थितस्य क्रियते यत्र मनोज्ञः परिणाम इति ॥४१११–१२॥

णणु भणितमुवग्घाते केसु [5]त्ति इधं कतो पुणो पुच्छा ।
केसु त्ति तत्थ विसयो इध केसु ठितस्स तल्लाभो ॥४११३॥
तो किध सव्वद्दव्वावत्थाणं जातिमेत्तवयणातो ।
धम्मातिसव्वद्दव्वाहारो सव्वो ज[२७०–द्वि०]तोऽवस्सं ॥४११४॥

१ सामायिकपरिणामस्वामिना । २ क॰ हे । ३ °सेसोऽयं को । ४ कीस त ।
५ °मुत्तीहिं त ।

णणु भणितमुवग्घाते इत्यादि, तो किमेत्यादि गाथाद्वयम् । ततो(त उ)-पोद्घाते केषु द्रव्येषु विषयभूतेषु तदुम(प)क्रान्ते ? इह पुनः केषु द्रव्येषु स्थितस्य तल्लोऽस्य भ इति विशेषः । एवमपि सर्वद्रव्येष्ववस्थानं कथम् ? उच्यते, जातिमात्रत्वात् । यस्मात् सर्वस्य आधेयस्य धर्मादीनि सर्वद्रव्याण्याधारः, सर्वत्र तेषां सम्भवित्वात् ॥४११३-१४॥

**विसयो व उवग्घाते केसु त्तीयं स एव हेतु त्ति ।**
**सद्धेयणेयकिरियाणिबन्धणं जेण सामइयं ॥४११५॥**

**विसयो व उवग्घाते** इत्यादि । अथवोपोद्घाते सर्वद्रव्याणि विषयः सामायिकस्य, इह तान्येव सर्वद्रव्याणि सामायिकस्य हेतुः, श्रद्धेयज्ञेयक्रियानिबन्धनत्वात् ।।४११५॥

**अथवा कताकतातिसु कज्जं केणं कतं त्ति कत्त त्ति ।**
**केसु त्ति करणभावो ततियत्थे सत्तमि कातुं ॥४११६॥**

**अधवा कताकता०** इत्यादि । अथवाऽन्यथा पुनरुक्तपरिहारः—कृताकृतादिगाथायां कृतमकृतं वा सामायिकं कार्यं कर्म, कर्तुरीप्सिततमत्वात् । केन कृतमिति ? कर्तृप्रश्नः । केषु द्रव्येष्विति साधकतमप्रश्नः । प्राकृते तृतीयाबहुवचनं सप्तमीबहुवचनतुल्यम् तृतीया(यां) सप्तमी(मीं) कृत्वा निर्देशः । केष्विति द्वारं गतम् ॥४११६॥

अथ कदा सामायिकमिति कालविशेषप्रश्नः, कदा असौ सामायिकस्य कारक इष्यते ? तत्र नयमार्गणायां नयतः—

**उद्दिट्ठे च्चिय णेगमणयस्स कत्ताऽणहिज्जमाणो वि ।**
**जं कारणमुद्देसो तम्मि य कज्जोवयारो त्ति ॥४११७॥**

**उद्दिट्ठे च्चिय णेगमणयस्स** इत्यादि । नैगमनयस्य सामान्यग्राहिणः उद्दिट्ठ(ष्ट)मात्रे सामायिके गुरुणा शिष्योऽनधीयानोऽपि तत्क्रियाननुष्ठायी सन् सामायिकस्य कर्ता वनगमनप्रस्थितप्रस्थककर्तृवत् । यस्मादुद्देशोऽपि तस्य कारणम्, सामायिकस्य तस्मिन् स्वकरणे कार्योपचारः ॥४११७॥

**संगह-ववहाराणं पच्चासण्णतरकारणत्तणतो ।**
**उद्दिट्ठम्मि तदत्थं गुरुपामूले समासीणो ॥४११८॥**

**संगह-ववहारा०** इत्यादि । संग्रह-व्यवहारयोः प्रत्यासन्नतरकारणे उद्देशानन्तरं वाचानाप्रार्थनाय गुरुपादमूलावस्थाने[1] [समासीनः शिष्यः] सामायिकस्य कर्त्ता ॥४११८॥

**उज्जुसुतस्स पढंतो तं कुणमाणो वं णिरुवयोगो वि ।**
**आसण्णासाधारणकारणतो सद्द-किरियाणं ॥४११९॥**

**उज्जुसुतस्स पढंतो** इत्यादि । उद्देशानन्तरं गुरुपादमूले समाश्रितः सामायिकं पठितुमारब्धः कर्त्ता, सामायिकक्रियां वा प्रतिपद्यमानः तदुपयोगरहितोऽपि कर्त्ता, यस्मात् सामायिकार्थस्य सामायिकशब्दक्रिया असाधारणं कारणम् असाधारणकारणेन च व्यपदेशो न युक्तः[2] ॥४११९॥

**सामाइयोवयुत्तो कत्ता सद्दकिरियावियुत्तो वि ।**
**सद्दातीण मंणुण्णो[3] परिणामो जेण सामइयं ॥४१२०॥**

**सामाइयोवयुत्तो** इत्यादि । त्रयाणां शब्दादीनां नयानां शब्दक्रियावियुक्तोऽपि सामायिकोपयुक्त एव कर्त्ता, मनोज्ञतया परिणामरूपत्वात् ॥४१२०॥

सामायिकस्य कदा कारक इति मतं नयतः—नयः(य)प्रपञ्च[तः] इत्यर्थः । अथवा कदा कारकः ? इति एतद् द्वारं गतम् ।[4] नयतद्वा(तो वा) इति द्वारान्तरम्, तदर्थमिय गाथा—

**कत्ता णयतोऽभिहितो अधवा णयनो त्ति णीतितो णेयो ।**
**सामाइयहेतुपयोज्जकारओ सो णयो य इमो ॥४१२१॥**

**कत्ता णयतोऽभिहितो** इत्यादिद्वारान्तरं नयत इति । नयः नीतिविशेषो घा(वा) नयः—सामायिकहेतुकर्त्ता प्रयोज्यकर्त्तेत्यर्थः ॥४१२१॥

स च नयो(या) अष्टप्रकारोऽयमुच्यते—

**आलोयणा य विणए [२९१–प्र०] खेत्तदिसाहिग्गहे य काले य ।**
**रिक्खगुणसंपता वि य अभिवाहारे य अट्ठमए[6] ॥७२६॥४१२२॥**

---

१ "समासीनः शिष्यः" हे० मु० वृ० पृ० १२९० गा० ३३९२ । २ वि त । ३ अपि तु युक्त एव । द्रष्टव्यमत्र हे० मु० वृ० पृ० १२९१ गा० ३३९३विवेचनम् । ४ मणु० को हे । ५ नीत्या । ६ एतां गाथां 'द्वारगाथा' इत्येवं निर्दिशति–कोट्या० मु० वृ० पृ० ९४० गा० ४१३९ । "इति निर्युक्तिगाथासंक्षेपार्थः" इति निर्दिश्य एतां गाथां निर्युक्तिगतां मन्यते मलधारि० हेम० मु० वृ० पृ० १२९१ गा० ३३९६ ।

**आलोयणा य** इत्यादि । आङ् आभिमुख्ये. 'लोचृ दर्शने' । आभिमुख्येन गुरोरात्मदोषप्रकाशनमालोचना ॥४१२२॥

**सामाइयत्थमुवसंपता गिहत्थस्स होज्ज जतिणो व ।**
**उभयस्स पयुत्तालोयणस्स सामाइयं देज्जा ॥४१२३॥**

**आलोइतम्मि दिक्खारुहस्स गिहिणो चरित्तसामइयं ।**
**बालातिदोसरहितस्स देज्ज णियमो ण सेसाणं ॥४१२४॥**

**सामाइयत्थमित्यादि** । सामायिकप्रतिपत्त्यर्थं गृहस्थस्य पा(बा)लादिदोषरहितस्याजुगुप्सितस्य दीक्षार्हस्य प्रयुक्तालोचनस्य योग्यतावधारणानन्तरं सामायिकं दद्यात्, 'न शेषाणाम्' प्रतिषिद्धदीक्षाणाम् ॥४१२३--२४॥

एवं तावत् गृहस्थस्याकृतसामायिकस्य सामायिकार्थमुपसंपद युक्ता । अथ यतेः कृतसामायिकस्य निष्पन्नार्थत्वात् कथं सामायिकार्थमालोचना भवेदिति ? तदर्थमुच्यते—

**सामाइयत्थसवणोवसंपता साधुणो हवेज्जाहि ।**
**वाघातमेस्सकालं व पति सुतत्थं वै होज्जाहि ॥४१२५॥**

**सामाइयत्थसवणोवसंपता** । सामायिकं शब्दः, तदर्थः, तदुभयं च । तत्र यते(:) शब्दमात्रेणाधीतसामायिकस्य तदर्थश्रवणार्थमालोचनाप्रयोगो भवेत् । मन्दग्लानादि-व्यन्तराधिष्ठानादिव्याघातं वा प्रतीत्य विस्मृतग्रन्थस्य श्रुतार्थमप्यालोचनाभावात् । एष्यत्कालं वा दुःषमात्त(र्त)मालोक्य "अनागतामर्शनं सूत्रम्" [ ] इति असमाप्तसामायिकसूत्रा असमाप्तसामायिकसूत्रा अधिपतयै इति तां प्रति श्रुतार्थमपि भवेत् ॥४१२५॥

**सव्वं च बारसंगं सुतसामइयं पि तदुभयत्थम्पि ।**
**होज्जोऽऽलोइयभावस्स देज्ज सुत्तं तदत्थं वा ॥४१२६॥**

**सव्वं च बारसंगं** इत्यादि । पूर्वमुद्देशकालेऽपि सूत्रेणार्थेन तदुभयेन सर्वनयैः सर्वानुयोगद्वारैः हेतुकारणपरिवाराकारैरनन्तैः पर्यायैरनन्तैर्गमैर्दृष्टिवादविदः सामा-

१ °मेस° त । २ पि त । ३ अतिशयताख्यापनाय एतस्य पदस्य द्विरुक्तिः । तुलनीयम्-मलधा० हे० वृ० मु०पृ० १२९२ गा० ३३९९ विवरणम् । ४ अधिपतयः-आचार्या भविष्यन्ति इति वाक्ययोजना । ५ वि त । ६ ति हे । वा त ।

यिकमुद्दिष्टवन्तः । सम्प्रति क्षमाश्रमणानां हस्तेन सूत्रेणार्थेन तदुभयेनेति असमाप्तं सामायिकं सर्वस्यापि यतेः, अतस्तदुभयार्थमप्यालोचनं यतेरिति न विरोधः ॥४१२६॥

आलोचनानन्तरं विनयद्वारम्, तदर्थं गाथाकुलकम्—

आलोयणसुद्धस्स वि देज्ज विणीतस्स णाविणीतस्स ।
ण हि दिज्जति आहरणं पलियत्तितकण्णहत्थस्स ॥४१२७॥

अणुरत्तो भत्तिगतो अमुइ अणुअत्तओ विसेसण्णू ।
उज्जुत्ते अपरितंतो इच्छितमत्थं लहति साधू ॥४१२८[3]॥

विणयवयो य वि कतमंगलस्स [२७१-द्वि०] तदविग्घपारगमणाय ।
देज्जसु कतोवयोगो । दारं । खेत्तादिसु सुप्पसत्थेसु ॥४१२९॥

उच्छुवणे सालिवणे पउमसरे कुसुमिते व वणसंडे ।
गंभीर साणुणाते पदाहिणजले जिणघरे वा ॥४१३०॥

देज्ज ण तु भग्ग-झामित-सुसाण-सुण्णाऽमणुण्णगेहेसु ।
छारंगार-कयारामेज्झादीदव्वदुट्ठे वा ॥४१३१॥

पुव्वाभिमुहो उत्तरमुहो व्व देज्जाधवा पडिच्छेज्ज ।
जाए जिणातयो वा दिसाय जिणचेतियाइं व ॥४१३२॥

चाउद्दसि पण्णरसिं च वज्जए अट्ठमिं च णवमिं च ।
छट्ठिं चाउत्थि बारसिं च सेसासु देज्जासि ॥४१३३॥ दारं ।

मयसिर अद्दा पुस्सो तिण्णि य पुव्वा य मूलमस्सेसा ।
हत्थो चित्ता य तधा विद्धिकराणि णाणस्स ॥४१३४॥ दारं ।

संझागतं रविगतं विड्डेरं सग्गहं विलंबिं च ।
राहुहतं गहभिण्णं च वज्जए सत्त णक्खत्ते ॥४१३५॥ दारं ।

---

१ °अत्ति° त । २ °त्तो त । ३ ४१२८ गाथातः प्रारभ्य ४१३७ गाथापर्यन्तम् एता दश गाथा निर्युक्तिरूपा इति मत्वा स्थूलाक्षरैर्मुद्रितवान् मूलगाथामुद्रणे विशेषावश्यकमलधारि-वृत्तिसंपादकः परन्तु एतासां निर्युक्तिगाथात्वे वृत्तिकारो मलधा० हे० किमपि न सूचितवान्–मु० वृ० पृ० १२९३–१२९४ गा० ३४०२–३४११ । ४ °मसा° को हे । ५ °कयवरा° को । ६ °सु को हे । ७ °इडेरं को हे त । ८ वा वि° हे । ९ °बं को हे त ।

**पियधम्मो दढधम्मो संविग्गोऽवज्जभीरु असढो य ।**
**[२७२-प्र०] खंतो दंतो गुत्तो थिरव्वय जिइंदियो उज्जू ॥४१३६॥**
**असढो तुल्लसमाणो समितो तध साधुसंगइरतो य ।**
**गुणसंपतोववेतो जोग्गो सेसा अजोगा तु ॥४१३७॥ दारं।**

**आलोयणमुद्धः** इत्यादि । उत्तानार्थम् विनयानन्तरं कृतमङ्गलोपचारप्रशस्तक्षेत्रे प्रशस्तदिङ्मुखस्य प्रशस्ते काले पञ्चम्यादौ प्रशस्तनक्षत्रे मृगसि(शि)रः-पुष्यादौ सर्वाण्यप्रशस्तानि वर्जयित्वा गुणसम्पन्नस्य प्रियधर्मादिगुणसम्पत् । ४१२७-३७॥

अभिव्याहारो नामाष्टमो नयः—

**णेयोऽभिव्वाहारोऽभिव्वाहरणमहमस्स साधुस्स ।**
**इदमुद्दिसामि सुत्तत्थोभयतो कालियसुतम्मि ॥४१३८॥**

**णेयोऽभिव्वाहारो** इत्यादि । ज्ञेयोऽभिव्याहारः, नेतव्यो वा नीतिविशेषेण तो(ने)यः अभिव्याहारः अभ(भि)व्याहरणं वचनैः आचार्य-शिष्ययोः । तत्राचार्य वचनमभिव्याहारः—अहम् अस्य साधोः इदमङ्गम्, अध्ययनम्, उद्देशं वा **'उद्दिसामि'** वाचयामीत्यर्थः । आप्तोपदेशपारम्पर्यख्यापनार्थं क्षमाश्रमणानां हस्तेन—न स्वोत्प्रेक्षया—सूत्रतोऽर्थतः तदुभयतो वा अस्मिन् कालिकश्रुते ॥४१३८॥

अथोत्काले दृष्टिवादे कथमिति ? तदुच्यते—

**दव्वगुणपज्जवेहि य भूतावातम्मि गुरुसमादिट्ठे ।**
**वेतुद्दिट्ठमितं मे इच्छामऽणुसासणं से[४] से ॥४१३९॥ दारं ।**

**दव्व-गुण-पज्जवेहि य** । दृष्टिवादे भूता(त)वादे इदम् **'उद्दिसामि'** सूत्रतोऽर्थतः द्रव्य-गुण-पर्यायैः अनन्तगम-पर्यायैरिति । एवं गुरुणा समादिष्टेऽभिव्याहारे शिष्याभिव्याहारः—ब्रवीति शिष्यः-उद्दिष्टमिदं मम, इच्छाम्यनुशासनं क्रियमाणं पूज्यैरिति । एष(व)मभिव्याहारद्वारमुत्कृष्टसंनीतिविशेषनयेन गतम् ॥४१३९॥

अथ करणस्य निरूपितलक्षणस्य विधानकरणद्वारेण प्रश्नः—करणं कइविहम् ? इति प्रश्नस्य निर्वचनम्—

**करणं तव्वावारो गुरु-सीसाणं चतुव्विधं तं च ।**
**उद्देसो वायणता तधा समुद्देसणमणुण्णं ॥४१४०॥**

**करणं तव्वावारो** इत्यादि । गुरु-शिष्याणां सामायिकक्रियाव्यापारणं करणम् । तच्चतुर्विधम्—उद्देशः, वाचना, समुद्देशः, अनुज्ञा चेति । गुरोर्व्यापारः उद्दिष्टमिदं

१ गुं को हे त । २ °वर्वी° हे । ३ गुणदव्वप° हे । ४ सीसो को हे त । ५ °णुन्ना को हे त ।

पूज्यैः वाचितम्, समुद्दिष्टम् अनुज्ञातं च मे । इच्छाम्यनुशासनमिति शिष्याभिव्याहारश्चतुर्थैव । अत्रानुशासनमाशीर्वादप्रयोगः आचार्यस्य—योगं कुरु, स्थिरपरिजितं[1] सम्यग् धा(धा)रय, अनुप्र[वाच]य अन्यानिति ॥ ४१४०॥

**णणु भणितमणेगविधं पुव्वं करणमिह किं पुणो गहणं ।**

**तं पुव्वगहितकरणं इदमिह दाणग्गहणकाले[2] ॥४१४१॥**

**णणु भणित**मित्यादि । पूर्वमनेकविधं नामादिकरणमभिहितम्, इह पुनः किमिति प्रश्नः, उच्यते, तत् पूर्वगृहं तस्य करणमनेकविधमुक्तम्, इह पुनरस्मिन् गुरु-शिष्यदानग्रहणे काले चतुर्विधं करणमिति ॥४१४१॥

**पुव्वमविसेसितं वा इध गुरुसीसकिरियाविसेसातो ।**

**करणावसरो वायं णेगंतत्थं तु वच्चासो ॥४१४२॥ दारं ।**

**पुव्वमविसेसितं वा** । पूर्वं वा करणमविशे(षे)णोक्तम्, इह गुरु-शिष्यक्रिया-विशेषाद्विशेषितमिति न पुनरुक्तम् । अथवा अयमेव करणस्यावसरः । पूर्वत्रानेकान्त-द्योतनार्थं व्यत्यासः कृत इति । विचित्रा सूत्रस्य कृतिरिति ॥४१४२॥

कथमिति द्वारमिदानीम्—

**लब्भति कधं ति भणिते सुतसामइयं जधा णमोक्कारो ।**

**सेसाइं तदाव[२७२-द्वि०]रणक्खयतोसमओऽहवोभयतो ॥४१४३॥**

**लब्भति कधं ति भणिते** इत्यादि । श्रुतसामायिकस्य तावदतिदेशो नमस्कारो यथोपलभ्यते तथा तदपि, श्रुतज्ञानात्मकत्वात् । शेषाणि सम्यक्त्व-चरितं[चरिता]-चारित्रसामायिकानि प्रतिस्वमावरणक्षयात् उपग(श)मात् अथवोभयस्मात् क्षयोपशमा-दित्यर्थः ॥४१४३॥

**णणु भणितमुवक्कमता खयोवसमतो पुणो युवग्घाते ।**

**लब्भति कधं ति भणितं इधं कधं का पुणो पुच्छा ॥४१४४॥**

**णणु भणित**मित्यादि । ननु उपक्रमद्वारेऽभिहितमेतत् क्षयोपशमा(द्) ज्ञा(जा)यते पुनश्चा(श्चो)पोद्घातेऽभिहितम् कथं लभ्यत इति तत्रोक्तम् इह किमर्थं प्रश्न इति पुनरुक्तता । उच्यते, त्रयमप्येतदपुनरुक्तम् ॥४१४४॥

कुतः ? यस्मात्—

---

१परि समन्तात् सर्वप्रकारैः जितम् परिजितम्—परावर्तनं कुर्वतः यत् क्रमेण उत्क्रमेण वा समागच्छति-इति अनुयोगद्वारवृत्तिः पृ० १५ द्वि०। २ °ले त । ३ द्रष्टव्यम् विशेषा० वृ०मु० पृ० १२९६, ३४१५ गाथाविवरणम् । ४ त° त । ५ तुलनीयम्—"शेषाणि तु सम्यक्त्व-देशविरति—सर्वविरतिसामायिकानि" म० हे० वृ० मु० पृ० १२९७ गा० ३४१७ ।

**भणिते खयोवसमतो स एव लब्भति कधं उवग्घाते ।**
**सो चेव खयोवसमो इध केसिं होज्ज कम्माणं ॥४१४५॥**

भणिते खयोवसमतो इत्यादि । उपक्रमे क्षयोपशमात् सामायिकं लभ्यते इत्युक्तम्, उपोद्घाते स एव क्षयोपशमस्तत्कारणभूतः कथं लभ्यत इति प्रश्नः । इह पुनर्विशेषिततरः प्रश्नः—केषां पुनः कर्मणां स क्षयोपशम इति प्रत्यासन्नतरकारणप्रश्न इत्यपुनरुक्तम् ॥४१४५॥

अथेदानीं कृतादिद्वारगाथायां केन कृतमिति द्वारे तृतीया कर्तृ-करणयोः कारकयोः, तत्र सन्देहो मा भूदिति 'कर्तरि तृतीयेयम्' इति ज्ञापनार्थं गाथा—

**को कारओ करेन्तो किं कम्मं जं तु कीरते तेणं ।**
**किं कारओ अ करणं च होति अण्णं अणण्णं ते ॥४१४६ ॥**
**को कारओ त्ति भणिते होति करेन्तो त्ति भण्णते गुरुणा ।**
**किं कम्मं ति य भणिते भण्णति जं कीरते तेणं ॥४१४७॥**

**को कारओ** इत्यादि । कर्तृ-कर्मविवेकार्थं प्रश्नः । कः कारकः ? आह—कुर्वन् कारकः स्वतन्त्र इति कृत्वा । अथ तस्य कर्तुः किं कर्म ? यत् तेन क्रियते कर्त्रा ॥४१४६-४७॥

अत्र आचार्यदेशीयः कश्चिद् उभावपि चोदकाचार्यौ पर्यनुयुङ्क्ते—किमिदमस्थाने चोदितमपि पुनश्चोद्यते—

**केण कतं ति य कत्ता णणु भणितो तत्थ का पुणो पुच्छा ।**
**तव्विवरणं चिय इमं केणं ति व होज्ज मा करणं ॥४१४८॥**

**केण कतं ति य कत्ता** इत्यादि । केन कृतमिति यत् प्रान्(क्) चोदितं तत्र करणतृतीयाशङ्का मा भूदित्येवमर्थं तस्यैव विवरणम्—कर्त्तरि तृतीया—कारक(ः) कुर्वन्नुच्यते इति ॥४१४८॥

अथवान्यथैव प्रश्नस्योत्थानम्—किमनेन स्थूलेन चोदितेन ? किन्तु अन्य एव अत्राभिप्रायस्तत्प्रदर्शनार्थं गाथा—

**अधवा कताकतादिसु कत्तारं कम्मकरणभावं च ।**
**सामाइयस्स सोतुं कुलाल-घड-डंडयाणं वा ॥४१४९॥**

**अधवा कताकतादिसु** । कृताकृतादिद्वारगाथायां केन कृतमिति कर्त्ता कर्म-करणे व(च) तृ(त्रि)तयमुपप्लवते, सर्वत्र घटादौ कार्ये प्रविभागेन कुलालः कर्त्ता, घटः कर्म—कार्यम्, दण्डादीनि करणानि त्रीण्यपि वस्तूनि भिन्नानि ॥४१४९॥

१ विशेषावश्यकभाष्यमूलगाथामुद्रणे इयं गाथा तत्संपादकेन निर्युक्तिगता मता परन्तु अस्या गाथाया वृत्तौ वृत्तिकारो मलधारी सूरिर्न किमपि सूचितवान् ।

**पविभागमपेच्छंतो पुच्छति को कारओ करेन्तो य ।**
**किं कम्मं जं कीरति तेण 'तु' सद्देण करणं च ॥४१५०॥**

**पविभागमपेच्छंतो** इत्यादि । इह तु सामायिके कर्मणि ज्ञान-दर्शन-चारित्रात्मके कर्तुरात्मनः करणेभ्यश्चोद्देश-[वाचना]-समुद्देशानुज्ञाप्रकारेभ्यः आत्मरूपत्वादनन्यत्व-दर्शने एकमेते(वे)दं द्रव्य-गुण-पर्यायस्वभावमात्रं द्रव्यम् । कोऽत्र कारकः कुलाल-स्थानीयः ? आहाचार्यः प्रतिवचना(न)म्–**करेन्तो** [४१४६] । नन्वयमात्मा कुर्वन् एवं तावद् द्रव्यं निर्द्धारितम् । अथैवंसति तस्माद्भेदेन घटस्थानीयं किं कर्म ? आह आचार्यः–यत्तु क्रियते तेन, क्रियते च सामायिकं गुणः । जं तु कीरते तेणं [४१४६] । अस्यां गाथायां 'तु'शब्दः करणप्रश्नसंग्रहार्थः । यथा कर्म पृष्टम् एवं किं करणम् ? आचार्य आह–उद्देशादि चतुर्विधं करणम् ॥४१५०॥

एवमाचार्येणोक्ते चोदकः आचार्यदेशीयो वा आह–किमेतत् त्रितयं मया न ज्ञातम् ? केनेति प्रश्नादेवैतत् सुज्ञातम् किन्तु यो ममाभिप्रायः स न ज्ञातस्तं प्रकाशयन्नाह––

**किं कारओ य क[२७३-प्र०]रणं च होति कम्मं च ते 'च' सद्दातो ।**
**अण्णमणण्णं भण्णति किं चाह ण सव्वधा जुत्तं ॥४१५१॥**

**किं कारओ य करणं च** । किं यत् कारकः आत्मा, यद् उद्देशादि करणम्, यच्च सामायिकं कर्म, एतत्–'च'शब्दसंगृहीतम्–त्रितयं किं परस्परतः कुलाल-घट-दण्डादिवदन्यत् ? आहोस्विद् 'आत्मानमात्मना आत्मा पश्यति' इति परस्परतो नान्यत् ? इति एवमर्थं मया चोदितमपि चोदितम्–कः कारकः ? इति । एवमभिप्राये चोदकेन प्रकाशिते सति आचार्य आह–किंचातः ? चोदकं प्रत्याह–सर्वथा न युक्तम् ॥४१५१॥

कथमिति ? तत् प्रदर्शयति—

**अण्णत्ते समभावाभावातो तप्पयोयणाभावो ।**
**पावति मिच्छस्स व से सम्मामिच्छाऽविसेसोऽयं ॥४१५२॥**

**अण्णत्ते** इत्यादि । आत्म-सामायिकादीनां कर्तृ-कर्म-करणानामात्मनोऽन्यत्वे समभावः सामायिकमिति ? तस्मात् समभावादात्म(त्मा) भिन्न इति समत्वानापत्ते-रात्मनः तत्प्रयोजनाभावः, समभावादन्यत्वात्, मिथ्यादृष्टेरिव । अपि च, सम्यग्-दृष्टिर्मिथ्यादृष्टिश्चात्मा विशेष्य नोच्यते, उभयधर्मानात्मकत्वात्, तद्व्यपदेशाभावादा-काशवत् ॥४१५२॥

**अधव मती भिण्णेण वि धणेण सधणोऽधणो[1] त्ति ववदेसो ।**
**सधणो य धणाभागी जध तध सामाइयस्सामी ॥४१५३॥**

**अधव मती भिण्णेण वि** इत्यादि । भिन्नेनापि हि धनेन सधनो निर्धन इति व्यपदेशो दृष्टः सधनश्च धनभागी, एवं भिन्नेनापि सामायिकेन गुणेन तद्वानात्मा सामायिकस्वामी सम्यग्दृष्टयादिर्भविष्यति । एवं पूर्वप्रमाणमनैकान्तिकमिति ख्यापितं भवति ॥४१५३॥

यत्र हि यो व्यपदेशः सधनादिर्दृष्टः तत्रापि तद्धर्मानात्मकत्वं विपक्षे दृष्टमिति कृत्वा एतदनैकान्तिकत्वावर्त्तनार्थं सविशेषणहेतुत्वं ख्याप्यते—

**तं ण जतो जीवगुणो सामइयं तेण विफलता तस्स ।**
**अण्णत्तणतो जुत्ता परसामइयस्स वाऽफलता ॥४१५४॥**

**तं ण जतो** इत्यादि । 'तद्' इत्यनैकान्तिकत्वं परामृशति, तन्न, यस्माज्जीवस्य गुण इति सामायिकमभ्युपगम्यते, तस्मादन्यत्वं प्रतिज्ञायते. तेन जीवगुणत्वे सतीति विशेषणं कृत्वा । तदनात्मकत्वादिति हेतुः, स चाकाशे सपक्षेऽस्ति, विपक्षे च साधनादौ न विद्यते । तस्मादनैकान्तिकाभाव इति शुद्धमेव प्रमाणम् । ततश्च तत् सामायिकं तस्यात्मनो विफलम् , ततोऽन्यत्वात् ; परेम(पर)सामायिकवत् ॥४१५४॥

**जति भिण्णं तब्भावे वि तो तओ तस्स भावरहितो त्ति ।**
**अण्णाणि च्चिय णिच्चं अन्धो व्व समं[3] पि दीवेणं ॥४१५५॥**

**जति भिण्णं** इत्यादि । यदि भिन्नमात्र(त्म)सामायिकं श्रुतादिचतुरात्मकम् , ततस्तद्ध(द्भा)वेऽपि बाह्यधनवत् तत्स्वभावरहित इति अज्ञान एव सर्वदा प्राप्तः, ज्ञान प्रकाशादत्यन्तभिन्नत्वात्, गृहीतदीपान्धवत् चक्षुः प्रतीत्य प्रकाशकार्याकरणात् रूपविज्ञानरहितः । इष्यते च 'आत्मा ज्ञानी' इत्यभ्युपगमविरोधोऽत्यन्ते(न्त)भिन्नत्वपक्षे ॥४१५५॥

एत(द्)दोषपरिहारा[य] यद्येकत्वमभ्युपगम्यते तथापि दोषा इति दर्शयति—

**एगत्ते तण्णासे णासो जीवस्स संभवे भवणं ।**
**कारकसंकरदोसो तदेगताकप्पणा वा वि ॥४१५६॥**

**एगत्ते तण्णासे** इत्यादि । एकत्वे गुण-गुणिनोः ज्ञानस्य विनाशे तदेकत्वादात्मनोऽपि विनाशः प्राप्नोति, ततश्च अनित्य आत्मा पूर्वरूपप्रच्युतेर्विक्रियमाणत्वात् , तत्सम्भवे वा आत्मनोऽप्युत्पत्ति[र्ज्ञा]नादेकत्वा[त्] ज्ञानस्वरूपवत् । किंच, यत् कर्म तत् करणं कर्त्ता च, यत् करणं तदपि कर्म कर्त्ता च, यः कर्त्ता तत् कर्म करणं वा[च]

1 °णो त्ति होई वव० हे त । 2 तुलनीयम् कोट्या० वृ० मु० पृ० ९४६, ४१७१ गाथाया विवरणम् । 3 °मं पईवे को हे त ।

विशेषणप्राप्तमेकत्वात् तदेकस्वरूपवत् । अनिष्टं चैतत् प्रतिविशिष्टलक्षणलक्षितत्वाद् कर्मादीनां बुद्धिवत् । कारकसंकरावलक्षणप्रणयनासंभव इत्यभ्युपेता बाधादिदोषाः । अथैवं नेष्यते, अतस्तदेकता कल्पनामात्रमेव, न पारमार्थिकता ॥४१५६॥

अत्र सिद्धान्तवचनम्—

**आता हु कारओ मे सामाइयकम्मकरणमाता य ।**
**तम्हा आता सामाइयं च परिणामतो एक्कं ॥४१५७॥**

**आता हु कारओ मे** इत्यादि । यत् त्वया पृष्टम्—**किं कारओ य करणं च होति अण्णं अणण्णं** ने ? [गा० ४१५१] । अत्राचार्यश्चोदकेन युष्मच्छब्दप्रयोगात् प्रत्यक्ष इव पर्यनुयुक्तस्तवेति । ततस्तदनुगुणमस्मच्छब्दमात्मनि नियम्य सिद्धान्ते आत्मा कारकः सामायिकस्य कर्मणः कर्त्ता, सामायिकं च कर्मभूतम् आत्मैव, करणमपि योगात्मकमात्मैव, न ततो व्यतिरिक्तमन्यपरिणामजातम् । तस्मादस्मत्सिद्धान्ते आत्मा सः सामायिकं च(क)रणं च योगास्त्रितयमपि आत्मपरिणामत्वादेकम् ॥४१५७॥

तदुपपत्तिमाचष्टे—

**जं णाणादिमभावं सामइयं जोगमाइ करणं च ।**
**उभयं च सपरिणामो परिणामाणण्णता जं च ॥४१५८॥**

**जं णाणादिसभावं** इत्यादि । ज्ञानादीनि आदिग्रहणात् प्रसिद्धानि ज्ञान-दर्शन-चारित्राणि, तत्स्वभावं चतुर्विधमपि सामायिकम् , करणं च योगात्मकम् , उभयं चैतत् सामायिक-योगाख्यं स्वस्यात्मनः परिणामश्चन्द्रज्योत्स्नावत् । परिणामश्च परिणामिनोऽनन्य इति सिद्धान्ते प्रतीतमेतत् ॥४१५८॥

एतन्निगमनाय गाथा—

**तेणाता सामइयं[२७३-द्वि०]करणं च 'च'सद्दतो ण भिण्णाइं ।**
**णणु भणितमणण्णत्ते तण्णासे जीवणासो त्ति ॥४१५९॥**

**तेणाता सामइयमित्यादि** । 'तेन' इति हेतौ तृतीया । येनायमेवंविध आर्हत आगमस्तेन तस्मादात्मा सामायिकं कर्म, 'च'शब्दात् करणं च, योगा अप्यात्मैव, 'च'शब्दसंगृहीतत्वात् योगानाम् । अर्थत एतान्यभिन्नानीति ब्रुवता शब्दतो भिन्नानि दृष्टान्येव, ततश्च कथञ्चिद्भेदाभेदौ ॥४१५९॥

एवं तदनन्यत्वेऽभ्युपगते ननूक्तं तन्नाशे जीवनाश इति कथं दोषाभावः ? उच्यते—

---

१ ४१५१ गाथायाः भावार्थसूचकं वचनम् ।

**जति तप्पज्जयणासो को दोसो होतु सव्वधा णत्थि ।**
**जं सो उप्पात-व्वय-धुवधम्माणंतपज्जाओ ॥४१६०॥**

**जति तप्पज्जयणासो** इत्यादि । यदुक्तं सामायिकपर्यायनाशे आत्मनोऽपि नाशः प्राप्त इति दोषः कथम् ? आत्मा दा(ह्य)नन्तपर्यायः, तस्यैकपर्यायनाशे यदि तेनात्मना सामायिकरूपेण नाशः शेषपर्यायैरनाशस्तत[:] को दोषः ? सर्वथा नाशे दोषसम्भव इत्याचक्षाण आह—यस्मादसावात्मा उत्पाद-व्यय-ध्रुवधर्मानन्तपर्यायपरिणामः, तस्य केनचित् पर्यायेणोत्पादः, केनचिद् वा(व्य)यः केनचिद्वा अस्ति-मूर्तत्व-चेतनत्वादिना सर्वदा परिणामित्वाद् ध्रुवः ॥४१६०॥

न केवलमेवंस्वरूप आत्मैव किन्तु—

**सव्वं चिय पतिसमयं उप्पज्जति णासते य णिच्चं च ।**
**एवं चेव य सुह-दुक्ख-बन्ध-मोक्खातिसब्भावो ॥४१६१॥**

**सव्वं चिय** इत्यादि । सर्वमेव आत्माऽऽकाशधर्माधर्मपुद्गलप्रकारं वस्तु प्रतिसमयमुत्पद्यते, व्येति, नित्यं च इति बहुशोऽपि भावितम् । एवमेव सर्वप्रधान(ना)भ्युपगतसुख-दुःख-बन्ध-मोक्षादिसद्भावः । आदिग्रहणात् सुख-दुःखानुभाविबद्ध-मुच्यमान-तत्कारणसद्भावे(वो)ऽपीति । यच्चोक्तमेकत्वे कारकसंकरदोष इति, सोऽपि न दोषः, तथा अभ्युपगमात् सिद्धसाधनमित्यर्थः ॥४१६१॥

**एगं चेव य वत्थुं परिणामवसेण कारगंतरता ।**
**पावति तेणादोसो विवक्खया कारगं जं च ॥४१६२॥**

**एगं चेव य वत्थुं** इत्यादि । एकमेव वस्तु परिणामवशान्ना[ना]कार[क]तां प्रतिपद्यते, विवक्षाप्रापिततद्धर्मत्वात्—धनुर्विध्यति, धनुषा विध्यति, धनुषो विध्यतीति धनुषः कर्तृत्वम्, करणत्वम्, अपादानत्वं चाविरुद्धं लोके । "विवक्षातः कारकाणि भवन्ति" [ ] इति ॥४१६२॥

यथा च धनुरादिषु लोकप्रसिद्ध्या नानाकारकत्वम् एवं कुम्भादिष्वपीति दर्शयन्नाह—

**कुंभो वि[2] सिज्जमाणो कत्ता कम्मं स एव करणं च ।**
**णाणाकारगभावं लभति जधेगो विवक्खाए ॥४१६३॥**

**कुंभो वि** इत्यादि । कुम्भोऽपि [1]सृज्यमानः कुलालेन कर्त्रा क्रियमाणत्वात् कर्म—कुम्भं करोति कुम्भकारः । स च कुम्भः कर्मरूपः संस्तेनात्म[2]न्य(ना) स्वयंभवनात् कुम्भो

---

१ 'रयं त । २ अत्र 'वि सिज्जमाणो' इत्येवं पदद्वयं मन्यमानः प्रस्तुतवृत्तिकारः 'अपि सृज्यमानः' इत्येवं व्याख्याति । मलधारी सूरिस्तु विसिज्जमाणो' इत्येवम् एकपदं मन्यमानः 'विशीर्यमाणः' इत्येवं व्याख्यातवान्—हे० वृ० मु० पृ० १३०३ गा० ३४३७ । २ "तेन आत्मना स्वयं भवने स्वतन्त्रत्वात्"—को० मु० वृ० पृ०९४७ गा० ४१८० ।

भवतीति स्वभवनक्रियायाः कर्ता सम्पन्नः । स च भवन्नेन्ये(न्नाना)रूपेग भवनीति ऊर्ध्वकुण्डलोष्ठायतवृत्तग्रीवा:(वा)पृथ(थु)कुक्ष्यादिना स्वात्माऽव्यतिरिक्तेन करणेन भवतीति करणत्वमापन्नः । एवं नानाकारकतां यथैक एव कुम्भो लभते तथा सामायिकाघपि कर्म कर्तृत्वं च विवक्षया प्रतिलप्स्यत इति ।'३१६४॥

सर्वस्यैव वस्तुन एवमात्मकत्वात् सुप्रतिपादकत्वं प्रकाशयन् दृष्टान्तान्तरमुपदर्शयति—

**जध वा णाणाणण्णो णाणी णियमोवयोगकालम्मि ।**
**एगो वि तिस्सभावो सामइयं कारको चेवं ॥४१६४॥ दारं ।**

**जध वा णाणाणण्णो** इत्यादि । यथा ज्ञानादनन्यो जीव. ज्ञानी नियो(जो)पयोगकाले यदात्मन्येवोपयुज्यते 'अहमात्मा' इति तदा उपयुज्यमान आत्मा कर्ता, तस्यात्मैव ज्ञेयो विषय इति आत्मा एव कर्म, स चानन्यभूतेन श्रुतज्ञानादिना ज्ञानेन करणेन तमात्मानं जानातीति एकोऽपि अस्मत्पदार्थस्त्रिस्वभाव.- कर्ता, कर्म, करणं चेति स्वभावत्रयम् । एवं सामायिकस्यापि कारको जीवस्त्रिधा प्ररूपणीय इति ॥४१६४॥ करणे इति द्वारं गतम् ॥

अथ 'भदन्त' इति सूत्रस्पर्शनम्—

**भति कल्लाण-सुहत्थो धातू तस्स य भदंतसद्दोऽयं ।**
**स भदंतो कल्लाणो सुहो य कल्लं किलारोग्गं ॥४१६५॥**

**भति कल्लाण-सुहत्थो** इत्यादि । 'भदिः कल्याणे सुखे च' अर्थद्वये धातुः "जॄविशिभ्यां झच्" [पाणि० उणा० तृ० पा० सू० ४१४] औणादिकः प्रत्ययो दृष्टः, तं दृष्ट्वा प्रकृतिरूह्यते । 'भदि कल्याणे' इति अनुनासिकलोपश्चेति तस्यौणादिकविधानाद् 'भदन्त'शब्दोऽयं निष्पन्नो द्रष्टव्यः, भदन्तः कल्याणः सुखश्च । अथ कल्यं वि(कि)मुच्यते ? आरोग्यम् ॥४१६५॥

१ °यओ व° को हे त । २ उणादिप्रकरणे जरन्त-विशन्त-हेमन्तप्रभृतयः शब्दाः साधिताः, तत्र 'भदन्त'शब्दस्तु न साधितः । तथापि एतान् 'जरन्त'प्रभृतिकान् 'अन्त'प्रत्ययान्तान् शब्दान् दृष्ट्वा अयं 'भदन्त'शब्दः तद्वत् साध्यते इति आशयः । ३ "भन्देर्नलोपश्च" "भदन्तः प्रव्रजितः" [पाणि० उणा० तृ० पा० सू० ४१८]

**तं तच्चं णेव्वाणं कारणकज्जोवयारतो वा वि ।**
**तस्साहणमणसद्दो सद्दत्थो अधव गच्चत्थो ॥४१६६॥**

**तं तच्चं णेव्वाणं** इत्यादि । तद् आरोग्यं तत्त्वं परमार्थतो निर्वाणम्, कारण(णे) कार्योपचाराद्वा सम्यग्दर्शनादि । तत् कल्यमणति यः स कल्याणः । 'अण रण' इत्यादि-धातुसमूहः शब्दार्थः–शब्दकरणेऽर्थे–वर्त्तत इत्यर्थः । तस्य कल्यस्य साधनं कल्यस्य अणनं शब्दनं कल्यं कर्म, तत् अणति शब्दयति–"कर्मण्यण्" [३।२।१। पाणि०]–कल्याणः ॥४१६६॥

अथवा 'अण' धातुः–'अण रण वण गतौ' इत्यर्थः, तत्रापि एषा एव रूपसिद्धिः । त(ता)मेव स्फुटतरं गाथया दर्शयति—

**कल्लमणति त्ति गच्छति गमय[२७४-प्र०]ति बुज्झति व बोधयति व त्ति ।**
**भणति भणावेति व जं तो कल्लाणो स चायरिओ ॥४१६७॥**

**कल्लमणति त्ति गच्छति** इत्यादि । विवृत एवार्थः ॥४१६७॥

अथवा कलशब्दोऽन(न्य)स्तद्व्युत्पत्तिः—

**अधवा 'कल'सद्दत्थो संखाणत्थो य तस्स कल्लं ति ।**
**सद्दं संखाणं वा जमण ति तेणं व कल्लाणो ॥४१६८॥**

**अधवा 'कल'सद्दत्थो** इत्यादि । 'कल शब्द-संख्यानयोः' इति धातुः । कलनीयं कल्यम्–शब्दरूपं संख्यानं वा, तद् अणति, तेन वा अणतीति कल्याणः ॥४१६८॥

अथ सुखशब्दव्युत्पत्तिः—

**'सु' पसंसत्थो खाणिंदियाणि सुद्धेन्दियो सुखोऽभिहितो ।**
**वस्सिन्दियो जमुत्तं असुखो अजितिन्दियोऽभिमतो ॥४१६९॥**

**'सु' पसंसत्थो** इत्यादि । 'सु' प्रशंसायां निपातः, खानीन्द्रियाणि, शोभनानि खानि यस्य स सुखः–शुद्धेन्द्रिय इत्यर्थः । शुद्धानि प्रशस्तानि वश्यानीन्द्रियाणि यस्य । एतद्विपरीतः असुखः–अजितेन्द्रिय इत्यर्थः ॥४१६९॥

**सुहमधवा णेव्वाणं तच्चं सेसमुवयारतोऽभिमतं ।**
**तस्साधणं गुरु त्ति य सुहमण्णे पाणसण्ण व्व ॥४१७०॥**

**सुहमधवा णेव्वाणं** । अथवा अन्यथा सुखशब्दः । सुखम् परमार्थतो निर्वाणं तत्त्वम् । शेषं सांसारिकं सुखमिवोपचारतः सुखम् । तस्योभयस्यापि सुखस्य साधनं गुरुराचार्यः, तस्मिन् सुखसाधने गुरौ सुखशब्दः, यथा अन्ने प्राणकारणे प्राणसंज्ञा तद्वदिति ॥४१७०॥

अथवा—

---

१ °भिमओ को हे त ।

जं व सितं खेहिंतोऽणुग्गहरूवं ततो सुहं तं च ।
अभया[1] तिनप्पदाता सुहमिह तब्भत्तिभावातो ॥४१७१॥

जं व सितं खेहिंतो । सुज्झ(प्टु) [अ] इतं स्वेतम् यद्वा सितं खेभ्यः तत् सुखम् अनुग्रहरूपम् । तच्चाह यत् ज्ञानदानादि, तस्य प्रदाता सुखमेव भण्यते, तद्भक्तिभावात् । एवं तावद् 'भदि कल्याणे सुखे च' इति शब्दार्थनिरूपणयाऽनेकप्रकारं भदन्तशब्दो निगमितः(तः) ॥४१७१॥

अथवा प्राकृतशब्दसारूप्याद् नैवायं 'भदन्त'शब्दः किं तर्हि ? 'भजन्त' शब्दोऽयम्, तन्निरूपणाय--

अथवा 'भज सेवाए' तस्स भजंतो त्ति सेवने जम्हा ।
सिवगतिणो सिवमग्गं सेव्वो य जतो तदत्थीणं ॥४१७२॥

अथवा 'भज सेवाए' । 'भज सेवायाम्' इति धातुः । तस्य तथैव 'झच्' प्रत्ययः, कर्मणि (कर्तरि) वा कारके भजतेऽसौ शिवगतिप्रामानिति भजन्तः । अथवा शिवमार्गं भजते अथवा भज्यते सेव्यतेऽसाविति कर्मणि । यस्मादसौ शिवमार्गार्थिनां भव्यसत्त्वानां सेव्योऽसौ गुरुरिति भजन्तः ॥४१७२ ।

अथवा भा-भाजो वा दित्तीए तस्स होति भंतो त्ति ।
भाजंतो वायरिओ सो णाणतवोगुणजुतीए ॥४१७३॥

अथवा [भा-भाजो वा] । दीप्त्या अभिधानमेव(वम्)--भान्तः दीप्तिमान् । 'भ्राज दीप्तौ' इति धातुः, तस्य भ्राजन्तः-तथैव 'झच्'प्रत्ययान्तः--ज्ञान-तपोगुणद्युत्या दीप्यत इति ॥४१७३॥

अथवा भंतोऽवेतो जं मिच्छत्तातिबन्धहेतूतो ।
अधवेसरियादिभगो विज्जति से तेण भगवंतो ॥४१७४॥

अथवा भंतोऽवेतो । अथवा भ्रान्तः 'भ्रमु अनवस्थाने' निष्ठाप्रत्यये भ्रान्तः, अनवस्थितत्वा[त्] मिथ्यादर्शनाऽविरतिप्रमादकषायेषु बन्धहेतुषु--तेभ्यः अपेतत्वाद् भ्रान्तः । अथवा भगवाद्(वान्) भव(भगव)न्तः इति भण्यते । ऐश्वर्यादिषु च भगसंज्ञा शास्त्रेषु प्रसिद्धा ।

ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः ।

---

१ °हवं तं को । २ °याइं तं है । ३ अत्र वृत्तिकारः 'स्वेतम्' इति निर्दिशति, तत्साधनाय सु+आ+इतम् इत्येवं कल्पितम् । मूले तु 'सितं' इत्येव निर्देशः, न तु 'सेतं' । लिपिकारोऽत्र स्वेतं स्वेतं' इत्येवं द्विः निर्दिशति । ४ सु+इतम्--स्वितम् । ५ होइ तस्स है त । ६ 'भगवत्त्वात्' इति आशयः

धर्मस्याथिप्रयत्नस्य षण्णां भग इतीङ्गना ॥ [अमरको० क्षीरस्वामिवृ०पृ० ६] सोऽस्य विद्यते तेन भगवान् ॥४१७४॥

**णेरतियादिभवस्स व अंतो जं तेण सो भवंतो त्ति ।**
**[२७४-द्वि०]अथवा भयस्स अंतो होति भयंतो भयंतो सो ॥४१७५॥**

**णेरतियादि०** । अथवा नैरयिकादिभवस्य संसारस्य अन्तस्तेनाचार्येण क्रियत इति भवान्तकरत्वाद्भवान्तं[2] अथवा भयं त्रासः, तमाचार्यं प्राप्य भयस्यान्तो भवतीति भयान्तः ॥४१७५॥

**णामाति छव्विधं तं भावभयं सत्तधेह लोकादि ।**
**इथलोगजं सभवतो परलोगभयं परभवातो ॥४१७६॥**

**णामाति छव्विधं तमित्यादि** । नाम-स्थापना-द्रव्य-क्षेत्र-काल-भावनिक्षेपाद् षड्विधं भयम्, तत्र पञ्च पूर्ववत्, षष्ठं भावभयं सप्तधा—इहलोकादीनि । आदिग्रहणात् इहलोकभयम्, परलोकभयम्, आदानभयम्, आकस्मिकभयम्, अश्लोकभयम्, आजीविकाभयम्, मरणभयं चेति । तत्रापीहलोकभयं स्वभवाद् यत् प्राप्यते, परलोकभयं परभवात् ॥४१७६॥

**किंचगमाताणं तब्भयं तु णास-हरणातितो णेयं**
**बज्झणिमित्ताभावे जं भयमाकम्हिकं तन्ति ॥४१७७॥**

**किंचण०** । द्रव्यजातमादान[म् , अ]स्य नाश-हरणादिभ्यो भयं आदानभयम् । यस्तु (यत् तु) बाह्यनिमित्तमन्तरेणाऽहेतुकं भयमकस्माद् भवति तदाकस्मिकम् ॥४१७७॥

**असिलोकभयमयसतो दुज्जीवमैजीवियाभयं णाम ।**
**पाणपरिच्चायभयं मरणभयं चेव सत्तमयं ॥४१७८॥**

**असिलोकभयमित्यादि** । 'श्लोक श्लाघायाम्'-श्लोकनं श्लोकः—श्लाघा—प्रशंसा, तद्विपर्ययः अश्लोकस्तस्माद् भयम् अश्लोकभयम् । दुज्जी(दुर्जी)विकाभयम् आजीविकाभयमिति । प्राणपरित्यागभयं मरणभयमिति ॥४१७८॥

**अम गच्चादिसु तस्सेह अमणमंतोऽवसाणमेगत्थं ।**
**अमति व जं तेणं तो भयस्स अंतो भयंतो त्ति ॥४१७९॥**

**अम गच्चादिसु** । अमनम् अन्तः अवसानमित्यर्थः । अमतीति वा कर्तरि अन्तः । भयस्यान्तो भयान्तः ॥४१७९॥

**'अम रोगे' वा अंतो रोगो भंगो विणासपज्जाओ ।**
**जं भवभयभंगो सो ततो भवंतो भयंतो य ॥४१८०॥**

---

१ क्षीरस्वामिसूचिते पाठे "वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतिः" ॥ इति उत्तरार्धम् । २ 'अन्त'शब्दः नपुंसकेऽपि-हैमलिङ्गानुशासने श्लो० १६ पुं-नपुंसकप्रकरणे । ३ °वमा° हे ।

'अम रोगे' वा इत्यादि। अमनमन्तः रोगः-'रुजो भङ्गे' भङ्गः-विनाश इत्यर्थः। यस्माद् भवस्य भयस्य वा अन् (अन्तो) भङ्गो भवति तस्मादाचार्यात् ततोऽसौ भवान्तः भयान्तो वा भण्यते ॥४१८०॥

एत्थ भदन्तादीणं पायतवायरणलक्खणगतीय।
संभवतो पत्तेयं द-य-ग-वगारादिलोवातो ॥४१८१॥

एत्थ भदन्तादीणं इत्यादि। अत्र 'भदन्त'आदीनां प्राकृतव्याकरणलक्षण-गत्या सम्भवतः प्रत्येकं द-य-ग-व-भ-रादिलोपात् भदन्त(भन्ते)शब्दो भवति। तत्र चोक्तम्—

"वच्चंति क-ग-त-द-य-वा लोवं अत्थं च सिं वहंति सरा।
ख-घ-थ-ध-भा उण हत्तं उवेंति अत्थं अमुंचेंता" ॥ [भरतनाट्यशास्त्र अध्याय १७ गा० ७] ॥४१८१॥

---

१ 'भवान्त-भयान्त-भदन्त-भजन्त-भान्त-भ्रान्त-भ्राजन्त-भगवन्त' इत्येवंरूपेभ्यः अनेकेभ्यः शब्देभ्यः 'भन्ते' अथवा 'भंते' पदस्य निष्पत्तिः प्रदर्श्यते-तद्यथा-

१ भवान्त इत्यस्य वलोपे भ+भान्त, ततः आकारस्य ह्रस्वत्वे भ+अन्त, ततः 'भ'इत्यस्य अकारलोपे भ्+अन्त=भन्त इति।

२ भयान्त इत्यस्य यलोपे भ+आन्त, ततः पूर्ववत् साधने भन्त इति।

३ भदन्त इत्यस्य दलोपे भ+अन्त, ततः पूर्ववत् साधने भन्त इति।

४ भजन्त इत्यस्य जलोपे भ+अन्त, ततः पूर्ववत् साधने भन्त इति।

५ भान्त इत्यत्र तु 'भा' इत्यस्य ह्रस्वत्वे भन्त इति।

६ भ्रान्त इत्यस्य 'र' लोपे पश्चात् भा इत्यस्य ह्रस्वत्वे भन्त इति।

७ भ्राजन्त इत्यस्य रस्य तथा जस्य लोपे भा+अन्त, ततः ह्रस्व-लोपौ पूर्ववत् ततः भन्त इति।

८ भगवन्त इत्यस्य गलोपे तथा वलोपे भ+अअन्त, ततः 'भ' इत्यस्य अकारलोपे तथा 'अअन्त' इत्यस्य आद्यस्य अकारस्य लोपे भ्+अन्त=भन्त इति। अस्माद् 'भन्त' इति पदात् मागधीभाषायाम् पुंसि प्रथमाया एकवचने 'ए'प्रत्यये संलग्ने भन्त+ए=भन्त्+ए=भन्ते अथवा भंते इति संबोधनस्यापि एकवचनम्। एतद्विषये मलधा० हे० बृ० मु० पृ० १३०८ गा० ३४५५-३४५६ तद्वृत्तिश्च च विलोकनीयम्। २ इयं गाथा भरतनाट्यशास्त्रे लभ्यते परन्तु तत्र सर्वथा अशुद्धा। त प्रतौ एषा गाथा अशुद्धिबहुला एवम्-

वच्चंति भ ग-त-द-य वा लोवं अत्थं च सिं वहन्ति सम।
च-घ-हृ-सो वण हूंस उवेन्ति अत्थं अमुंचंता" ॥ त प्रति पृ०२६४ द्वि०। अस्या भरतनाट्यशास्त्रगाथाया मूलस्थलम् आगमप्रभाकरश्रीमुनिपुण्यविजयैः सूचितम्।

हुस्सेकारंतादेसतो य भंते त्ति सव्वसामण्णं ।
गुरुआमंतणवयणं विहितं सामाइयादीय ॥४१८२॥

हुस्सेकारंतादेसतो य इत्यादि । मागधदेशीपदानुवृत्त्या च 'ह्रस्वैकारान्तादेशः । 'भंते' इति सर्वसामान्यं सर्वलिङ्गसामान्यं नपुंसकवचनं गुर्वामन्त्रणवचनं विहितं सामायिकस्यादौ ।

आमंतेति करेमिं[3] भदंतं[4] ! सामाइयं[5] ति सीसोऽयं ।
आहामंतणवयणं गुरुणो किं कारण[२८९-प्र०]मिणं ति ॥४१८३॥
भण्णति गुरुकुलवासोवसंगहत्थं जधा गुणत्थीह ।
णिच्चं गुरुकुलवासी हवेज्ज सीसो जतोऽभिहितं ॥४१८४॥
णाणस्स होति भागी थिरतरओ दंसणे चरित्ते य ।
धण्णा आवकधाए कुरुकुलवासं[6] ण मुंचंति ॥४१८५॥
गीतावासो रती धम्मे अणायतणवज्जणं ।
णिग्गहो य कसायाणं एतं वीराण सासणं ॥४१८६॥
आवासयं पि णिच्चं गुरुपामूलम्मि देसितं होति ।
वीसुं पि हि संवसतो कारणतो जधऽभिसेज्जाए ॥४१८७॥
एवं चिय सव्वावस्सयाइं आपुच्छितूण कज्जाइं ।
जाणाति तमामंतणवयणातो जेण सव्वेसिं ॥४१८८॥
सामाइयमादिमयं भयंतसद्दो य जं तताती[7]यं ।
तेणाऽणुअत्तति तओ करेमि भंते त्ति सव्वेसु ॥४१८९॥
किच्चाकिच्चं गुरवो विदंति[8] विणयपडिवत्तिहेतुं च ।
उस्सासाति पमोत्तुं तदणापुच्छाय पडिसिद्धं ॥४१९०॥
गुरुविरहम्मि वि ठवणा गुरूवसेवोवदंसणत्थं[9] च ।
जिणविरहम्मि वि जिणबिंबसेवणामंतणं सफलं ॥४१९१॥

१ अत्र भान्त, भ्रान्त, भ्राजन्त इत्यादौ भा' इत्यंशस्य ह्रस्वत्वे 'भन्त' इत्यादीनि पूर्वप्रदर्शितप्रकारेण साधनीयानि । ततश्च मागधीभाषाम् ए'कारप्रत्ययो योज्य इत्येवं साधना व्याकरणानुसारिणी । २ 'भन्ते' इति नपुंसकवचनं वृत्तिकारेण सूचितम् । "अत एत् सौ पुंसि मागध्याम्" ।८।४।२८७। इति सूत्रेण पुंलिंगे एकारप्रत्ययविधानात् 'भन्ते'रूपं नपुंसकलिङ्गे न सिध्यति परन्तु पुंल्लिंगे सिध्यति । ३ °मि हे, °मी को त । ४ भंते को हे त । ५ साम° जे । ६ गुरुकुलवासं को । ७ °ए को हे त । ८ वद' त । ९ °वएसोव° को हे ।

[२७५-द्वि०]रण्णो व्व परोक्खस्स वि जध सेवा मन्तदेवताए व्व ।
तध चेव परोक्खम्मि[1] वि गुरुणो सेवा विणयहेतुं ॥४१९२॥
अधवा गुरुगुणणाणोवयोगतो भावगुरुसमादेसो ।
इह विणयमूलधम्मोवदेसणत्थं जतोऽभिहितं ॥४१९३॥
विणयो सासणे मूलं विणीतो संजतो भवे ।
विणया विप्पमुक्कस्स कतो धम्मो कतो तवो ? ॥४१९४॥
विणयोवयार, माणस्स भंजणा, पूयणा गुरुजणस्स ।
तित्थकराण य आणा सुयधम्माराधणा किरिया ॥४१९५॥
आतामंतणमधवाऽवसेसकिरियाविसग्गतो तं च ।
सामाइएगकिरियाणियामगं तदुवयोगातो ॥४१९६॥

आमंतेति करेमि इत्यादि(दयः) स्फुटार्था यावत् 'आतामंतणमधवा' । अथवेदना(मा)मन्त्रणमात्मन एव न गुरोः । हे आत्म[न्] ! जीव ! भंते ! सामायिके(क)क्रिया(याम्)सम्प्रति करोमि शेषक्रियाविसर्जनात् तन्मात्रोपयोगात् सामायिकैकक्रियानियामकमामन्त्रणमात्मन इति ।४१८३-४१९६॥

एवं च सव्वकिरियाऽसवत्तता तदुवयुत्तकरणं च ।
वक्खातं होति णिसीधियादिकिरियोवयोगो व्व ॥४१९७॥

एवं च सव्वकिरिया इत्यादि । अनेन चे(चै)तत(त्) ज्ञापितं भवति—
"जोगाजोगो जिणसासणंमि दुक्खक्खयाओ उज्जंतो ।
अण्णोण्णमबाहन्तो असवतो(त्तो)[3]होइ कायव्वो" ॥ [ ] यथा—'निशीथिका'('नैषे[4]धिकी')शब्दोच्चारणं गमनादिक्रियानिषेधोपयोगव्यापारम्[5], निषिद्धात्मत्वात् । एवमिदमपीति ॥४१९८॥

अधव जधासंभवतो भदंतसद्दो जिणातिसक्खीणं ।
आमंतणाभिधायी तस्सक्खिज्जे थिरव्वतता ॥४१९८॥

[अधव जधासंभवतो भदन्त० । ] अथवा 'भदन्त'शब्दोऽयं जिनादीनां साक्षिणामामन्त्रणवचनः । तत्साक्ष्यं किंफलम् ? इति चेत् आह—लज्जाओ(तो) गौरवाद्वा स्थिरव्रतता भवेदिति ॥४१९८॥

एतत्स्फुटीकरणार्थं गाथा—

१ °स्स को हे त । २ °विसे° त । ३ असवतो त प्रतौ । असवत्तो—असपत्नः—अविरोधी । ४ "यथा नैषेधिक्या नैषेधिकीकरणेन अन्यक्रियानिषेधता" इत्यादि—मलधा० हे० बृ० मु० पृ० १३११ गा० ३४७१ । ५ 'सूचयति' इति अध्याहार्यम् ।

**गहितं जिणाति[२७६-प्र०]सक्खं मई त्ति तल्लज्ज-गोरव-भयातो ।**
**सामाइयाऽतियारे परिहरतो तं थिरं होति ॥४१९९॥**

**गहितं जिणाति०** । स्फुटार्था ॥४१९९॥

अथवा समानाधिकरणसमासः, अलक्षणश्च[2] तन्मध्ये एकारादेशः, भदन्तं च तत् सामायिकं च तदिति भदन्तसामायिकम् । तदर्थमियं गाथा–

**अधवा भंतं च तयं सामइयं चेति भंतसामइयं ।**
**[1]समलक्खणमेवं भंतेसामाइयं तं च ॥४२००॥**

**[अधवा भंतं च] तयं** इत्यादिर्गतार्था ॥४२००॥

एतत् पुनः किमर्थं विशेषणमुपादीयते ? इति चेत् अत आह—

**णामातिवुदासत्थं णणु सो सावज्जजोगविरतीओ ।**
**गम्मति, भण्णति, ण जतो तत्थ वि णामातिसब्भावो ॥४२०१॥**

**णामाति-[वु]दासत्थं** । 'भदन्त'विशेषणं यदि नामादिसामायिकव्युदासार्थम्, ततोऽनर्थकम्, यतः सा(ना)मादिव्युदासः सावद्ययोगविरतित एव भावसामायिकस्य कृतः किमनेन भदन्तविशेषणेन ? भण्यते, तत्रापि सावद्ययोगे नामादिनिक्षेपसद्भावोऽस्त्येव, ततस्तत्रापि सन्देह एव, स भदन्तशब्देन (अति)दिश्यते ॥४२०१॥

अथवा षष्ठीतत्पुरुषोऽयम्–

**भंतस्स व सामइयं भंतेसामाइयं जिणाभिहितं ।**
**ण परप्पणीतसामाइयं ति भंतेविसेसणतो ॥४२०२॥**

**भंतस्स व सामइयं** । भदन्ता भगवन्तो जिनाः, तेषामिदं सामायिकम् तैरभिहितत्वात् भदन्तसामायिकम् न परप्रणीतमिति विशेषणाद् गम्यते ॥४२०२॥

एवं भदन्तशब्दनिरूपणा ।

अतः सामायिकपदनिरूपणा—

**रागद्दोसविरहितो समो त्ति अयणं अयो त्ति गमणं ति ।**
**समगमणं ति समायो स एव सामाइयं णाम ॥४२०३॥**

**रागद्दोसविरहितो समो त्ति** । रागद्वेषविरहितः समः, अयनं अयः गमनमित्यर्थः, समस्याय समायः स एव-समायः-सामायिकम् स्वार्थिकः प्रत्ययः ॥४२०३॥

---

१ मए जे । २ 'भन्तेसामाइयं' इत्यस्य समानाधिकरणरूपे कर्मधारयसमासे 'भन्तसामाइयं इत्येवं भवितुमुचितम् ततः अस्मिन् प्रयोगे एकारः अलक्षणः–व्याकरणलक्षणानुसारी नास्ति किन्तु आर्षतया एकारः आगमरूपो बोध्यः, ततः समानाधिकरणेऽपि समासे 'भन्तेसामाइयं' इति रूपं समुचितं ज्ञेयम् ।

**अहवा भवं समाए णिव्वत्तं तेण तम्मयं वा त्ति ।**
**जं तप्पयोअणं वा तेण व सामाइयं णेयं ॥४२०४॥**

**अहवा भवं समाए।** अथवा भवार्थे प्रत्य(ये) समाये भवम् अथवा समायेन निर्वृत्तम् समायस्य वा विकारः तन्मयम् अथवा समायः प्रयोजनमस्येति सर्वत्र यथाऽभिप्रेतेऽर्थे 'ठक्' । तेन सामायिकं ज्ञेयम् ज्ञातव्यं वा ॥४२०४॥

अथवाऽन्यथा समशब्दः, आशयस्तथैव—

**अहवा समाइं सम्मत्तणाणचरणाइं तेसु तेहिं वा ।**
**अयणं अयो समायो स एव सामाइयं णाम ॥४२०५॥**

**अहवा समाइं।** ज्ञान-दर्शन-चारित्राणि समानि, तेषु अयः, तैः सर्वैः अयः समायः, स एव सामायिकमिति पूर्ववत् ॥४२०५॥

**अहवा समस्स आयो गुणाण लाभो त्ति जो समायो सो ।**
**अधवा समाणमायो णेयो सामाइयं णाम ॥४२०६॥**

**अहवा समस्स आयो।** समस्स(स्य) वा आयः समासुयो(समायो) गुणलाभः, समानां वा दर्शनादीनामायः । समाय एव सामायिकमिति स्वार्थिकादि तथैव सर्वम् ॥४२०६॥

**अधवा[२७६-द्वि०]सामं मेत्ती तत्थ अयो तेण व त्ति सामाओ ।**
**अधवा सामस्साओ लाभो सामाइयं णेयं ॥४२०७॥**

**अधवा सामं मेत्ती।** अथवाऽन्य एवायं 'साम'शब्दः मैत्रीपर्यायः, साम प्रियवचनं वा, तत्र अयः तेन वा अयः सामायः अथवा साम्नः आ[यो] लाभ सामायः, सामाय एव सामायिकम् ॥४२०७॥

अथवा—

**सम्ममयो वा समयो सामाइयमुभयविद्धिभावातो ।**
**अधवा सम्मस्सायो लाभो सामाइयं होति ॥४२०८॥**

**सम्ममयो वा।** अथवा 'अय वय'[1] इत्यादिर्गत्यर्थो धातुः, तस्य 'सम्'इत्युपसर्गः सम्यगर्थे, सम्यक् अयः समयः, अत्रापि स्वार्थिकादिप्रत्ययविधानम्, किन्तु उभयपदवृद्धिभावः । न्तु(नु) तस्य लक्षणं नास्ति पाणिनीयव्याकरणे, आपिस(श)ले

१ 'आयशः' इति त प्रतौ । २ महाभाष्ये सर्वत्र 'आपिशल' 'आपिशला' 'आपिशलिः' इत्येवं तालव्यशकारयुक्त एव 'आपिशल' शब्दो निर्दिष्टः–द्रष्टव्यो महाभाष्यशब्दकोशः ।

वा, कथं उभयवृद्धिरिति ? ननु चाष्टौ व्याकरणानि श्रूयन्ते, तत्र ऐन्द्रे व्याकरणे प्रतिपदपाठसिद्धेरुभयपदवृद्धिर्नास्त्येव सामायिकशब्दवत् । एवं तर्ह्यन्येषु व्याकरणेषु उभयपदवृद्धिरियमिति शिष्टप्रयोगादनुमीयते। शिष्टप्रयोगस्य वा परिमाणं पाणिनीयैरेवाख्यायते–"समस्त(सप्तो)द्वीपो लोकः, चत्वारो वेदाः, सरहस्साः(स्याः) शब्दप्रयोगाधाराः, तत्रौ(त्रो)पलब्धौ यत्नः क्रियतामिति यत्र गम्यमेतत् । अस्माकमपि चतुर्दश पूर्वाणि सर्वाक्षरसन्निपातसंग्राहीणि। तत्रायं भगवद्भिरनुयोगधरैर्दृष्ट इति प्ररूपितम(म्)। [न]याश्च नैगमादयः सप्त प्रसिद्धाः स्वविषयव्यापारनियताः परविषयोन्मूलनाशक्ताः। तेषामाद्यास्त्रयो द्रव्यार्थप्रधानाः, ऋजुसूत्रश्चतुर्थः पर्यायार्थः(र्थ)प्रधानः, एते चत्वारोऽप्यर्थनयाः अर्थं प्रधानीकृत्य प्रवृत्ताः। शब्दश्चार्थस्यैव प्रतिपादनोपाय इति न तत्र यत्नः तद्यथा हस्तसंज्ञादिभिः पाणिविहारैरङ्गुलिस्फोटैरिङ्गितैर्नि[3]मित्सितैश्चार्थप्रतिपादनं कर्त्तव्यमित्यर्थः प्रधानं(नः) तेषाम् । य एवार्थं प्रत्याययति स एव साधुशब्दः, तदनुगुणं च लक्षणमपि प्रणीयते । "दृष्टानुविधि छन्दसि"[ ]इति वचनात् , पृषोदरादिपाठाश्च पाणिनीयैरत एवाभ्युपगम्यन्ते। सर्वनयात्मकत्वात् सम्यक्त्वादस्य व्याकरणेऽपि किञ्चित् सूत्रं द्रव्यनयमङ्गीकृत्योक्तं सामान्यद्रव्यमिति । किञ्चित् पर्यायनयमङ्गीकृत्योक्तं 'भेदाः पर्यायाः' इति । तथा च–पठन्ति–"सर्वपार्श्व(र्ष)दं हीदं शास्त्रं नैकेन नयप्रस्थानेन निर्वोढुं शक्यम्" [ ] इति । नानानयाश्रयाणां शब्दनयानां तु त्रयाणां शब्दः प्रधानेनार्थः। तेषां च यथा शब्दोऽवस्थितः प्रकृतिप्रत्ययादिनार्थेन तथा अर्थप्रतिपत्तिरिति ।

दृष्टादृष्टफलाः सर्वाः क्रिया अर्थनिबन्धनाः ।

---

१ "यद् यद् लक्षणेन अनुपपन्नं तत् सर्वं निपातनात् सिद्धम्, एवं सामायिकं ज्ञेयम्"–कोट्या० वृ० मु० पृ० ९५४। "समय एव स्वार्थिक 'इकञ्' प्रत्ययोपादानाद् उभयत्र वृद्धिभावाच्च सामायिकम्"–मलधा० हे० वृ० मु० पृ० १३१४। २ व्याकरणमहाभाष्ये (अ० १ पा० १ आह्नि० १ 'सर्वे देशान्तरे' इत्यस्य भाष्ये–निर्णय० प्रका० पृ० ६४) निर्दिष्टोऽयमुल्लेख एवम्–"उपलब्धौ यत्नः क्रियताम् । महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः" इत्यादितः 'एतावान् शब्दस्य प्रयोगविषयः" इति वचनपर्यन्तम् विस्तीर्णोऽयमुल्लेखः । ३ अत्र 'निमेषितैः' इति पदं कदाचन सुसंगतम् अथवा 'निमित्तैः इति पाठो योग्यः कदाचन ततश्च '°ङ्गितैर्निमेषितैश्चार्थं० अथवा °ङ्गितैर्निमितैश्चार्थं०' इति पाठो भवेत्। ४ "छन्दसि तु यथादृष्टम्" जैमि० सूत्रपाठे ९।३।१४। तुलनीयमेतत् सूत्रम् ।

अर्थानां वाचकाः शब्दाः याथात्म्यं तेषु चिन्तयेत्"[ ]तस्मादेवं नयाश्रयगात् सर्वमविरुद्धं लक्षणमिति । सम्यगायो वा समायः तस्य सामायिकम् । अथवा समस्य भावः साम्यम, साम्यस्यायः साम्यायः, तस्य सामायिकमिति ॥४२०८॥

**अथवा णिरुत्तविधिणा सामं सम्मं समं च जं तम्स ।**

**इकमप्पए पवेसणमेतं सामाइयं णेयं ॥४२०९॥**

**अथवा णिरुत्तविधिणा ।** अथवा नैरुक्तेन विधिना अन्यक्षरसामान्येन ब्रूयात्, न त्वेवं न ब्रूयादिति । देशीपदे क्वापि 'ए(इ)कं' गृहमुच्यते, तेन साम्नः इकं कं) नैरुक्तं निपातनात् । यद्लक्षणेनानुप[प]न्नं तत् सर्वं निपातनात् सिद्धमिति । साम्नो[2] मकारस्य 'आय' आदेशः--सामायिकम् । सम्यमि(गि)ति निपातनस्य वा गा)दिलोपात् आयादेशाच्च अथवा समशब्दस्य आय आदेशः, समस्य इकं(कं) गृहं प्रवेश(न - मित्यर्थ), निपातनात् सामायिकम् । यत् तस्यात्मनि प्रवेशनं तत् सामायिकमिति । एवं बहुधा नेयम् । 'अनन्ता गमाः, अनन्ताः पर्यवाः एकैकस्य सूत्रस्य' इति ज्ञापितं भवति एवं शब्दरूपसिद्धौ कृतायाम् । अर्थकथनं पर्यायशब्दैर्वाक्यान्तरेण चेति पूर्वं पर्यायशब्दा उक्ताः—

"सामाइयं समतियं सम्मावातो समास संखेवो ।

अणवज्जं च परिण्णा पच्चक्खाणे य ते अट्ठ" [निर्युक्तिगाथा—६४२ पृ० ६३८ प्रस्तुतभागे] ॥४२०९॥

इदानीं वाक्यान्तरेणार्थनिरूपणम्—

**किं पुण तं सामइयं ति ? सव्वसावज्जजोगविरति त्ति ।**

**सियते स तेण सव्वो तं सव्वं कतिविधं सव्वं ॥४२१०॥**

---

१ भाष्यमूलगाथायां तु 'इकं अप्पए पवेसणं'-(इकम् सामायिककर्तुः आत्मनि प्रवेशनम्) इत्येवम् 'इक' शब्दस्य अर्थनिरूपणं कृतम् । अयं वृत्तिकारः 'इकं गृहं प्रवेशनम्' एति सूचयति । २ 'सामन्' इत्यत्र केवलम् मकारस्य 'आय' आदेशे कृते 'सा+आय+न्' इत्येव स्यात् ततश्च 'सामायिक' पदे न सेत्स्यति परन्तु 'सामन्' इत्यस्य अन्त्यस्य 'अन्' अंशस्य 'आय' आदेशे अर्थात् साम्+अन् । ततः 'अन्' इत्यस्य 'आय' आदेशे साम्+आय=सामाय । एवं जाते 'सामाय' पदद्वारा सामायिकपदसिद्धिः स्यात् । ३ "अत्र 'सम्यग्'शब्दस्य गकारस्य तथा 'म्य' स्थितस्य अकारस्य लोपो बोध्यः, ततः 'सम्य्' इत्यस्य अन्त्यस्य व्यञ्जनान्तयकारस्य 'आय' आदेशो विधेयः । ततः आदिसकारस्य दीर्घत्वे 'सामाय' शब्दे सिद्धे पश्चात् तेन सह 'इक'शब्दस्य संबन्धे 'सामायिक'पदसिद्धिः । तुलनीयमत्र मलधारिविवरणम् पृ० १३१४ गा० ३४८३ । ४ अत्र 'सम'शब्दस्य 'आय' आदेशे तु 'सामायिक'पदं कथमपि न सिध्येत्, किन्तु 'सम'शब्दस्य अन्त्यस्वरस्य अकारस्य 'आय'आदेशो विधेयः अत्रापि "समशब्दात् अयागमे" इत्यादिकं मलधारिविवरणं पूर्वोक्तमेव द्रष्टव्यम् । ५ 'तस्य 'सम'शब्दार्थरूपरागद्वेष-माध्यस्थ्यस्य सामायिकानुष्ठानमाचरतः आत्मनि' इति आशयः ।

**किं पुण तं सामइयं?** 'सर्वसावद्ययोगविरतिः सामायिकम्' इत्युक्ते कः 'सर्व'-शब्दस्यार्थः ? क्रिया-कारकभेदकथनम् पर्यायान्तरैर्निरूपणमिति। 'सृ गतौ' इति धातुः, तस्यौणादिके 'व'प्रत्यये सर्वशब्दो वा निपात्यते। स्रियते स इति, स्रियते तेन वा सर्वः ॥४२१०॥

तच्च कइ(ति)विधमिति प्रश्ने—

**णामं ठवणा दविए आदेसं चेव णिरवसेसं च।**
**तध सव्वधत्तसव्वं च भावसव्वं च सत्तमयं ॥दारगाधा॥७२७॥४२११॥**

**णामं ठवणा दविए।** नाम[सर्वम्], स्थापनासर्वम्, द्रव्यसर्वम्, आदेशसर्वम्, निरवशेषसर्वम्, सर्वधत्तसवम्, भावसर्वमिति सप्त वा सर्वम्। तत्र नामस्थापने पूर्ववत् ॥७२७॥४२११॥

द्रव्यसर्वं भण्यते—

**कसिणं दव्वं सव्वं तद्देसो वा विवक्खयाऽभिमतो।**
**दव्वे तद्देसम्मि य सव्वासव्वे य चतुभंगो ॥४२१२॥**

**कसिणं दव्वं सव्वं।** यद् विवक्षितं द्रव्यमङ्गुल्यादि तत् कृत्स्नं परिपूर्णमनूनं सर्वैरवयवैः सर्वमुच्यते—सकलमित्यर्थम्। एवं तस्यैव द्रव्यस्य कश्चित् सावयवो दे(दे)शः कृत्स्नतया स्वावयवपरिपूर्णतया यदा सकलो विवक्ष्यते तदा देशोऽपि सर्वः. एवमुभयस्मिन् द्रव्ये तद्देशे च सर्वत्वान्(त्)। तयोरेव यथास्वमपरिपूर्णतायामसर्वं तत्त्वम्। ततश्चतुर्भङ्गी—द्रव्यं सर्वम् देशोऽपि सर्वः, द्रव्यं सर्वं देशः असर्वः, देशः सर्वः द्रव्यमसर्वम्, देशोऽसर्वः द्रव्यमप्यसर्वम् ॥४२१२॥

**सव्वासव्वे दव्वे देसम्मि य णातमंगुलिद्दव्वं।**
**संपुण्णं देसूणं पेव्वं पव्वेगदेसोऽयं ॥४२१३॥**

**सव्वासव्वे दव्वे।** अत्र यथाक्रममुदाहरणम्—सम्पूर्णमङ्गुलिद्रव्यं सर्वम्, तदेव देशोनं द्रव्यमसर्वम्, तथा देशः पर्व तत् संपूर्णं देशसर्वम्, पर्वैकदेशः देशाऽसर्वम् एवं द्रव्यसर्वम् ॥४२१३॥

---

१ पाणिनीये उणादिप्रकरणे 'सर्व-नीघृष्व-रिष्व०'' (पा०१, सू० १५९) इत्यनेन सूत्रेण "सृतम् अनेन विश्वम् इति सर्वम्'' इत्येवं सर्व'शब्दो 'व'प्रत्ययान्तो निपात्यते। अमरकोशवृत्तिकारः क्षीरस्वामिभट्टस्तु ''सर्वति सरति वा सर्वम्'' (—अमर० क्षीरस्वा० टी० पृ० २५०) इत्येवं सर्वशब्दं व्युत्पादितवान्। २ पुव्वप्पव्वेग° त।

अथ आदेशसर्वमुच्यते—

**आदेसे उवयारो सो बहुतरए पधाणतरए व्व[1] ।**
**देसे वि जधा सव्वं भत्तं भुत्तं, गतो गामो ॥४२१४॥**

**आदेसो उवयारो** । आदेशनमादेशः उपचारो व्यवहारः, स बहुतरे प्रधाने वा आदिश्यते । देशेऽपि—यथा—विवक्षितं कूरमभिसमीक्ष्य बहुतरे भुक्ते (वा) स्तोके-ऽवशेषे उपचारः क्रियते—सर्वं कूरं भुक्तम्, भक्तं वा । प्रधानेऽप्युपचारः—यथा—ग्रामप्रधानेषु गतेषु पुरुषेषु गतो ग्रामः इति व्यपदिश्यते । एवमादेशसर्वम् ॥४२१४॥

अथ निरवशेषसर्वमुच्यते—

**दुविधं तु णिरवसेसं सव्वासेसं तदेकदेसे[2] य ।**
**सव्वासेसं सव्वे[२७७-प्र०]अणिमिसणयणा जधा देवा ॥४२१५॥**

**दुविधं तु णिरवसेसं** । द्विविधं निरवशेषम्—सर्वनिरवशेषम्—तद्देशनिरवशेष-त्वेन तस्य सर्वस्य सम्पूर्णस्य विवक्षितधर्मेण निर्देशात् सर्वे देवा अनिमिषनयना, इति न हि कश्चिद् देवानां मध्ये निमिषनयनत्वेन मु(उ)च्यते ॥४२१५॥

**तद्देसापरिसेसं सव्वे असुरा जधा असितवण्णा ।**
**जध जोतिसालया वा सव्वे किर तेउलेस्सागा ॥४२१६॥**

**तद्देसापरिसेसं** । तेषां देवानाम् देश एको निकायः असुरास्ते तद्देश-निरवशेषतया आदिष्टाः—सर्वे[3] [अ]सुरा [अ]सितवर्णाः । द्वितीयमुदाहरणम्—यथा वा—ज्योतिष्काः सर्वे तेजोलेश्याः ॥४२१६॥

अह(थ) सर्वव(ध)त्त(त्ता)सर्वमुच्यते—

**जीवाजीवा सव्वं तं धत्ते तेण सव्वधत्त त्ति ।**
**सव्वे व सव्वधत्ता सव्वं जमतो परं णण्णं ॥४२१७॥ दारं ।**

**जीवाजीवा सव्वं** । यत् किञ्चन जीवलोकेऽस्ति तत् सर्वं जीवश्चाजीवश्च(वश्च), नह्येतद्व्यतिरिक्तमन्यदस्ति किञ्चित् । एतत् सकलं वचनं जगतः सङ्ग्रहस्येति सर्वे जीवाजीवा इति सर्व(र्वं)धत्तं निहितमस्यां विवक्षायां इति सर्वधत्ता । ननु "दधातेर्हिः" [७।४।४२। पाणि०] इति 'हि'शब्दादेशात् 'हितम्' इति भवितव्यम्,

1 वा को हे । 2 सो य त । 3 'असुरा जधा असितवण्णा' इत्येव मूलगाथापाठः । वृत्तिकारनिरूपिते—सर्वे सुरा(:, सितवर्णाः' इति न मूलानुसारी पाठः, अत एव अकारः प्रक्षिप्तः द्वयोः पदयोः आदौ ।

कथं घत्तमिति ? उच्यते, प्राकृते देशीयपदस्याविरुद्धत्वात् न दोषः । अथवा 'घत्त' इति रि(डि)त्थवदव्युत्पन्न एव यदृच्छाशब्दः । अथवा सर्वं दधातीति 'सर्वध[म्] निरवशेषवचनम् । सर्वधम् आत्तमागृहीतं यस्यां विवक्षायां सा सर्वध(धा)त्ता । एवमपि निष्ठापूर्वनिपातः ? "जातिकालसुखादिभ्यः परवचनम् [२।२।३६। पाणि० सू० वा०] इति परनिपात एव । अथवा सर्वधि(धे)न आत्ता सर्वधात्ता तया यत् सर्वं तत् सर्वधात्तासर्वम् ॥४२१७॥

अत्र चोद्यते–द्रव्यसर्वस्य, आदेस(श)सर्वस्य, निरवशेषसर्वस्य, सर्वधात्ता सर्वस्य च न कश्चिद् विशेषः इति पुनरुक्तत्वम् । तत्परिहाराय—

**अध दव्वसव्वमेगदव्वाधारन्ति भिण्णमण्णेहिं ।**
**एगाणेगाधारोवयारभेतेण चादेसं ॥४२१८॥**

अध दव्वसव्वमित्यादि । यद् द्रव्यसर्वं तदेकद्रव्याधारं देशविशेषकल्पनया व्यपदिश्यते इति उत्तरेभ्यो भिद्यते । आदेशसर्वं तु एकानेकद्रव्याधारमुपचारप्राधान्यमात्रनिर्देशात् पूर्वस्मादुत्तराभ्यां च भिद्यते ॥४२१८॥

**भिण्णमसेसं जमिहेगजातिविसयं ति सव्वधत्तातो ।**
**भिण्णा य सव्वधत्ता सव्वाधार त्ति सव्वेहिं ॥४२१९॥ दारं ।**

भिण्णमसेसं । निरवशेषसर्वं तु सकलैकजातिविषयमिति पूर्वेभ्यः उत्तराच्च भिद्यते । सर्वधात्तासर्वं तु सर्वो(र्वा)धारत्वा[त्] सर्वेभ्योऽपि पूर्वेभ्यो भिद्यते ॥४२१९॥

अथ भावसर्वं निरूप्यमिति—

**कम्मोदयस्स भावो सव्वो सं सुभोऽसुभो य ओदइओ ।**
**मोहोवसमसभावो सव्वो उवसामिओ भावो ॥४२२०॥**

कम्मोदयस्स भावो इत्यादि । औदयिको भावः सर्व एव द्विविधः–शुभोऽशुभश्च । सर्वोऽसौ कर्मोदयादेव न क्षयोपशमादिभ्य इति भावसर्वम् । तथा मोहनीयकर्मोपशमस्वभावः सर्व ओ(औ)पशमिक इति ॥४२२०॥

**कम्मक्खयस्स भावो खयिओ सव्वो य मीसओ मीसो ।**
**अध सव्वदव्वपरिणतिरूवो परिणामिओ भावो ॥४२२१॥**

---

१ सर्वध+आत्ता=सर्वधात्ता इत्येष बहुव्रीहिसमासे प्रयोगः संस्कृतभाषायां साधुः, प्राकृते तु 'धात्ता' इत्यस्य आद्यस्य आकारस्य ह्रस्वत्वे 'घत्ता' इति साधुः । २ " जातिकालसुखादिभ्यः परा निष्ठा वक्तव्या" इत्येवंरूपं वार्तिकं विद्यते । ३ एष प्रयोगः तृतीयातत्पुरुषसमासे । ४ °मेगं दव्वा हे त । ५ सव्वेसिं हे त । ६ असुहो सुहो य को हे त । ७ सव्वो को हे त ।

**कम्मक्खय०** इत्यादि । कर्मणां क्षयादेव सर्वः का(क्षा)यिक', मिश्रः पुनः क्षायोपशमिक', स सर्वप्रतिबन्धककर्मणां क्षयादुपशमाद वेनि मिश्रस्वभावः । अथ शब्दः परिसमाप्त्यर्थः । एतावन्ति भावोदाहरणानं ति । सर्वः परिणामिको भावः द्रव्यपरिणामस्वभाव इति । एवं सप्तप्रकारः सर्वनिक्षेपः ॥४२२१॥

इह पुनरशेषसर्वेणाधिकार इति—

**अधिगतमऽसेससव्वं विसेसतो सेसयं जधाजोगं ।**
**गरहितमवज्जमुत्तं पावं सह तेण सावज्जं ॥४२२२॥**

**अधिगतमसेस०** । इह विशेषतो निरवशेषसर्वमुपयुज्यते, अन्यानि तु यथायोगं सम्बन्धनीयानि । गाथापश्चार्धेन सावद्यनिरूपणमिति । गरहितमवद्यम्—उच्यते—पापमित्यर्थः. सहावद्येन सावद्यः ॥४२२२॥

अथवा अन्यथोच्यते—

**अधवेह वज्जणिज्जं वज्जं पावं ति सहसकारस्स ।**
**दिग्घत्तादेसातो स[२७७–द्वि०]हवज्जेणं ति सावज्जं ॥४२२३॥ दारं ।**

**अधवेह वज्जणिज्जं** । 'वृजी वर्जने' वर्जनीयं वर्ज्यं पापम्, सह वर्ज्येन सवर्ज्यः प्राकृते सक(का)रस्य दीर्घादेशात्—सावर्ज्यः ॥४२२३॥

कोऽसौ ? योग इति पुंलिङ्गाभिधानात् तस्य च व्याख्यानम्—

**जोगो जोयणमाऽऽतकिरियासमाधाणमाऽऽतवावारो ।**
**जीवेण जुज्जते वा जतो समाधिज्जते सो त्ति ॥४२२४॥**
**जं तेण जुज्जते वा स कम्मणा जं वं जुज्जते तम्मि ।**
**तो जोगो सो य मतो तिविधो कायादिवावारो ॥४२२५॥**

**जोगो जोयणमित्यादि** । "युजिर् योगो(गे)' 'युज समाधौ वा' तस्य—भावे, कारके 'घञ्'—योगः आत्मकर्मसम्बन्धः आत्मक्रियासमाधानं वा । यः कश्चिदात्मव्यापारः स योग मु(उ)च्यते । अथवा युज्यते स आत्मना सहेति कर्मणि वा कारक(के, योगः—आत्मनि समाधीयत इत्यर्थः । तेन वा युज्यते आत्मनि स कर्मणेति योगः करणे कारके । अथवा युज्यते तस्मिन्निति अधिकरणे कारके योगः । स च त्रिविधः काय-वाङ्-मनोऽभिव्यापारः ॥४२२४–२५॥

१ जोगा जे । २ °रियसमा° त । ३ स साहिज्जए सो को । ४ कम्मुणा को हे त ।

**सव्वो सावज्जो त्ति य जोगो संबज्झते तयं सव्वं ।**
**सावज्जं जोगं ति य पच्चक्खामि त्ति वज्जेमि ॥४२२६॥**

**सव्वो सावज्जो त्ति** । यः सोऽयमेवंप्रकारः सहावद्येन आवद्य इति योगः सम्बध्यते । 'तन' इति—द्वितीया कर्मणि, प्रत्याख्यानक्रि[या]या आप्तुमिष्टत्वात्—कर्म, तं सावद्यं योगं प्रत्याचक्षेऽहमित्यर्थः ॥४२२६॥

कथं वर्जनार्थः 'प्रत्याख्यानशब्दः' इति तन्निरूपणाय गाथा

**पतिसद्दो पडिसेधे अक्खाणं खावणाऽभिधाणं वा ।**
**पडिसेधस्सऽक्खाणं पच्चक्खाणं णिवित्ति त्ति ॥४२२७॥**

**'पति'सद्दो** । इह 'प्रत्याख्यामि' इति वा 'प्रत्याचक्षे' इति वा उत्तमपुरुषैकवचने द्वेधा शब्दः । तत्राद्य[ः] 'प्रत्याख्यामि' इति । 'प्रति'शब्दः प्रतिषेधे, 'आङ्' आभिमुख्ये 'ख्या प्रकथने' । प्रतीपमनभिमुखं[1] ख्यापनं सावद्ययोगस्य करोमीति । अथवा 'चक्षिङ् व्यक्तायां वाचि' प्रतिषेधस्य अवेरेणाभिधानं करोमि, प्रत्याचक्षे- प्रतिषेधस्याख्यानम्—निवृत्तिरित्यर्थः ॥४२२७॥

तच्च षोढा —

**णामं ठवणा दविए अतिच्छ-पडिसेध-भावतो तं च ।**
**णामाभिधाणमुत्तं ठवणागारक्खणिक्खेवो[2] ॥७२८॥४२२८॥ दारं[3] ।**

**णामं ठवणा** । तत्र 'प्रत्याख्यान'शब्द एव नामप्रत्याख्यानम्, स्थापनाप्रत्याख्यानं बहिर्मुखहस्ताक(का)रकरणम् ऊर्ध्वाङ्गुलि[4] हस्तकम्पनाक(का)रं वा अथवा अक्षनिक्षेपादिना ॥४२२८॥

१ 'ख्या'धातोः पक्षे प्रतीपम् आभिमुख्येन ख्यापनम्''...'चक्षि'धातोः पक्षे प्रतिषेधस्य आदरेण अभिधानम्''–हारि० मु० वृ० पृ० ४७८ । मलयगि०वृ०मु० पृ० ५७८ । "आख्यानं तु आभिमुख्येन वा आदरेण वा प्रकथनम् चक्षिपक्षे अभिधानं वा''–मलधा० हे० वृ० मु० पृ० १३१८ । अनेन वृत्तिकारेण यद् अभिहितम् "प्रतीपम् अनभिमुखम्'' तद् अपि एवं संगमनीयम्–सावद्ययोगानाम् अनभिमुखीभवनस्य ख्यापनं करोमि अर्थात् 'मया सावद्ययोगेषु अभिमुखेन भूत्वा न वर्तितव्यम्' इति ख्यापनं करोमि । २ 'क्खेवा हे । ३ मलधा° हे० वृत्तौ ३५०२ गाथाविवरणे मु० पृ० १३१९ "इति निर्युक्तिगाथासंक्षेपार्थः'' इति समुल्लिख्य इमां ४२२८ गाथां निर्युक्तिगतां सूचितवान् वृत्तिकारः । ४ इदमत्र क्रियाविशेषणतया योज्यम् । श्रीमलधारि हे० वृत्तौ तु "ऊर्ध्वाङ्गुलिकम्पमानहस्ताकारकरणं वा''–मु० पृ० १३१९ ।

**दव्वस्स व दव्वाण व दव्वभूतस्स दव्वहेतुं वा ।**
**दव्वप्पच्चक्खाणं णिण्हादीणं व सव्वं पि ॥४२२९॥ दारं ।**
**[1]भिक्खयराणमतिच्छा[2], पडिसेधो रोगिणो व्व किरियाए[3] ।**
**सिद्धं पच्चक्खातो जध रोगी सव्ववेज्जेहिं ॥४२३०॥ दारं ।**

**दव्वस्स व** । द्रव्यस्य द्रव्ययोर्द्रव्याणां वा द्रव्यभूतस्य वा द्रव्यहेतोर्वा यत् प्रत्याख्यानं तद् द्रव्यप्रत्याख्यानम् , द्रव्यभूतप्रत्याख्यानं भावविरहितं निह्नवादिप्रत्याख्यानम् । भिषग्न(व)राणां प्रसिद्धम् - रोगिणः क्रियायाः प्रतिषेधः प्रतिषेधप्रत्याख्यानम् । लोके सिद्धमिदम्—प्रत्याख्यातोऽयं सर्ववैद्यैरिति ॥४२२९-३०॥

**भावस्स भावतो भावहेतु[२७८-प्र०]मध भाव एव वाभिमतं ।**
**पच्चक्खाणं दुविधं तं सुतमिह णोसुतं चेव ॥४२३१॥**

**भावस्स भावतो** । भावस्य प्रत्याख्यानम्—सावद्ययोगस्य पापक्रियायाः निषेधनम् । भावतः अशुभात् परिणामात् पापक्रियानिर्वृत्तिर्जायते । भावहेतोर्वा सर्वकर्मक्षयो भावः परिनिर्वाणम्, तदर्थं भावप्रत्याख्यानम् । भाव एव प्रत्याख्यानम् इति समानाधिकरणसमासः, भावात्मकत्वात् सावद्ययोगविरतेः । तच्च द्विविधम् श्रुतप्रत्याख्यानम्, नोश्रुतप्रत्याख्यानं च ॥४२३१॥

श्रुतप्रत्याख्यानं द्वेधा—

**पुव्वं णोपुव्वसुतं पच्चक्खाणं[4]ति पुव्वसुतमुत्तं[5] ।**
**आतुरपच्चक्खाणादियं च णोपुव्वसुतमुत्तं[6] ॥४२३२॥**

**पुव्वं णोपुव्वसुतमित्यादि** । पूर्वश्रुतप्रत्याख्यानम् - प्रत्याख्यानसंज्ञितं (तं) पूर्वं प्रत्याख्यानपूर्वं(र्वं)श्रुतप्रत्याख्यानम् । आतुरप्रत्याख्यानादिकमिति विस्तर आर्षग्रन्थेष्वेव । एवं श्रुतप्रत्याख्यानं गतम् ॥४२३२॥

---

१ भिक्ख अदाणम० हे । २ अस्मिन् प्रत्याख्याननिरूपणे श्रीवृत्तिकारः केवलं 'रोगिणो व्व' इत्यादिपदनिर्दिष्टं व्याख्यातवान् परन्तु 'भिक्खयराणमतिच्छा' इति पदं न व्याख्यातवान् । तद्व्याख्यानम् एवम्—भिक्षादीनाम् अदाने 'अतिच्छ'—'अतिगच्छ' इति—'अदित्सा' वा इति वचनम्—अतिगच्छप्रत्याख्यानम् अदित्साप्रत्याख्यानं वा' एतद्भावरूपं निरूपणम् हा० वृ० मु० पृ० ४७८, म० वृ० मु० पृ० ५७९, हे० वृ० मु० पृ० ५३१९ । अत्र मूलगाथायां सूचितः 'अतिच्छ'शब्दः 'अतिगच्छ' इति क्रियासूचकः अथवा 'अदित्सा' इत्यर्थसूचकः स्वीकृतः । ३ अत्र गाथायां 'रोगिणो व्व' इत्येव उपमासूचकः 'व्व' शब्दः 'इव'अर्थः प्रयुक्तः । यथा वैद्या रोगिणं प्रत्याख्याति—नायम् अधुना उपचारयोग्यः चिकित्सायोग्यो वा तथा यः कश्चित्-क्रियां प्रत्याख्याति क्रियानिषेधं करोति तस्य प्रत्याख्यानं प्रतिषेधप्रत्याख्यानम् इत्येवं भावः प्रतिभासते । ४ °क्खाण ति पु० को हे त । ५ "यत् प्रत्याख्यानसंज्ञितं नवमं पूर्वं तत् पूर्वश्रुतप्रत्याख्यानमुक्तम्"—मलधा० हे० वृ० मु० पृ० १३२० । ६ 'आतुरप्रत्याख्यानादिक तु श्रुतं नोपूर्वश्रुतप्रत्याख्यानमुक्तम्, तस्य पूर्वगतबाह्यत्वेन पूर्वश्रुतत्वायोगात्"—मलधा० हे० वृ० मु० पृ० १३२० ।

नोश्रुतप्रत्याख्यानमुच्यते—

**णोसुतपच्चक्खाणं मूलुत्तरगुणविधाणतो दुविधं ।**
**सव्वे देसे य मतं इध सव्वं मव्वसद्दातो ॥४२३३॥ दारं ।**

**णोसुतपच्चक्खाण**मित्यादि । मूलगुणप्रत्याख्यानम्, उत्तरगुणप्रत्याख्यानं च द्वेधा । एकैकमत्र सर्व-देशभेदात् द्विविधम् । इहाधिकृतं 'सर्वम्'[1] सामायिकादनन्तरं सर्वशब्दोपादानात् ॥४२३३॥

इदानीम् 'यावज्जीवम्' इति व्याख्यायते—

**जीवो त्ति जीवणं पाणधारणं जीवियं ति पज्जाया ।**
**गहियं न जीवदव्वं गहियं वा पज्जय[2]विसिट्ठं ॥४२३४[3]॥**

**जीवो त्ति** । जीवणं(नं) जीव इति क्रियाशब्दोऽयम्—जीवतीति जीवः आत्मपदार्थः । जीवनं च प्राणधारणं च जीवितं वेत्येकार्थत्वम् अथवा यदि जीवद्रव्यं जीवशब्देनोक्तं ततः प्रकरणाज्जीवनपर्यायविशिष्टं प्रत्येतव्यम्, अन्यथा दोषप्रसङ्ग इति ॥४२३४॥

तं दोषं दर्शयति—

**इहरा जावज्जीवं ति जीवदव्वगहणे मयस्सावि ।**
**पच्चक्खाणं पावइ गहियमओ जीवियं तं च ॥४२३५[4]॥**

**इहरा जावज्जीवं ति** । गतार्था ॥४२३५॥

तच्च जीवितं नामादिभेदम्—

**णामं ठवणा दविए ओहे भव तब्भवे य भोगे य ।**
**संजम[5] जसम[6]ऽस्संजमजीवितमिति तव्विभागोऽयं ॥७२९॥४२३६[7]॥ दारं ।**

**णामं ठवणा** इत्यादि । तस्य विभागः—नाम-स्थापने पूर्ववत् ॥४२३६॥

द्रव्यजीवितम्—

**दव्वं[8] हिरण्णमेसज्जभत्तपुत्ताति जीवितणिमित्तं ।**
**जं दव्वजीवितं तं दव्वस्स व जीवितमऽवत्था ॥४२३७॥ दारं ।**

---

१ अत्र पूर्वम् 'सर्व'शब्दस्य व्याख्यान समायानमेव अतः अत्रापि 'सर्वम्' इति योजनीयम् अर्थात् सर्वमूलगुणप्रत्याख्यानम् देशमूलगुणप्रत्याख्यानम् तथा सर्व-उत्तरगुणप्रत्याख्यानम् देश-उत्तरगुणप्रत्याख्यानम् इत्यादौ सर्वत्र 'सर्व'शब्दो योजनीयः । २ पज्जववि० **को** । ३ एषा गाथा नास्ति **जे** प्रत्याम् । ४ एषापि नास्ति **जे** प्रत्याम् । ५ संजम जस कित्ती जीविअं च, तं भण्णई दसहा ॥ **वी हा** मु० पृ० ४७९ **म** मु० पृ० ५८० प्र० । ६ जसमसंजम° **को**, जसमऽसंजम° **हे** । ७ एतां गाथां निर्दिश्य एतस्या व्याख्यानसमाप्तौ "अवयवार्थं तु भाष्यकारः स्वयमेव वक्ष्यति" इत्येव श्रीहरिभद्र-मलयगिरी सूरी ( हा० मु० पृ० ४७९ द्वि० । म०मु०पृ० ५८० प्र० ) निर्दिशतः, अतः एषा निर्युक्तिगाथा अनुमीयते अत एव अस्माभिरपि एषा निर्युक्तिगता स्वीकृता । मलधारी सूरिस्तु "इति द्वारगाथासंक्षेपार्थः" इत्येव सूचितवान् नान्यत् किमपि । ८ दव्वे **को हे त** ।

दव्वं हिरण्ण० इत्यादिः स्फुटार्थाः ॥४२३७॥

उपजीवितमिदम्—

**आयुस्सदव्वतया सामण्णं पाणधारणमिहोहो । दारं ।**

**भवजीवितं[२७८-द्वि०] चतुद्धा णेरइयादीण जाऽवत्था ॥४२३८॥**

**आयुस्सदव्वतया ।** आयुरिति प्रदेशकर्म, तद्द्रव्यसहचरिनं जीवस्य प्राणधारणं सर्वसंसारी(रि)जीवसामान्यमिति । अथ जीवितं ओघः सामान्यमिति । भवजीवितं चतुर्धा—नारकादीनां चतुर्णां या अवस्था स्थितिः—इत्यर्थः—तद् भवजीवितं नाम ॥४२३८॥

**तब्भवजीवितमोरालियाण जं तब्भवव्वोवण्णाणं ।**

**चक्कधरादीणं भोगजीवितं सुरगणाणं च ॥४२३९॥**

**संजमजीतमिसीणं अस्संजमजीवितं अविरताणं ।**

**जसजीवितं जसोणामतो जिणातीण लोगम्मि ॥४२४०॥ दारं ।**

**तब्भवजीवितमोरालियाण ।** तस्मिन् भवे जीवितं तद्भव(तद्भव)जीवितम्—भवस्य तदायुष्कबन्धस्य प्रथमसमयानुभावादारभ्य यावच्चरमसमयानुभ(भा)वः । स च औदारिकशरीरिणां तिर्यङ्-मनुष्याणा तद्भवोत्पत्तिमागताना तद्भवजीवितं भवति । ननु च भवजीवितमनन्तरं चतुर्धा वर्णितम्—नारकादिगतिसमापन्नानां या अवस्था स्वायुष्कस्थितिरिति । तस्य अस्य च को विशेषः ? उच्यते, तत्र स्वायुष्कबन्धकालात् प्रभृति सर्वैव भवस्थितिर्यथोस्व(यथास्व)मबाधासहिता भवजीवितम्, इह तु तद्भवजीविते अबाधोनिका कर्मस्थिति[ः] तद्भवोदयात् प्रभृति कर्मनिषेधकः(षेकः) तद्भवजीवितमिति महान् विशेषः । किमर्थमौदारिकाणामेव ? उच्यते, तेषां हि गर्भकालव्यवहितं योनि-निःसरणं जन्मोच्यते, तेन च गर्भकालेन सहैव तद्भवजीवितम् । वैक्रियशरीरिणावु(णां तू)पपादादेव कालान्तराव्यवहितं जन्मति(जन्मेति) ततःप्रभृति जीवितं स्वाबाधाकाल-सहितमिति कृत्वा तद्भवजीवितं औदारिकाणामेव सुप्रतिपादमिति । शेषं भागं(भोग) जीवितादि स्फुटार्थम् ॥४२३९-४०॥

**णरभवजीतमधिकतं विसेसतो सेसयं जधाजोगं[३] ।**

**जावज्जीवामि तयं तो[४] पच्चक्खामि सावज्जं ॥४२४१॥**

---

१ अत्र हे० मलधारी 'ओघजीवितम्' इति पदं सूचयति । २ तुलनीया अत्र श्रीहरिभद्र-सूरिवृत्तिः—तथाहि—' ननु च भवजीवितम् अनन्तरं चतुर्धा वर्णितम् । नारकादिगतिसमासन्नानां या अवस्था तत्र स्वायुष्कबन्धकालात् प्रभृति सर्वा एव भवस्थितिः यथास्वम् अबाधासहिता भवजीवितम् । इह तु तद्भवजीविते अबाधोनिका कर्मस्थितिः तद्भवोदयात् प्रभृति कर्मनिषेकः तद्भवजीवितम् इति महान् विशेषः''—हा० आ० वृ० मु० पृ० ४८० प्र० । ३ जोग्गं त । ४ ता को हे त ।

**जावदयं परिमाणे मज्जाताएऽवधारणे चेति ।**
**जावज्जीवं जीवणपरिमाणं जत्तियं मे त्ति ॥४२४२॥**

**णरभवजीतमधिकतं ।** मनुष्य एव संयतो भवतीति नरभवजीवितमधिकृतम् । स मनुष्यः एवं[1] प्रतिजानीति(ते)–यावदहं जीवामि तावत् सावद्यं योगं प्रत्याख्यामीति । यावच्छब्दोऽयं परिमाणा(णे) मर्यादायामवधारणे च द्रष्टव्यः । तत्र परिमाणे तावत् वचनं यावन्मम जीवितपरिमाणं तावत् प्रत्याख्यानमिति । मर्यादा-अवधारणयोरपि वचने ॥४२४१–४२॥

**जावज्जीवमिहारेण मरणमज्जाततो ण तक्कालं ।**
**अवधारणे वि जावज्जीवणमेवेह ण तु परतो ॥४२४३॥**

**जावज्जीवमिहा०** । यावज्जीवमी(मि)ति मरणमर्यादाया आरात्, न तत्कालम् न मरणकालमात्रम् । 'एव' इति अवधारणेऽपि–यावज्जीवनमेव तावत् प्रत्याख्यानम्, न तस्मात् परत इत्यर्थः ॥४२४३॥

एवमपि 'यावज्जीवम्' इति सूत्रेऽभिधातव्यम्, किमर्थं 'या(जा)वज्जीवाय' इति भण्यते ? तदर्थम्—

**जावज्जीवं पत्ते जावज्जीवाइ लिंगवच्चासो ।**
**भावप्पच्चयतो वा जा जावज्जीवता ताए ॥४२४४॥**
**जावज्जीवतया इति जावज्जीवाय वण्णलोवातो ।**
**जावज्जीवो जीसे जावज्जीवाए वा सा तु ॥४२४५॥**
**का पुण सा संबज्झति[२७९-प्र०]पच्चक्खाणकिरिया तया सव्वं ।**
**जावज्जीवाए हं पच्चक्खामि त्ति सावज्जं ॥४२४६॥**

**जावज्जीवं पत्ते ।** सत्यमेवम्, तथापि तु प्राकृते लिङ्गव्यत्यासो लाक्षणिक एव । अथवा 'यावज्जीवम्' इति अव्ययीभावसमासे–"यावदवधारणे"[२।१।८।पाणि०] इत्यनेन निर्वृत्ते[2], भावप्रत्ययः उत्पादितः–यावज्जीवं भावः, षष्ठ्याः "अव्ययादाप्सुप(पः)" [२।४।८२।पाणि०] इति सुप्लुक्, "तस्य भावस्त्व-तलौ" [५।१।११९।पाणि०] इति तलि स्त्रीलिङ्गता–यावज्जीवतया । तत्र अलाक्षणिकवर्णपदलोपात् जावज्जीवाय इति सिद्धम् । अथवा प्रत्याख्यानक्रिया अन्यपदार्थे इति तामभिसमीक्ष्य समासो बहुव्रीहि(हिः)–यावज्जीवो यस्या सा यावज्जीवा ॥४२४४ ४६॥

**जीवणमधवा जीवा जावज्जीवा पुरा व सा णेया ।**
**ताए पायतवयणे आवज्जीवाए ततिएयं ॥४२४७॥**

---

१ 'स एवं मनुष्यः त । २ प्रयोगे निष्पन्ने सति इति आशयः ।

पच्चक्खामि त्ति मतो उत्तमपुरिसेगवयणतो कत्ता ।
तिण्णि विधा जस्स तओ तिविधो जोगो मतोऽधिकतो ॥४२४८॥

जीवद्रमथवा । स्फुटार्थौ ॥४२४७–४८॥

तं तिविधं वितियाए पच्चक्वेयमिह कम्मभावातो ।
तिण्णि विधा जस्स तेयं तिविधं तिविधेण तेणं ति ॥४२४९॥

तं तिविधं । तिस्रो(स्रो) विधा यस्य योगस्य स त्रिविधः सावद्ययोगः, स च प्रत्याख्येय इति कर्म सम्पद्यते । कर्मणि च द्वितीया विभक्तिः । तं त्रिविधं योगम् त्रिविधेनैव, करणे तृतीयेति ॥४२४९॥

तेणेति साधकतमं करणं ततियाऽभिधाणतोऽभिमतं ।
केण तिविधेण भणिते मणेण वायाए काएणं ॥४२५०॥

तेणेति । गतार्था ॥४२५०॥

मणणं व मण्णते वाऽणेण मणो तेण दव्वतो तं च ।
तज्जोग्गपोग्गलमयं भावमणो भण्णते मंता ॥४२५१॥

**मणणं व** । 'मन ज्ञाने' मननम्, मन्यते वा तेनेति 'असुक्'प्रत्यये मनः, तच्चतुर्धा–नाम-स्थापना-द्रव्य-भावैः । द्रव्यमनस्तद्योग्यपुद्गलमयम् । भावमनः मन्ता जीव एव ॥४२५१॥

वयणं[1] व वुच्चते वाऽणयेति वाय त्ति दव्वतो सा य ।
तज्जोग्गपोग्गला से[2] गहिता तप्परिणता भावे[3] ॥४२५२॥

**वयणं व वुच्चते वा** । 'वच भाषणे' वचनम्, उच्यते वा अनयेति वाक् । सापि चतुर्धा एव नामादिभिः । तद् द्रव्यवाक् शब्दपरिणामयोग्यपुद्गलाः जीवपरिगृहीताः । भाववाक् पुनः त एव पुद्गलाः शब्दपरिणाममापन्नाः ॥४२५२॥

जीवस्स णिवासातो पोग्गलचयतो य सरणधम्मातो ।
कायोऽवयवसमाधाणतो य सो दव्वभावमयो ॥४२५३॥
तज्जोग्गपोग्गला जे मुक्का[२७९–द्वि०] य पयोगपरिणता जाव ।
सो होति दव्वकाओ बद्धा पुण भावतो कायो ॥४२५४॥
तेण तिविधेण मणसा वाया काएण किं तयं तिविधं ।
पुव्वाधिकतं जोगं ण करेमिच्चादि सावज्जं ॥४२५५॥

१ °णं वागुच्चए को हे त । २ जे को हे त । ३ भावो हे ।

**जीवस्स णिचासातो** । 'चिञ् चयेने(यने)' चयनम् चीयते वा अनेनेति "निवा-सा(म)वि(चि)ति-शरीरोपसमाधानेष्वादेश्चः कः" [३।३।४१।पाणि०]इति कायः । जीवस्य निवासात्, पुद्गलानां चयात्, पुद्गलानामेव केषाञ्चिन् शरणात्, तेषामेवावयवसमाधानात् कायः शरीरम् । सोऽपि चतुर्धा नामादिभिः । तत्र द्रव्य-भावकायौ–**तेजोग्गउमाला (तज्जोग्गपोग्गला)** ये शरीरत्वयोग्याः अगृहीताः, तत्स्वामिना च जीवेन मुक्ताः यावत् तं परिणामं न मुञ्चति(न्ति) तावद् द्रव्यकायः । सा(भा)वकायस्तु तत्परिणताः जीवबद्धाः, जीवं(व)सम्प्रयुक्ताश्च ते । मनो-वाक्–काययोगेन त्रिविधेन त्रिविधं पूर्वाधिकृतं सावद्यं योगं न करोमि, न कारयामि, कुर्वन्तमन्यं न समनुजानामि नानुमन्येऽहमिति ॥४२५३–५५॥

**पुव्वं व जमुद्दिट्टं तिविधं तिविधेण तत्थ करणस्स ।**
**तिविधत्तणं विवरितं मणेण वाआए काएणं ॥४२५६॥**

**पुव्वं व जमुद्दिट्टं** । यत् पूर्वमुदिष्टं त्रिविधं त्रिविधेन, तत्र अस्य अनन्तरस्य करणस्य विवरणं सूत्र एव कृतम्–मनसा वाचा कायेनेति । तस्य करणस्य कर्म प्रत्याख्येयं योगं सूत्र एव विवृणोत्याचार्यः 'न करोति(मि)'इत्यादि ॥४२५६॥

[किं] पुनः कारणमुद्देशक्रममतिलङ्घ्य व्यत्यासेन निर्देशः क्रियते ?—

**तिविधमिदाणिं जोगं पच्चक्खेयमणुभासए सुत्तं ।**
**किं पुणरुक्कमितूणं जं गं करणस्स णिद्देसो ॥४२५७॥**
**तो ण जधुद्देसं चिय णिद्देसो भण्णते णिसामेहि ।**
**जोगस्स करणतंतोवदरिसणत्थं विवज्जासो ॥४२५८॥**
**देसितमेवं जोगो करणवसो णियतमऽप्पधाण त्ति ।**
**तब्भावे भावातो तदभावे चाऽप्पभावातो ॥४२५९॥**

**तिविधमिदाणिं जोगमित्यादि । तो ण जधुद्देसमित्यादि** । इह व्यत्यासे प्रयोजनम्-योगस्य करणं(ण)तत्रो(न्त्रो)पदर्शनार्थम्-योगः करणवस(श) इति । करणानां भावे योगस्य भावात् करणाभावे योगस्याप्यभावादिति करणप्राधान्यं व्यत्यास-निर्देशेन प्रख्याप्यते ॥४२५७–५९॥

---

१ "शरणात् प्रतिक्षणं च विशरणधर्मकत्वात्"–हे०वृ०मु०पृ० १३२६ । २ अत्र कोट्याचार्यवृत्तिगताया ४२७३ गाथाया विवरणं तुलनीयम्–मु० पृ० ९६३–९६४ । तथा 'किं पुनः कारणम् येन योगमुत्क्रम्य...करणस्य प्रथमं निर्देशः" इत्यादि अपि मलधारिहे० विवेचनमपि तुलनीयम्-गा० ३५३० मु० पृ० १३२८ । ३ °भासतो जे । ४ °वसा त ।

**तस्स तदाऽधारातो नकारणतो य तप्परिणतीतो ।**
**परिणंतुरणत्थंतरभावातो करणमेव तओ ॥४२६०॥**

**तस्स तदाधारातो** इत्यादि । योगस्य आत्मव्यापारस्य क्रियायाः तदाधारत्वात् मनो-वाक्-कायाधारत्वात् तत्कारणत्वात् नैर्जन्यत्वात् क्रियायास्तत्परिणतेः करणानां तथा क्रियारूपेण परिणतेः परिणतु(न्तु)श्च परिणामोऽनर्थान्तरमिति करणमेव योग इति ॥४२६०॥

**एत्तो च्चिय जीवस्स वि तम्मयता करणजोगपरिणामा ।**
**गम्मति णयंतरातो [२८०-प्र०]कताइ समए जतोभिहितं ॥४२६१॥**

**एत्तो च्चिय** इत्यादि । अत एव च परिणतुः(न्तुः) परिणामादनर्थान्तरत्वात् जीवस्यापि परिणतु(न्तु)स्तन्मयता करणात्मरूपत्वं करणानां कायादीनां योगत्वेन क्रियारूपेण परिणतेः गम्यते नयान्तरेणैकत्वम् ॥४२६१॥

यतः समये सिद्धान्तेऽभिहितं ज्ञापकमाह—

**आता चेव अहिंसा आता हिंसे त्ति णिच्छयो एस ।**
**जो होति अप्पमत्तो अहिंसओ हिंसओ इतरो ॥४२६२॥**

अहिंसा निरवद्ययोगः. आत्मा कायादिकरणपरिणत्येकरूपः, स तेन निरवद्ययोगेन परिणत आत्मैवाऽहिंसा। हिंसाऽपि सावद्ययोग आत्मैव, तथा परिणामात् । स चाप्रमत्त-योगः अहिंसक(कः), प्रमत्तयोगः पुनः पूर्वस्मादितरः, स एव हिंसको भवेत् ॥४२६२॥

**आहेकत्ते कत्ता कम्मं करणं ति विभागोऽयं ।**
**भण्णति पज्जायंतरविसेसणातो ण दोसो त्ति ॥४२६३॥**

**आहेकत्ते** । आहा(ह) चोदकः-यद्येकत्वम् कुतोऽयं विभागः एकस्य कर्त्ता, कर्म, करणमिति ? उच्यते, पर्यायान्तरविशेषणान्न दोषः ॥४२६३॥

भावितमेव पूर्वं तदेव स्मर्यते—

**एगं पि सव्वकारगपरिणामाणण्णभावयामेति ।**
**णाता णाणाणण्णो जध त्रिण्णेयादिपरिणामं ॥४२६४॥**

**एगं पि सव्वकारग०** । यदा आत्मा अन्ये(ज्ञाने)नोपयुज्यते तदा आत्मा ज्ञाता सन् कर्ता, स एव ज्ञानरूपपरिणामात् करणं ज्ञानम्, स एव आत्मा ज्ञानस्य 'स विषयः' इति स्वसंवेद्यतया ज्ञेयपरिणाम इति कर्म संवृत्तः । एव(वं) सर्ववस्तुष्विति न दोषः ॥४२६४॥

१ हिंसो त । २ एम त प्रतौ वृत्तिसहितायाम् । ३ तुलनीयमेतत्-"स एव हि स्वज्ञाने उपयुज्यमानः कर्ता"-मलधा० वृ० मु०पृ० १३२९ गा० ३५३८ ।

स य सावज्जो जोगो हिंसादीयो तयं सयं सव्वं ।
ण करेमि ण कारेमि य ण याणुजाणे करेन्तम्पि ॥४२६५॥
करणतिगेणेक्केक्कं कालतिगे तिघणसंखितमिसीणं ।
सव्वं ति जेतोऽधिकतं सीयालसतं पुण गिहीणं ॥४२६६॥

स य सावज्जो जोगो । स च सावद्ययोगः प्रसिद्ध एव हिंसादिः, तं स्वयं सर्वं न करोमीत्यादि एकैकं करणत्रिकेण मनसा, वाचा, कायेनेति त्रिविधो भवति । अतीताऽनागतवर्त्तमानकालत्रयसम्बन्धाच्च त्रिघनः[2] सप्तविंशतिर्भवति । एतद् ऋषीणां संयतानां सप्तविंशतिविधं सर्वमिति प्रतिज्ञातः । एतदेव असर्वं सप्तचत्वारिंशदधिकं शत(तं) भङ्गानां भवति ॥४२६५–६६॥

उक्तं च—

सीतालं भंगसतं पच्चक्खाणम्मि जस्स उवलद्धं ।
सो सामाइयकुसलो सेसा सव्वे अकुसला तु ॥४२६७॥
केइं भणन्ति गिहिणो तिविधं तिविधेण णत्थि संवरणं ।
तं ण जतो णिद्दिट्ठं पण्णत्तीए विसेसेतुं ॥४२६८॥

सीतालं भंगसतं इत्यादि । केइं भणन्ति गिहिणो । केचिद् ब्रुवते–गृहिणः श्रावकस्य त्रिविधं त्रिविधेन संवरणे नास्त्यनुमतिः, प्रत्याख्यानासम्भवात् । ततश्च सप्तचत्वारिंशत्शतभङ्गपूरणं न सम्भवतीति । नू(न्यू)नता शास्त्रस्य, तच्च न, यस्माद् नदिष्ट(तदिष्टं) विशेष्य श्रावकस्य व्याख्याप्रज्ञप्तौ त्रिविधं त्रिविधेन प्रत्याख्यानमिति । प्रमाणं चाङ्गप्रविष्टं सूत्रम्, गणधरदष्ट(ब्ध)त्वात् ॥४२६७–६८॥

तो किध णिज्जुत्तीए[3]ऽणुमतिणिसेधो त्ति सो सविसय[२८०–द्वि०]म्मि ।
सामण्णे[4] वण्णत्थ तु तिविधं तिविधेण को दोसो ॥४२६९॥

तो किध णिज्जुत्तीएऽणुमतिणिसेधो त्ति । उच्यते, निर्युक्तौ चतुर्दशपूर्वनिबन्धे श्रावकस्य स्वविषयेऽसौ[5] त्रिविधस्या(स्य) असम्भव उक्तः, अनुमतिं(ति)समनुज्ञानात्[6] । गुणव्रत–शिक्षादिषु तु सामान्येन त्रिविधं त्रिविधेनापि भवत्येव ॥४२६९॥

अन्ये पुन[:] ब्रुवते—

१ जओ गहियं त । २ "त्रयाणां यो घनः" (त्रिघनः)-कोट्या० वृ० मु० पृ० ९६६ गा० ४२८३ । ३ णिज्जुत्तीए हे । ४ °ण्णेणान्न° को °ण्णेणन्न° हे त । ५ स्वविषयादन्यत्र । "अन्यत्र तु विशेषतो विषयबहिर्भागे । त्रिविधं त्रिविधेन इति न दोषः"–हे०मु०वृ० पृ० १३३२ । ६ तुलनीयमेतत्—"ततः कथं प्रत्याख्याननिर्युक्तौ अनुमतिनिषेध उक्तः" दुविहं तिविहेण । पढमओ त्ति वचनात् ? उच्यते, स स्वविषये अनुमतिनिषेध उक्तः" इत्यादि कोट्या० वृ० मु० पृ० ९६७ गा० ४२८६ विवरणम् । तथा मल० हे० वृ० पृ० १३३२ गा० ३५४३ विवरणमपि ।

**पुत्तातिसंतनिणिमित्तमेत्तमेक्कादसिं पवण्णस्स ।**
**जंपंति केयि गिहिणो दिक्खाभिमुहस्स तिविधं ति ॥४२७०॥**

**पुत्तानिसंततितिणिमित्तमे०** । एकादशीमुपासकप्रतिमां प्रतिपन्नस्य दीक्षाभिमुखस्य गृहिणोऽपि त्रिविधं त्रिविधेन प्रत्याख्यानं भवतीति सिद्धा(द्धम) ॥४२७०॥

आह कश्चित्—

**जुत्तं संपतमेस्सं संवरणं कधमतीतविसयं तु ।**
**कधमउणवण्णभेतं कते व ण कधं मुसावातो ॥४२७१॥**

**जुत्तं संपतमेस्सं** । युक्तमेकान्नपञ्चाश(श)द्भेदं साम्प्रतिकविषयं प्रत्याख्यानम्, वर्त्तमानत्वात्। अथ अनागतविषयमेप्यदपि युक्तमेव एकोनपञ्चाशद्भेदम्, तस्य अनागतस्य निवार्गयिष्यमाणत्वात् ॥४२७१॥

यत् पुनरिदमतीतविषयं एकान्नपञ्चाशद्भेदं प्रत्याख्यानमेतद् अनिवृत्तै(अतिवृत्त)त्वात समाचरितत्वात् कथं मृषावादो न भवेत? इति उच्यते—

**णिन्दणमतीतविसयं ण करेमिच्चातिवयणतोऽभिहितं ।**
**अणुमतिसंवरणं वा तीतस्स करेमि जं भणितं ॥४२७२॥**

**णिन्दणमतं तविसयमित्यादि** । सत्यम्, अतीतविषयं न निवार्यते, वृत्तत्वात् किन्तु तद्विषयं यत् स्वयंकरणम्, यच्च परविषयं कारणम्, यच्चानुमननं कृतं तस्य निन्दाप्रयोगात निवृत्तिरभ्युपगता भवति, अनुमतेर्वा संवरणमईय(मतीत)विस(ष)यं सम्प्रति कुरोषी(करोमी)ति न दोषः ॥४२७२॥

**अधवा तदविरतीतो विरमे संपदमतीतविसयातो ।**
**संपतसावज्जातिव पवज्जतो को मुसावादो ॥४२७३॥**

**अधवा तदविरतीतो** । अथवा तस्याः अतीतविषयायाः अविरतेः सम्प्रति 'विरमेऽहम्'[इति] प्रतिज्ञायां नैव मृषावादः ॥४२७३॥

सम्प्रति सावद्ययोगविरता(ति)विवरण[म्]—

---

१ °मेक्कारसि को हे त । २ तुलनीयमेतत्–"वृत्तत्वेन समाचरितत्वात्"-कोट्या०वृ० मु० पृ० ९६७ गा० ४२८८। ३ तुलनीयमेतत्–"अणुमतिसंवरणं वा तीतस्स करोमि' इत्यादि वचनम्। द्रष्टव्यमत्र 'न करोमि, इत्यादिना अतीतस्य संवरणं करोमि" इत्यादि मलधा० वृ०मु०पृ०१३३३ गा०३५४६। ४ तुलनीयम्– 'विरमेऽहम्" इति प्रतिज्ञायाम्–कोट्या०मु० पृ०९६८।

**ण समणुजाणेन्ति गते करेन्तमण्णं पि जं सुतेऽभिहितं ।**
**संभावणेऽपिसद्दो तद्दिहोभयसद्दमज्झत्थो ॥४२७४॥**

**ण समणुजाणेंति।** न करोमि, न कारयामि, कुर्वन्तं न ममनुजानामि' इत्येतावता ग्रन्थेन गते 'अन्यमपि' इति अतिरिच्यते, तथा वा विविक्तेन सूत्रेण नार्थः, मु(उ)च्यते, साऽभिप्रायमिदम्- अनुक्तस्याऽप्यर्थस्य संग्रहार्थम्—यस्मात् सम्भावने शब्दोऽयम्, सोऽयम् 'अपि'शब्दः उभयशब्दमध्यस्थः एतत् करोमि–'यथा कुर्वतं(न्तं) नानुजानामि एवं कारयत्य न्त)मप्यन्यम्, अनुज्ञापयन्तमप्यन्यं नानुजानामि' इति ॥४२७४॥

अस्यार्थस्य संग्रहाय गाथाद्वयम्—

**ण करेन्तं पि त्ति ण कारवेन्तमपि णापि वाऽणुजाणंतं ।**
**ण समणुजाणे पि ण कारयामि अपि णाणुजाणावे ॥४२७५॥**
**अण्णं पि अप्पयं पिव संहसाकारातिणा पयत्तंतं ।**
**इह सव्वो संगहि[२८१ प्र०]तो कत्ताकिरियापरंपरओ ॥४२७६॥**

**ण करेन्तं पि त्ति। अण्णं पि अप्पयं पि।** गतार्था ॥४२७५–७६॥

**ण करेन्तं वा भणिते अपिसद्दा ण कतवंतमिच्चाति ।**
**समतीतमागमेस्सं तध ण करिस्सं तमिच्चादि ॥४२७७॥**

**ण करेन्तं वा भणिते** इत्यादि। यथा वर्त्तमानकाले 'कुर्वन्तमन्यं न समनुजानामि'इति, एवम् 'अपि'शब्दाद् अतीते काले कृतवन्तमपि, कारितवन्तमपि, तथा अनागतेऽपि काले 'करिष्यन्तमपि' आदिग्रहणात् ॥४२७७॥

**सव्वं पच्चक्खामि त्ति वा तिकालोवसंगहोऽभिहितो ।**
**अपिसद्दातो तस्सेव कत्तकिरियाभिधाणं पि ॥४२७८॥**

**सव्वं पच्चक्खामि त्ति वा।** 'सर्व(र्वं) प्रत्याचक्षेऽहम्' इति तृ(त्रि)कालो-[१] [प]संग्रहोऽभिहितः। 'अपि'शब्दात् तस्यैव कर्तृक्रियाभिधानसंग्रहे(हो)ऽपि कृतमिं(इ)ति ॥४२७८॥

अथ चौदकः—

---

१ एतत् प्रत्याख्याता वक्ति। २ °भिमओ को हे त। ३ 'तिकालोवसंगहो इति मूलपाठः। "अं.घनः त्रिकालोपसंग्रहोऽभिमतः"—कोट्या० वृ० पृ० ९६९ गा० ४२९५।

एवं सव्वस्मासेसविसयनोऽतीतणागतेसुं पि ।
पावति सव्वणिसेधो भण्णेति तं णावत्तातो ॥४२७९॥

एवं सव्वस्सासेसविसयनो । एवं सर्वशब्दस्याशेषविषयत्वात् अतीताऽनागतेष्वपि कालेपु सर्वात्मना निषेधः प्राप्नोति, तच्च न, कुत. ? ॥४२७९॥

यतोऽयमपवादोऽस्ति—

भूतस्स पडिक्कमणाभिधाणतोऽणुमतिमेत्तमागहितं ।
जावज्जीवग्गहणादेसस्स य मरणमज्जाता ॥४२८०॥

भूतस्स पडिक्कमणाभिधाणतो । भूतस्य विषयस्य प्रतिक्रमणाभिधानात् अनुमतिमात्रमागृहीतं भवति, तत् (यत) सावद्यं कृतं तस्मात् प्रतीपं क्रमामि—निवर्त्तेऽहमिति । यावज्जीवग्रहणाच्च एष्यतोऽपि कालस्यापवादः मरणमर्यादया—न परतोऽपीति ॥४२८०॥

अथवा जावज्जीवग्गहणातोऽणागतावरोधोऽयं ।
संपतकालग्गहणं ण करेमिच्चादिवयणातो ॥४२८१॥
भूतस्स पडिक्कमणादिणा य तेणेह सव्वसद्दोयं ।
णेयो विसेसविसयो जतो य सुत्तंतरेऽभिहितं ॥४२८२॥

अथवा यावज्जीवग्गहणातो । गाथाद्वयम् । अथवा 'सर्व'शब्दोऽयं सूत्र एव विशेषविषयोऽभिहितः—तद्यथा—'यावज्जीव'शब्दप्रयोगात् अनागताऽवरोधः । 'न करोमि' इत्यादिवचनाद् वर्त्तमानकालावरोधः । 'तस्य प्रतिक्रमामि' इति प्रतिक्रमणम् । भूतस्य निन्दनात् व्यतीतकालावरोधः । यतश्च सूत्रान्तरे तितप(त्रितय)मपि विशेष्यापदिष्टम् ॥ ॥४२८१-८२॥

समतीतं पडिकमते पच्चुप्पण्णं च संवरेति त्ति ।
पच्चक्खाति अणागतमेवं इधइं पि विण्णेयं ॥४२८३॥

समतीतं पडिकमने इत्यादिः स्फुटार्था ॥४२८३॥

तस्स त्ति स संवज्झति जोगो सावज्ज एव जोऽहि[२८१-द्वि०] गओ।
तमिति बितियाधिकारादऽभिधेये किमिह तस्सेति ॥४२८४॥
संबंधलक्खणाए छट्ठीएऽवयवलक्खणाए वा ।
समतीतं सावज्जं संवज्झावेति ण तु सेसं ॥४२८५॥

तस्स त्ति स संवज्झति जोगो इत्यादि । संबंधलक्खणाए इत्यादि । 'तस्स' इति अधिकृतो योगः सम्बध्यते । ननु च 'प्रतिक्रमामि' इत्यस्याः क्रियायाः सोऽधि-

१ करोमि० हे । २ जो गहिओ त ।

कृतो योगः कर्म, कर्मणि च द्वितीया विभक्तिः, अतः 'तम्' इत्यभिधेयः(ये) 'तस्य' इत्यभिधीयते, किमर्थमित्याह—प्रयोजनार्थं षष्ठी विवक्षातः प्रयुक्ता सम्बन्धलक्षणा, अवयवलक्षणा वा - योऽसौ योगस्त्रिकालविषयः तस्य सावद्यमंशमवयवं प्रतिक्रमामि, न शेषं वर्त्तमानमनागतं वा ॥४२८४–८५॥

**[1]अविसिट्ठं सावज्जं संवज्झावेन्ति केयि छट्ठीए ।**
**तं न प्पयोयणाभावतो तधा गंथगुरुतातो ॥४२८६॥**

**अविसिट्ठं सावज्जं** । केचित् पुनरविभागज्ञाः अविशिष्टमेव सामान्यं योगं सम्बन्धयन्ति, तं(तद्) न युज्यते, अविशिष्टस्य त्रिकालस्य प्रतिक्रमणप्रयोजनाभावात्, ग्रन्थगुरुत्वापत्तेश्च । अविशिष्टमपि सम्बन्ध्य पुनर्विशेषेऽवस्थापनीयस्तच्छब्द इति ग्रन्थगुरुता ॥४२८६॥

**पच्छित्तस्स पडिक्कमणतो य पायं च भूतविसयातो ।**
**तीतपडिक्कमणातो पुणरुत्तादिप्पसंगातो ॥४२८७॥**

**पच्छित्तस्स पडि०** । यदि तत् प्रतिक्रमणमेतत् प्रायश्चित्तमध्ये पठितम्, अतः प्रायश्चित्तमासेविते(ता)ऽतीतविषयमिति[2] गतत्वादतीतप्रतिक्रमणमिति न वक्तव्यमिह पुनरुक्तत्वप्रसङ्गात् ॥४२८७॥

**तम्हा पडिक्कमामि त्ति तस्सऽवस्सं कमामि सद्दस्स ।**
**भव्वमिह कम्मणा तं च भूतसावज्जओ[3] णऽण्णं ॥४२८८॥**

**तम्हा पडिक्कमामि** । तस्मादस्य 'प्रतिक्रमामि' इति शब्दस्य कर्मा[मणा] भवितव्यमवश्यम्, भूतं सावद्ययोगं मुक्त्वा नान्यत् कर्म भवितुमर्हति, तस्मात् 'तस्य' इत्यवयवलक्षणया षष्ठ्या संबन्धः ॥४२८८॥

**तिविधेणं ति[4] ण जुत्तं पडिपतविधिणा समाहितं जेण ।**
**अत्थविकप्पग्गहणाए गुणभावणत त्ति को दोसो ॥४२८९॥**

**तिविधेणं ति ण जुत्तं** । यद्येवं पुनरुक्तादिमयं परिह्रि(हि)यते ततस्त्रिविधेनेति [न] वक्तव्यम् यस्मात् प्रतिपदमभिहितमेव मनसा वाचा कायेनेति । उच्यते, अर्थविकल्पसंग्रहार्थं न पुनरुक्तम् अथवा गुणभावना पुनः पुनरभिधानाद् भवतीति न दोषः ॥४२८९॥

---

१ अवसिट्ठं त । २ इदमत्र तुलनीयम्–'प्रायश्चित्तस्य च प्रायो भूतविषयत्वात्-आसेवितसावद्ययोगविषयत्वात्'-मलधा० वृ० पृ० १२३७–३८ गा० ३५६१ । ३ °सामण्णतो जे । ४ तु म ।

**अधवा मणसा वाया काएण य मा भवे जधासंखं ।**
**ण करेमि ण कारमेमि य ण याणुजाणे य पत्तेयं ॥४२९०॥**

**अधवा मणसा वाया** कायेणेत्यभिहिते प्रतिपदं न करोमि, न कारयामि, नानुजानामि इति–"यथासंख्यमनुदेशः समानाम्" [ ] इति–यथासङ्ख्यक्रमनिष्टं मा प्रापदिति त्रिविधेनैकैकमुच्यते स्वशब्देनेति ॥४२९०॥

**तो तिविधं तिविधेणं भणंति पतिपदसमाणेणाहेतुं ।**
**ण करेमि त्ति पतिपदं जोगविभागेण वा सज्झं ॥४२९१॥**

**तिविधं तिविधेणमित्यादि** । अथवा न करोमीति योगविभागः क्रियते–न करोमि मनसा, वाचा, कायेन । ततो न कारयामि मनसा इत्यादि । नानुजाने मनसा इत्यादि योगविभागात् साध्यम् ॥४२९१॥

**अधव करेन्तं पण्णं ण स[२८२–प्र०] मणुजाणेऽपिसद्दतो णेयं ।**
**अत्थविकप्पणताए विसेसतो तो समायोज्जं ॥४२९२॥**

**अधव करेन्तं पण्णं** । अथ्व्य(वा) कुर्वन्तमप्यन्यमिति 'अपि'शब्दादेवंविधार्थं(र्थ)प्रकल्पना समायोव्वे(ज्ये)ति ॥४२९२॥

**भंते त्ति पुव्वभणितं तेणं चिय भणति किं पुणो भणितं ।**
**सव्वत्थ सोऽणुवत्तति भणितं चादिप्पउत्तो त्ति ॥४२९३॥**

**भंते त्ति पुव्वभणितं** । 'भंते !' पूर्वमभिहितं निगमस्य । अत एव चोदक आह–किं पुनर् 'भदन्त !' इत्युक्तम्, ननु पूर्वमेवानुवर्त्तिष्यते एवमर्थं वा आदौ प्रयुक्त इति ॥४२९३॥

आचार्य आह—

**अणुवत्तणत्थमेव य तग्गहणं णाणुवत्तणादेव ।**
**अणुवत्तंते विधयो जमेऽधिकता किंतु जत्तेण ॥४२९४॥**

**अणुवत्तणत्थमेव य** । अनुवर्त्तनार्थमेवायं पुनरनुस्मरणाय प्रयुक्तः । यतः परिभाषा "अनुवर्तन्ते च नामविधयो न चाऽनुवर्त्तनादेव भवन्ति, किं तर्हि ? यत्नाद् भवन्ति" [ ] स चायं यत्नः पुनरुच्चारणमिति ॥४२९४॥

---

१ 'समापणा' हे । २ "आदौ प्रयुक्तोऽर्थः सर्वत्र अनुवर्तते'—मलधा० वृ० मु० पृ० १३४०, गा० ३५६८ । ३ जमिह वयाए को हे त ।

अधवा समत्तसामाइयेक्किरियो तव्विसोधणत्थाए ।
तस्सातीयारणिवत्तणादिकिरियंतराभिमुहो ॥४२९५॥
जं च पुरा णिद्दिट्ठं गुरुं जधाऽऽवासयाइं सव्वाइं ।
आपुच्छितुं करेज्जा तदणेण समत्थितं होति ॥४२९६॥

अधवा समत्त० । जं च पुरा णिद्दिट्ठं । द्वे अपि स्फुटार्थे ॥४२९५-९६॥

सामाइयपच्चप्पणवयणो वाऽयं भदंतसद्दो त्ति ।
सव्वकिरियावसाणे भणितं पच्चप्पणमणेणं ॥४२९७॥

सामाइय० । अथवा सामायिकक्रियाप्रत्यर्पणवचनोऽयं 'भदन्त' शब्दः । अनेन चे(चै)तत् ख्यापितं भवति - सर्वक्रियावसाने गुरौ प्रत्यर्पणं कार्यमिति ॥४२९७॥

णेयं पडिक्कमामि त्ति भूतसावज्जतो णिवत्तामि ।
तत्तो य का णिवत्ती तदणुमतीतो विरमणं जं ॥४२९८॥

णेयं पडिक्कमामि त्ति । ज्ञेयं प्रत्यर्पणमनेनेति सम्बन्धः । अति[तीत]प्रतिक्रमणार्थमुच्यते—प्रतिक्रमामि—भूतादतीतात् सावद्ययोगान्निवर्त्तेऽहमित्युक्तं च भवति । तस्माच्च कीदृशी तिष्टंति(निवृत्ति)रिति ? उच्यते, यत् तदनुमतेर्विरमणम् ॥४२९८॥

[२८२-द्वि०] णिन्दामि त्ति दुगुंछे गरहामि तदेव तो कतो भेदो ? ।
भणति सामण्णत्थाभेदे 'दिट्ठो विसेसत्थो ॥४२९९॥

णिन्दामि त्ति । जुगुप्से इत्यर्थः । गर्हामीति च तदेवोक्तं भवति । एवं तर्हि को भेद एकार्थत्वे ? उच्यते, सामान्यार्थो(र्था)भेदेऽपीष्टो विशेषार्थो गर्हाशब्दः ॥४२९९॥

जध गच्छति त्ति गो सप्पति त्ति सप्पो समे वि गच्चत्थे ।
गम्मति विसेसगमणं तध णिन्दा-गरिहणत्थाण ॥४३००॥

जध गच्छति त्ति । यथा सामान्ये गमनार्थे गच्छतीति गौः, सर्पतीति सर्पः, तथापि गमनविशेषो गम्यते शब्दार्थादेव । एवमिहावि(पि) निन्दा-गर्हयोरिति ॥४३००॥

तं चार्थविशेषं दर्शयति—

सप्पच्चक्ख दुगुंछा तध णिन्दामि त्ति गम्मते समए ।
गुरुपच्चक्ख दुगुंछा गम्मति गरहामि सद्देणं ॥४३०१॥

१ °य किरिओ को हे त । २ णियत्तणा° जे । ३ णियत्तामि जे । ४ जा हे । ५ णियत्ती जे । ६ गरिहा° को हे । ७ इट्ठो को ।

**सप्पच्चक्ख** । स्वप्रत्यक्षं या जुगुप्सा सा निन्देति गम्यते समये । या तु गुरोः प्रत्यक्षं जुगुप्सा सा गर्हेति ॥४३०१॥

**एगत्थोभयगहणं भिसाऽऽरत्थं वे जमुतितं होति ।**
**कुच्छामि कुच्छामि तदेव णिन्दामि गरहामि ॥४३०२॥**

**एगत्थोभयगहणं** । ननु चैकार्थस्योभयग्रहणं पुनरुक्तं प्रसजतीत्यतो(त) आह– द(भृ)शाऽऽदरार्थे न दोषाय । उक्तं च–

अनुवा[वादा]दरवीप्साभृशार्थविनियोगहेत्वसूयासु ।
ईषत्संभ्रमविस्मयगणनास्मरणेष्वपुनरुक्तम्" ॥ [ ] अतो भृशार्थे वाऽऽदरार्थे च 'जुगुप्से जुगुप्से' इति यदुक्तं भवति, तदेवोक्तं निन्दामि गर्हामीति ॥४३०२॥

**भिसमातरतो व पुणो पुणो व कुच्छामि जमुदितं होति ।**
**पुणरुत्तमणत्थं वेह णाणुवातादरादीसु ॥४३०३॥**

**भिसमातरतो व पुणो** । गतार्था ॥४३०३॥

**किं कुच्छामऽप्पाणं अतीतसावज्जकारिणमसग्घं ।**
**अत्ताणमतणमधवा सावज्जमतीतजोगं ति ॥४३०४॥**

**किं कुच्छामप्पाणं** । किं जुगुप्से आत्मानमतीतमा(सा)वद्ययोगकारिणमश्लाघ्यम् । अथवा अत्राणम् अतीतसावद्ययोगं त्राणविरहितं जुगुप्से, सामायिकेनाधुना त्राणमिति । अथवा 'अत सातत्यगमने' अतनं अतीतसावद्ययोगं सततभवनप्रवृत्तिं निवर्त्तयामीति ॥४३०४॥

**विविधं विसेसतो वा भिसं सरामि त्ति वोसिरामि त्ति ।**
**छड्डेमि त्ति जमुत्तं तमेव समतीतसावज्जं ॥४३०५॥**
**[२८३-प्र०] भसातिविरमणाओ जधेह भणितम्मि वोसिरामि त्ति ।**
**तप्पडिवक्खच्चाओ गम्मति सामाइए चेवं ॥४३०६॥**

**विविधं विसेसतो वा** । व्युत्सृजामीति [वि]विधार्थो [विशेषार्थो] वा 'वि'– शब्दः, 'उत'शब्दो द[भृ]शार्थः, सृजामि त्यजामीत्यर्थः । विविधं विशेषेण वा भृशं त्यजामि व्युत्सृजामि अतीतसावद्ययोगम् । व्यवसृजामीति वा 'अव' शब्दः अधः- शब्दस्यार्थे विशेष[षे]णाधः सृजामीत्यर्थः । नन्वेवं सावद्ययोगपरित्यागात् 'करोमि

१ च को हे । २ सिरामि को हे त । ३ भिहितम्मि त । ४ 'वि'शब्दो विविधार्थो विशेषार्थो"–मलधा० वृ० मु० पृ० १३४३ गा० ३५७९ ।

भदन्त ! सामायिकम्' इति सावद्ययोगनिर्वृत्तिरुच्यते, तस्य व्यवसृजामि शब्दप्रयोगे वैपरीत्यमापद्यते, तन्न, यस्मात् मांसादिविरमणक्रियानन्तरं 'व्यवसृजामि' इति प्रयुक्ते तद्विपक्षत्यागो मांसभक्षणनिवृत्तिरभिधीयते, एवं सामायिकानन्तरमपि प्रयुक्ते 'व्यवसृजामि' शब्दे तद्विपक्षत्यागोऽवगंस्यते । स च तद्विपक्षसुगम एव ॥४३०५-६॥

**सम्मत्तातिमयं तं मिच्छत्तादीणि तव्विवक्खोऽयं ।**
**ताण विसग्गो गम्मति पभासिते वोसिरामि त्ति ॥४३०७॥**

**सम्मत्तातिमयं।** स्फुटार्था ॥४३०७॥

अथवा **'णिन्दामि'** इत्यादिबहुशब्द[1]: प्रयोगः साभिप्रायः—दशविधप्रायश्चित्त-सङ्ग्रहार्थं इति । तत इयं(दं) गाथायुगलम्—

**अहवाऽतिच्छियसावज्जजोगपच्छित्तसंगहत्थाय ।**
**संखेवतोऽभिधाणं[2] णिन्दामिच्चादिसुत्तम्मि ॥४३०८॥**
**णिन्दागरहग्गहणादालोयं[3]पडिक्कमोभयग्गहणं ।**
**होति विवेगादीणं छेतंताणं विसग्गातो ॥४३०९॥[4]**

**अहवाऽतिच्छियसावज्जजोग०। णिन्दागरहग्गहणा०** । तत्र निन्दा-गर्हाग्रहणादाद्यं प्रायश्चित्तत्रयं संगृहीतम्—आलोचनम्, प्रतिक्रमणम्, तदुभयमिति । 'व्यवसृजामि' इत्यनेन विवेकादीनां छेदान्तानां ग्रहणं कृतं भवति ॥४३०८-९॥

**एवं सुत्ताणुगमो सुत्तण्णासो सुतत्थजुत्ती य ।**
**भणिता णयाणुयोगद्दारावसरोऽधुणा ते य ॥४३१०॥**

**एवं सुत्ताणुगमो** इत्यादि । एवमनेन प्रपञ्चेन सूत्रार्थस्पर्शनात् सूत्रस्पर्शनिर्युक्तिः समाप्ता ॥४३१०॥

एषा च सूत्रानुगमपूर्विकेति सोऽप्युक्तः । सूत्रानुगमश्च निक्षेपोपोद्घातानुस्यूत इति निर्युक्त्यनुगमोऽपि समापितः । निर्युक्त्यनुगम-सूत्रानुगमाभ्यां द्वाभ्यां भेदाभ्यां अनुगमद्वारमुपवर्णितं तृतीयम् । तदनन्तरं चतुर्थस्य नयानुयोगद्वारस्यावसर इति । ते च नया अधुनोच्यन्ते—

**अत्थाणुगमंगं चिय तेण जधासंभवं तहिं चेव ।**
**भणिता तधावि पत्थुतदारासुण्णत्थमुण्णेहं ॥४३११॥**

---

१ 'बहवः शब्दा यस्मिन्' इति एतादृशः प्रयोग इति बोध्यः । अथवा 'बहुशब्दप्रयोग' इत्येवं संशोधने तत्पुरुष एव । २ विहाणं को हे त । ३ °लोयणपडि° जे । ४ 'तदेवं व्याख्यातं सामायिकसूत्रम् । तद्व्याख्याने चावसितोऽनुगमः' इति हे मु° पुस्तके पृ० १३४१ ।

अत्थाणुगमंगं चिय इत्यादि । ते चार्थानुगमाङ्गमिति अर्थव्याख्याने यथासम्भवमभिहिताः । तथापि प्रस्तुतचतुर्थद्वाराऽशून्यार्थमुन्नेष्ये इत्याचार्यः प्रथयति ॥४३११॥

**सामण्णमध विसेसो पच्चुप्पण्णं च भावमेत्तं च ।**
**पतिसद्दं च जधत्थं च वयणमिह संगहातीणं ॥४३१२॥**

**सामण्णमध विसेसो** । 'माङ् [मा]ने' । मानमिति परिच्छेदः, सदृशं मानं समानम्, सह मानेन वा समानम् । समानस्य भाव इति भावे घञ्[1] [ष्यञ्] कर्तरि षष्ठीं कृत्वा यदयम् [अस्य] समानो भवति--समानभवनं सामान्यं वचनं सङ्ग्रहनयस्य सर्वविकल्पातीतं भवनमात्रम् अस्ति' इति । 'शिष असर्वोपयोगे' विपूर्वोऽतिशये । अतिशयेनासर्वोपयोगः सामान्यप्रतिपक्षेण विशेषव्यवच्छेदात् यथा विवक्षितमर्पितं वस्तु विशेष एवावतिष्ठत इति व्यवहारस्य वचनम् 'ह[ञ्]त् [?]हरणे' 'पत(द) गतौ' उत्पूर्वं पत(द)मुत्पन्नम्--आविर्भावरूपत्वाद् वर्त्तमानम् उत्पन्नमुत्पन्नं प्रति प्रत्यु[त्पें]न्नं वचनं ऋजुसूत्रस्यातीतानागतयोरभावात् । भवनं भूतिर्भावः बाह्योऽभ्यन्तरश्च नाम-स्थापना-द्रव्य--भिन्नलिङ्ग-वाक्षे(क्चे)ष्टाकरणात् भावयुक्तवाची शब्द इति भावमात्रं वचनं शब्दस्य । 'शप आक्रोशे' । शपनं शब्दः । शब्दं प्रति वर्त्तत इति प्रतिशब्दम्, शब्दभेदेऽर्थभेदादुक्तमात्रार्थसमभिरोही समभिरूढ इति प्रतिशब्दं समभिरूढस्य वचनम् । अर्यतेऽसावर्थ इति यो योऽर्थो यथार्थं निश्चयवचनमेवंभूतस्य । 'संग्रहादीनाम्' इति । नैगमनयस्योभयवक्तव्यसङ्ग्राहिणः परस्परभिन्नार्थत्वात् नयत्वं प्रत्याख्यातमिति षण्णामेव संग्रहः । एवं शब्दार्थमात्रमभिहितम्, विस्तर उपोद्घातान्तर्गत उक्त एवेति न विस्तीर्यते॥४३१२॥

**एताण समोतारो दव्वट्ठिय-पज्जवट्ठियदुगम्मि ।**
**सेसेसु य संभवतो ताणं च परोप्परं कज्जो ॥४३१३॥**

**एताण समोतारो** । एतेषां समवतारः प्रायेण द्रव्यार्थिक-पर्यायार्थिकनयद्वये,

---

1 नाम्नः 'घञ्' प्रत्ययो न भवति किन्तु भावे 'ष्यञ्' प्रत्ययो भवति--५।१।१२४ पाणि० ।

एतदुक्तमेव । शेषेष्वपि च नयेषु तेषां समवतारो यथासम्भवमित्यभिहितः । ते च न सन्त्येव द्रव्यार्थिक-पर्यायार्थिकव्यतिरिक्ताः । कथमेतदिति ? यत उक्तम्—

"तित्थयरवयणसंगहविसेसपत्थारमूलवागरणी ।

दव्वट्ठिओ य पज्जवणयो य सेसा वियप्पा सिं" ॥ [सन्मतिप्रकरण-प्र० कां० गा० २] ते चामी संग्रहादयो विकल्पाः समवतारणीयाः येष्वेवेत्येषु समवतरन्ति । ते द्वितयादस्मादन्ये [न] वक्तव्या', तद्रूपते[तद्रूपास्ते], सत्यमेतत, तथापि तु नामविशेषादन्यत्वमिह तेषाम् । ते चामीति अर्पितानर्पितनयश्च अथवा एतावेव तौ द्रव्यार्थिक-पर्यायार्थिकौ संज्ञामात्रभिन्नौ, तस्मादन्येऽभिधीयन्ते--द्रव्यास्तिकः, मातृकापदास्तिकः, उत्पन्नास्तिकः, पर्यायास्तिकः इति । ज्ञाननयः क्रियानयश्च अथवा "सप्तनयशतान्यसंख्यातानि वा शतानि"[ ] इति आगमा[त् ] तेष्ववतारणीया यथासम्भवम्, परस्परतो वा तेषामेव संग्रहादीनामवतारः । यथोक्तम्—

"पञ्चानामेकस्मिन्नवरोधोऽन्वर्थपरिणतो(तौ) षण्णाम् ।
संज्ञान्तरे चतुर्णां वाङ्गविशेषे त्रयाणां तु ॥
प्रत्युत्पन्ने षण्णां शब्दस्त्वेवार्थनिश्चितद्वन्द्वः ।
संज्ञान्तरेषूपात्तस्य पश्चिमस्तद्गतसमासः" ॥ ४३१३॥ [ ] इति ।

**दव्वट्ठियस्स दव्वं वत्थुं पज्जवणयस्स पज्जायो ।**
**अप्पितमतं विसेसो सामण्णमणप्पितणयस्स ॥४३१४॥**

**दव्वट्ठियस्स दव्वं वत्थुं** । द्रव्यार्थिकस्य नयस्य द्रव्यं सामान्यं वस्तु, अन्यद् अवस्तु । पर्यायार्थिकनयस्य तु पर्यायो वस्तु । एतद्भावितमेव । अर्पितनयस्य मतं विशेष एव, अनर्पितनयस्य सामान्यमेव । अर्पितमुपनीतं विवक्षितं विशेषितमित्यर्थः । तद्विपरीतमनर्पितम् । अथ चैतन्नयषट्कमपि द्वेधा—व्यवहारनयो निश्चयनयस्ये[श्चे]ति द्विती(त)ये संगृहीतम् ॥४३१४॥

तत्र—

**लोकव्ववहारपरो ववहारो भणति कालओ भमरो ।**
**परमत्थपरो मण्णति णेच्छइओ पंचवण्णो त्ति ॥४३१५॥**

[लोकव्यवहारपरो । ] व्यवहारनयस्य वचनं प्राधान्ये बहुत्वया(त्वे वा) अनुप्रवर्त्तते,अन्यत् तत्र सम्भवदपि नाङ्गीकरोति सूक्ष्मभेदाऽशक्याभिधानात् । तत एवं ब्रवीति–कृष्णत्वप्रधानः कृष्णो भ्रमरः । नैश्चयिकनयस्तु परमार्थपरः, तत्र सन्निहितं कथमपह्नोतुं शक्यमिति सर्वस्कन्धानां पञ्चवर्णत्वात् पञ्चवर्णो भ्रमरः ॥४३१५।

**अधवेगणयमतं चिय ववहारो जण्ण सव्वधा सव्वं ।**
**सव्वणयसमूहमतं विणिच्छयो जं तधाभूतं ॥४३१६॥**

**अधवेगणयमतं चिय ।** अथवैकनयमतं सर्वं व्यवहारः, तस्याऽसत्यत्वात्, शेषव्युदासेन जात्यन्धगृहीतमुसलाकारहस्तिवचनवत् । सर्वनयसमूहमतं तु नैश्चयिकवचनम् यथाभूतत्वात्, चक्षुष्मत्परिगृहीतयथार्थवादिसर्वावयवाकारहस्तिवचनवत् ॥४३१६॥

**णाणाहीणं सव्वं णाणणयो भणति किं व किरियाए ।**
**किरियं करणणओ उण तदुभयगाहो य सम्मत्तं ॥४३१७॥**

**णाणाहीणं** सव्वमित्यादि । सर्वे पदार्थाः ज्ञानेन 'तथारूपाः' इति परिच्छिद्यमानाः सन्ति, वन्ध्यापुत्रे ज्ञानाभावादभावत्वमिति ज्ञानाधीनं सर्वमिति ज्ञाननयः। क्रियाऽपि ज्ञायमानैव आत्मानं लभ्य(भ)ते इति ज्ञानाधीना, ततः का क्रिया नाम ? क्रियानयो ब्रवीति–यत् त्वयोच्यते सर्वे पदार्था ज्ञानाद् भवन्ति–पदार्थत्वमनुभवन्ति, नन्वेषा क्रिया 'भवन्ति'(न्तो,इत्याख्यातशब्दवाच्या यथा च अस्तिर्भवन्तीपरःप्रथम पुरुषः प्रयुज्यमानोऽप्यस्तीति गम्यते, ज्ञानमपि भावे ल्युङ्(ल्युट्), करणे वा, उभयं क्रियाप्रधानम्, कारकत्वात्। तस्मात् क्रियाधीनं सर्वमिति क्रियानयः । उभयमपि परस्परनिरपेक्षमकिञ्चित्करं प्रत्येकपङ्ग्वन्धदृष्टान्ताद्। उप(भय)मुभयसापेक्षं सम्यक्त्वम्, पङ्ग्वन्धयुक्तिवत्, रथचक्रद्वययोगवत्, उत्तराधरारणिवत्। तदुभयग्रहणं सम्यक्त्वमिति ॥४३१७॥

**णातम्मि गेण्हितव्वे अगेण्हितव्वम्मि चेव अत्थम्मि ।**
**जतितव्वमेव इति जो उवदेसो सो णयो णामं ॥७३४॥४३१८॥**

**सव्वेसिं पि णयाणं बहुविधवत्तव्वतं णिसामेत्ता ।**
**तं सव्वणयविसुद्धं जं चरणगु[२८४- प्र०]णट्ठितो साधू ॥७३५॥४३१९॥**

१ जहाभूयं को हे त । २ णाणातीणं जे । ३ किच्छकिं जे । किं थ किं को। ४ किरियाए को ।

णातम्मि गेण्हितव्वे । सव्वेसिं पि णयाणं इत्यादि सूत्रगाथा-द्वयम् ॥४३१८-१९॥

एतस्य विवरणं भाष्यगाथा अष्टौ—

णातो त्ति परिच्छिण्णो गेज्झो[1] जो कज्जसाधओ[2] होति ।
अग्गेज्झो[3]ऽणुवकारी अत्थो दव्वं गुणो[4] वा वि ॥४३२०॥

जतितव्वन्ति पयत्तो कज्जो गेज्झम्मि[5] गेण्हितव्वो त्ति ।
अग्गेज्झो[6]ऽणादेयोऽवधारणे चेव सद्दोऽयं ॥४३२१॥

इति जो त्ति एवमिह जो उवदेसो जाणणाणयो सो त्ति ।
सो पुण सम्मद्दंसणसुत्तसामइयाइं बोद्धव्वो ॥४३२२॥

सव्वे त्ति मूलसाहप्पसाहभेदाऽपिसद्दतो तेसिं ।
किं पुण मूलणयाणं अधवा किमुताऽविसुद्धाणं ॥४३२३॥

सामण्णविसेसोभयभेता वत्तव्वता बहुविध त्ति ।
अधवा णामातीणं इच्छति कं[7] णओ साधुं ॥४३२४॥

सोतुं सद्दहितूण य णातूण य तं जिणोवदेसेणं ।
तं सव्वणयविसुद्धन्ति सव्वणयसम्मतं जं तु ॥४३२५॥

चरणगुणसुट्ठितो होति साधुरेस किरियाणयो णाम ।
चरणगुणट्ठितं जं सव्वणया[8] बेन्ति साधु त्ति ॥४३२६॥

सो जेण भावसाधू सव्वणया जं च भावमिच्छंति ।
[२८४-द्वि०] णाणकिरियाणयोभयजुत्तो य जतो सता साधू ॥४३२७॥

णातो त्ति परिच्छिण्णो इत्यादि यावत् सो जेण भावसाधू । ज्ञाते ग्रहीतव्येऽर्थे अग्रहीतव्ये च ज्ञानपूर्विका क्रियेति 'ज्ञातः' परिच्छिन्नोऽर्थः—अवबुद्ध इत्यर्थः—ग्राह्यः कार्यस्येष्टस्य साधकः, अग्राह्योऽनुपकारी इष्टार्थानुपयोगी । अर्थश्च द्रव्यं गुणो वा अर्यमाणत्वादुपयुज्यमानत्वात् । 'यतितव्यम्' इति प्रयत्नः कार्यः—

---

१ गेज्झो° को हे । २ कज्जकरओ को । ३ अग्गेज्झो को हे । ४ गुणा को । ५ गेज्झ° को हे । ६ अगिज्झो° हे अग्गेज्झो° को, अग्गिज्झो° त । ७ कं णयं सा° जे । ८ चरणनया को हे त ।

बाह्योऽर्थ' आदेयः परिग्रहीतव्यः, अग्राह्योऽनादेय इति एष यत्नः । 'एव'शब्दोऽवधारणे—यतितव्यमेव—नालस्यं कार्यम्—प्रमादस्त्याज्य इत्यर्थः । यतितव्यमेवेति य उपदेशः स ज्ञाननयो नाम । स च चतुर्विधः(ध)सामायिके सम्यक्त्व-श्रुतसामायिकद्वयान्तर्भावः । यतनं प्रयत्नः क्रियानयः चरित्रसामायिकं चरित्राचरित्रसामायिकं च । 'सर्वेषाम्' इति मूलनयानां तच्छाखा-प्रशाखाभेदानाम् 'अपि' शब्दाद् मूलनयानां किमुत तद्भेदानाम् अथवा तद्भेदानां शुद्धानां वक्तव्यं श्रुत्वा किमुताऽशुद्धानां सर्वग्राहिणाम्, सामान्यमेव, विशेषा एव, उभयमेवानपेक्षम्, अवक्तव्यमेव वा, तत्संयोगभेदेन वा बहुविधा वक्तव्यता वचनगोचरता । अथवा वक्तव्यता नामादीनां कः कं साधुमिच्छतीत्यादिर्बहुविधा वक्तव्यता, तां निशम्य श्रुत्वा, श्रद्धाय च ज्ञात्वा जिनोपदेशेन तत् सर्वनयविशुद्धं वचनं सर्वनयसम्मतं यच्चरणगुणस्थितः साधुरिति एष क्रियानयो नाम, क्रियाप्रधानत्वात् । अन्वर्थपरिणतौ षण्णामपि नयोभयसम्मतः सर्वसाधुरिति । एकनयसमर्पितस्तद्विवक्षायामेव साधुः अन्यनयविवक्षयामसाधुरिति उभयनयपरिग्रहः परमार्थ इति ॥४३२०–२७॥

**इय परिसमापितमिदं सामाइयमत्थतो समासेणं ।**
**वित्थरतो केवलिणो पुव्वविओ वा पभासंति ॥४३२८॥**

इय परिसमापितमिदं । 'इय' एवम्, 'परिसमापितम्'—परिसमाप्तिं नीतम्, 'इदम्'इति बुद्धिस्थं प्रत्यक्षमिव सामायिकं निर्दिशति, 'अर्थतः' इति व्याख्यानतः न सूत्रतः, सूत्रं भगवद्भिर्गणधरैर्दृष्ट(ब्ध)मिति, 'समासेन' इति संक्षेपतः, विस्तरस्याशक्यत्वात् । किं सर्वस्यैव विस्तराशक्यत्वम् ? आहोस्वित् कस्यचिच्छक्तिरस्तीति ? तां प्रदर्शयन्ति—'विस्तरतः' 'केवलिनः' सर्वावरणक्षयोद्भूता(त)विमलस्वाभाविकप्रकाशाः प्रकर्षेण 'भाषन्ते' सर्वद्रव्यपर्यायानन्तगमसहितत्वात् पूर्वधराः स्वावरणक्षयोपशमजातप्रकृष्टश्रुताः 'प्रभाषन्ते' व्याख्यानयन्ति सर्वनयानुयोगद्वारसमवतारगम्भीरार्थप्रकाशनात् ॥४३२८॥

---

१ वाक्यादौ 'स च' इति निर्देशात् अत्र 'अन्तर्भाव'स्थाने 'अन्तर्भूत'इति पदं समुचितम् ।

(म्य) अर्थम्, अनेन 'परिकर्मितबुद्धिः' 'योग्यः' 'भवति' सामायिकानुयोगव्यतिरिक्तस्य 'शेषानुयोगस्य' श्रवणेऽनुप्रवचने च ॥४३२९॥[1]

इति परमपूज्यजिनभद्रगणिक्षमाश्रमणकृतविशेषावश्यकप्रथमाध्ययन-
सामायिकभाष्यस्य विवरणमिदं समाप्तम् ॥

सूत्रकारपरमपूज्यश्रीजिनभद्रगणिक्षमाश्रमणप्रारब्धा समर्थिता श्रीकोट्याचार्यवादिगणिमहत्तरेण श्रीविशेषावश्यकलघुवृत्तिः ॥श्री॥

संवत १४९१ वर्षे द्वितीयज्येष्ठवेदि ४ भूमे[2] श्रीस्तम्भतीर्थे[3] लिखितमस्ति ॥

---

१ 'बहुलदिवसरूपं भावं संक्षेपेण सूचयितुं पूर्वैर्लिपिकारैः शिलालेखलिपिकारैर्वा व० दि० इति पदं संकेतितमेवम्—'बहुलपक्ष'शब्दस्य आदिभूतः बकारः अत्र 'व' कल्पितः स च ब-वयोः साम्यात् बहुलपक्षं सूचयति, 'दिवस'शब्दस्य आदिभूतः 'दि'शब्दः अत्र दिवसवाचकः। एवमेव शु०दि० पदम्। शु—शुक्ल, दि—दिवस, इत्येवंरीत्या शुक्लपक्षस्य बोधकं ज्ञेयम्।
२ 'भूमे' इति लोकभाषाप्रयोगः। 'भौमे' इति पण्डितभाषाप्रयोगः। भौमे इति मङ्गलवारे।
३ वर्तमानकाले 'खंभात'नाम्ना प्रसिद्धम् जलमार्गनगरम्—बन्दरम्—तीर्थम्।

# विशेषावश्यकभाष्यगतनिर्युक्तिगाथानामकाराद्यनुक्रमः ।

[ प्रथमः गाथाङ्कः, द्वितीयः पृष्ठाङ्कः ]

# २. विशेषावश्यकभाष्यगाथानामकाराद्यनुक्रमः ।

[ प्रथमाङ्कः गाथाङ्कः, द्वितीयः पृष्ठाङ्कः ]

एवं घणिपरिणामं १४९ ३६
एवं पच्चक्खादि° २२०६ ३९०
एवं पदाण णिवहो १०७५ २०४

# विशेषावश्यकभाष्यवृत्तौ उद्धृतवचनानि

[अङ्काः पृष्ठसूचकाः]

# विशेषावश्यकभाष्य-वृत्तिगताः विशेषशब्दाः ।

[ अङ्काः पृष्ठसूचकाः ]

द्वितीय-तृतीयभागयोः

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २९० | १७ | जयस्स | जायस्स | ३५२ | २४ | घः श | घःश |
| २९१ | १२ | गुरुवयंसा | गुरु वयंसा | ३५३ | २३ | कुन्यैक | कल्यैक |
| ,, | १३ | सिप्पकम्मे | सिप्प कम्मे | ३५४ | १ | ,, | . |
| २९६ | टि० १ | यंम्मि | यम्मि | . | २१ | धन | घन |
| २९९ | ८ | णेयोस | णेयो स | ३५८ | ७ | त्ता ण | त्त ण |
| ३०१ | २५ | मल्लिस | मल्लिस्स | ३६३ | २४ | म्मनोम् | म्मनोऽम् |
| ३०२ | २२ | पत्ते अंपि | पत्तेअं पि | ३६६ | ३ | वानारऽऽम | वानाऽऽरम |
| ३०३ | ४ | सुणत्थं | सुण्णत्थं | ,, | १७ | कर्तान्तरं | कर्त्रन्तरं |
| ३०४ | १३ | खोतरदाण | खोतरमदाण | ३६८ | १ | वा वसन्तं | वाव सन्तं |
| ३१० | टि० ४ | सद्दुलो | सद्दूलो | , | २१ | दाहुण | दाहुरण |
| ३१३ | ४ | सह | साह | ३७० | ११ | यैरूप | यैरुप |
| ३२४ | २ | सव्विड्ढय | सव्विड्ढीय | ,, | १२ | धायि श | धायिश |
| ,, | १५ | पडिपर्तेहिं | पडितेहिं | ३७१ | १३ | यन्दिहेद्रिय | यदिहेन्द्रिय |
| ३२५ | १८ | मूरो तय | सूरोतय | ३७२ | १० | कतृक | कर्तृक |
| ३२६ | ४ | संच्छरे | संवच्छरे | ३७५ | १८ | प्रभत | प्रभूत |
| ,, | २१ | वित्थिण्णापण्ण | वित्थिण्णा पण्ण | ३७६ | ४ | सौक्ष्म्यात्मनो | सौक्ष्म्यात् मनो |
| ३२८ | १८ | पयसवसु | पयस वसु | ३७८ | १० | वानुऽरूपः | वाऽनुरूपः |
| ,, | २० | वोसट्ठमो | वोसट्ठ मो | ३८० | १३ | गाह । | गाहा । |
| ३३० | २ | गसुढा | ग सुढा | ३८१ | ४ | दिः | दि |
| ,, | १२ | सुवण्ण खल | सुवण्णखल | ३८२ | २५ | किञ्चत् | किञ्चित् |
| ,, | १३ | ते य | तेय | ३८४ | ११ | जातो भयं | जातोभयं |
| ,, | १७ | न्दकुमा | न्द कुमा | ३८५ | १९ | जयमानो | जायमानो |
| ३३१ | ४ | आवंत्ते | आवत्ते | ,, | २४ | तिणिच्च | ति णिच्च |
| ३३३ | १ | दढ | दढ | ३८६ | ८ | भवांच्छू | भवाच्छू |
| ३३४ | २ | सुभो मअजलि | सुभोम अंजलि | ,, | २४ | समताविप | समता विप |
| ३३८ | टि० ११ | पूर्वं | पश्चात् | ३९० | १ | जीही | जिही |
| ३४० | ३ | व्वेजा | व्वेज्जा | ,, | २० | रोइयाछिक | रोइया छिक |
| ३४४ | १४ | संशया | संशयो | ३९१ | ४ | यक्कु | याक्कु |
| ,, | २१ | वा वसन्तं | वाव सन्तं | ३९४ | १९ | पवज्ज | पव्वज्ज |
| ३५० | १७ | नस्ति | नास्ति | ३९७ | ११ | तदाऽऽनादि | तदानादि |
| ३५१ | २१ | मत्वात् | मत्त्वात् | ४०८ | १८ | हेतु | होतु |

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४११ | ९ | वबुध्ते | वबुध्यते |
| ,, | १० | मोक्षा | मोक्षौ |
| ४१३ | १ | विवणरणेन | विवरणेन |
| ४१४ | ४ | गंतु | गन्तुं |
| ,, | २१ | धानापि | धानपि |
| ,, | २४ | तदनी | तदार्मी |
| ४२१ | १९ | प्रायो कंपित ! | प्रायोऽ-कम्पित ! |
| ४२३ | २६ | सिद्धि | सिद्धिः |
| ४३१ | २३ | पुण्यस्य | पुण्यस्य, |
| ४४६ | टि० २ | इत्यनन्तरं | भेदा वा- इत्यस्मात् परं 'अन्न |
| ४५८ | ५ | तरम | तरम (द) |
| ४६२ | १२ | व[र्ति]तुं | व[र्ति]तु |
| ४७२ | ७ | वेदइत्ता | [अवेदइत्ता] |
| ४८१ | १७ | मेत्त | मेत्तं |
| ४८४ | २१ | दभन्नौ | दभिन्नौ |
| ४८५ | १६ | तप्र | तत्प्र |
| ४८६ | १७ | वायका | वायिका |
| ४८९ | १६ | अल्प्र | अण्प्र |
| ५०४ | टि० ८ | प्रति | इति |
| ५०६ | ६ | विरियमहो | विरियं महो |
| ५१४ | १७ | को ॥ | को |
| ५१६ | ११ | सामण्णतो | सामण्णातो |
| ,, | २१ | हारी | हारो |
| ५१७ | ९ | मात्रंत त् | मात्रं तत् |
| ५२० | २५ | सद्भावदयो | सद्भावादयो |
| ५२१ | २० | पुल्लिङ्गेन | पुँल्लिङ्गेन |
| ५२२ | ५ | अपेक्ष्यते | अपेक्ष्य(क्ष)ते |
| ,, | १२ | गतर्था | गतार्था |
| ,, | २५ | पुल्लिङ्ग | पुँल्लिङ्ग |
| ५२३ | ७ | आकासे | आकाशे |
| ,, | १७ | किंच | किंच |

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५२६ | २५ | त्वभि | त्वमि |
| ,, | ,, | तस्मादेशि | तस्माद् देशि |
| ५२८ | १८ | दर्शि राज | दर्शिराज |
| ,, | २२ | ज्ञ इ वो | ज्ञः)इवो |
| ५३० | १५ | यथा सुख | यथासुख |
| ५४० | ११ | चेष्यति | चेष्यति |
| ५४९ | २४ | एतत् प्रमाण | एतत्प्रमाण |
| ५५७ | १६ | प्रासमु | प्राससमु |
| ५६१ | १४ | मजगे | मजोगे |
| ,, | १८ | चित्तं | चित्तं |
| ५६८ | ११ | भावितार्थाः | भावितार्थ |
| ,, | १७ | —क्लेश | —क्लेश(द)— |
| ५७१ | टि० ९. | त्तीर | त्तीए |
| ,, | टि० १२ | मासिहिइ | मासिहिइं |
| ५७४ | ७ | [प्रयज्क्लेति] | [प्रयन्क्लेति] |
| ,, | १६ | विभू देसो | वि भूदेसो |
| ,, | टि० १४ | बृ० का० | बृ० कप्प० |
| ५७९ | ५ | एवं विध | एवंविध |
| ५८६ | २५ | मुच्छा | मुच्छा |
| ५९३ | ४ | आर्यिक | आर्यिक |
| ५९४ | २२ | एवं तु हजित | एवं तुह ण जित |
| ,, | २२ | गतर्था | गतार्था |
| ६०१ | १३ | र्थैः | र्थैः |

## तृतीयभागे

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६१४ | २२ | द्वा | द्वौ |
| ६१६ | २८ | (त्तिया) | (त्ति या) |
| ६२८ | टि० ११ | मुच्छो | मुच्छुओ |
| ६३१ | ७ | सेवंणाए | सेवणाए |
| ६४४ | १६ | त्रय | त्रेय |
| ६५१ | १६ | तं[६] | तं |
| ६५९ | २४ | [२३]स तंणि | [२]स [३]तंणि |
| ६६० | १८ | बुद्धिम | बुद्धिमं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६८७ | २४ | भिहतुभिः | भिर्हेतुभिः |
| ६९० | २५ | गुरवो | गुरवो |
| ६९३ | टि० ६ | अत्र स्या गाथायाः अपूर्वम् | अत्र अस्या गाथायाः पूर्वम् |
| ७०६ | टि० ५ | गाथताः | गाथातः |
| ७२० | १० | रयमे(ए)व | रयमेव |
| ७२६ | ६ | लोगत | लोगंत |
| ७३१ | ९ | जीवत् | जीववत् |
| ७३३ | १८ | उच्चै-गो | उच्चै-र्गो |
| ,, | २१ | दु चरि | दुचरि |
| ,, | २२ | संभवतो | संभवतो |
| ७३८ | १६ | भविय[१] | भविय[४] |
| ७४२ | २८ | ३ °ण य | ४ °ण य |
| ७५२ | टि० ३ | बुद्धिन | वुद्धिर्न |
| ७५४ | १४ | ॥३७६२॥ | ॥६७७॥ ३७६२॥ |
| ७५५ | १७ | बंधणच्छेत | बन्धच्छेत |
| ७६२ | ३ | पडिसि | पडिसिद्धं |
| ,, | ४ | कार वेक्खा | कारावेक्खा |
| ७६४ | २ | अ | जं |
| ,, | १४ | सु हं | सुहं |
| ७६६ | १ | धंम्म[१] | धम्म. |
| ७६७ | टि० ६ | हयय | हृदय |
| ,, | ,, ,, | अनुमुञ्चन् | अनुन्मुञ्चन् |
| ७७९ | २ | ॥३९०२॥ | ॥७०१॥ ३९०२॥ |
| ,, | ३ | ॥३९०३॥ | ॥७०२॥ ३९०३॥ |
| ,, | ४ | ॥३९०४॥ | ॥७०३॥ ३९०४। |
| ,, | ५ | ॥३९०५॥ | |
| ,, | ६ | ॥३९०६॥ | ॥७०४॥ ३९०५॥ |
| ,, | ७ | ।३७०१- | ॥३९०१- |
| ,, | १० | ॥७०१॥३९०७॥ ॥७०५॥ ३९०६॥ इतः परं सर्वत्र निर्युक्ति-भाष्य-गाथाया अङ्के कृतशोधनानुसारं शुद्धिः कार्या ॥ | |
| ७७३ | १९ | °दारं | दारं |
| ,, | २१ | पढमो | पढमा |
| ७७५ | ७ | साधू | साधू |
| ७८२ | १४ | णादि | °णादि |
| ७८३ | २ | सकतं | सकयं |
| ७८८ | १० | विमुत्ता | विमुत्ता |
| ७८९ | ९ | चेव | चेव[४] |
| ७९५ | टि० ३ | बतर | वतर |
| ७९८ | २ | गुष्कं | गुञ्क |
| ८०० | १० | काले | काले[१] |
| ८०१ | ७ | व्वि | व्वि |
| ८०२ | १२ | जघन्यः | जघन्यः |
| ,, | १६ | णा (णां) | णा(णां) |
| ८०९ | १४ | मपिक्रिय | मपि क्रिय |
| ८१७ | १५ | मिय | मियं |
| ८२१ | २ | वेव | वेव |
| ,, | १८ | चरिता] | चरित] |
| ८२२ | | प्रथमं टिप्पणं न युक्तम् । | |
| ८२५ | १४ | सामइयं | सामइयं |
| ८२८ | १५ | मण ति | मणति |
| ८३६ | ४ | (सतो) | (सत) |
| ८३७ | टि० २ | पदे | पदं |
| ८३८ | १४ | मज्ञ | माज्ञ |
| ८३९ | २४ | (वें)व | (वें) व |
| ८४० | ७ | वात्ता | वत्ता |
| ८४१ | २ | अथ | 'अथ'- |
| ,, | १६ | कोऽसा | कोऽसौ |
| ८४३ | टि० ३ | वेया | वेयो |
| ८४४ | टि० १ | पूर्वम् | पूर्वम् |
| ८४५ | ८ | ववोव | वोवव |
| ८४६ | २७ | यस्या | यस्यां |
| ८४९ | १ | तदाऽधा | तदाधा |
| ८५० | ७ | सता | सत |
| ८५१ | ३ | संततिति | संतति |
| ,, | टि० १ | मेक्का | मेक्का |
| ८६४ | टिप्पणे पं-१ अत्र त | अत्र जे | |
| ,, | टिप्पणे पं-८ स्थाने त प्रतौ पाठ एवं- | | |
| ८६५ | ५ | कोट्टयाचा० | कोट्टाचा० |